Tilak Maharashtra Vidyapeeth, Poona

THE SRAUTA, PAITṚMEDHIKA AND PARIŚEṢA

# SŪTRAS OF BHARADVĀJA

*Critically Edited and Translated*

*By*

C. G. KASHIKAR

PART I

TEXT




*With the Financial Assistance of*
*The Ministry of Education, Government of India*

VAIDIKA SAMŚODHANA MAṆḌALA

POONA

1964

*Published by :*

N. S. Sontakke and C. G. Kashikar,
Secretaries, Vaidika Saṁśodhana Maṇḍala,
Tilak Vidyapeeth Nagar, Poona 9

Price Rs. 25/-

*First Edition : Copies 750*

*Printed by :*

Pages 1-240 by V. G. Ketkar, M.A.B.T., Navin Samarth Vidyalaya's
Samarth Bharat Press, 41 Budhwar Peth, Poona 2
The remaining pages by S. B. Sardesai, B.A., LL.B.,
Veda-Vidya Mudraṇalaya, 41 Budhwar Peth, Poona 2.

॥ श्रीः ॥

# भारद्वाजश्रौतसूत्रम्

## पैतृमेधिकपरिशेषसूत्राभ्यां सहितम्

आङ्ग्लभाषानुवादेनोपबृंहितं भागद्वयात्मकम्

काशीकरोपाह्वेन गणेशसूनुना चिन्तामणिशर्मणा

संपादितम्

भारतप्रशासनस्य शिक्षामन्त्रालयाल्लब्धेन
अनुदानेन प्रकाशितम्

तत्रायं प्रथमो भागः सूत्रपाठात्मकः



वैदिक-संशोधन-मण्डलम्
पुणें

शाके १८८६

# PREFACE

I have great pleasure to present in the following pages a critical edition of the Śrauta, the Paitṛmedhika and the Pariśeṣa Sūtras attributed to Bharadvāja.

I was attracted towards the study of the Vedic ritualistic literature when the *Vaidika Saṁśodhana Maṇḍala of Poona, with which I have had the privilege* of associating myself for thirty years, undertook the project of compiling and publishing the *Śrautakośa*. Being attached to that department, I had the opportunity to undertake a close study of the various Śrautasūtras. The Adhvaryu's manuals were of course the more prominent, and next to the well known Śrautasūtras of Bodhāyana and Āpastamba belonging to the Taittirīya recension, my attention was drawn to the Bhāradvāja Śrauta Sūtra published by RAGHU VIRA. We had to make a comparative study of this Sūtra, and as a result I began to think that the text as it was published required a fresh study. Consequently I published my studies of some of its portions. The published Sūtra-text was incomplete. I discovered certain manuscripts of the text, not used by RAGHU VIRA, which dealt with the rituals ending with the Jyotiṣṭoma. Enquiries showed that the publication of the remaining portion of the Sūtra-text was not likely to be undertaken by RAGHU VIRA.

So I began to study the Bhāradvāja Śrauta Sūtra in 1949, and even entertained an idea of preparing a new complete edition of the text. However, the work was seriously undertaken in 1956. The scope of the work was further extended by including the study of the Bhāradvāja Paitṛmedhika Sūtra and the Bhāradvāja Pariśeṣa Sūtra, thus covering the available ritual literature of the Bhāradvāja school excluding the *Bhāradvāja Gṛhya Sūtra* which has already been brought out by H. J. W. SOLOMONS (Leyden 1913).

In the Śrauta Sūtra of Bharadvāja presented herein, a significant portion of the Sūtra-text *dealing with the Jyotiṣṭoma is being published for the first time.* The Paitṛmedhika Sūtra and the Pariśeṣa Sūtra of Bharadvāja are also being published here for the first time. An English translation of these Sūtra-texts is given in Part II. The word-index, the Mantra-index and the other indices given at the end of this Part will be found useful for a thorough study of these texts.

A study of the ritual-manuals is no doubt interesting in itself; besides it helps a better understanding of the relevant Mantra and Brāhmaṇa-texts. So far as the study of the Sūtra-texts belonging to the Taittirīya recension is concerned, the Bhāradvāja Sūtra is closely related to the *Sūtra of Bodhāyana* on the one hand and the Sūtras of Āpastamba and Satyāṣāḍha-Hiraṇyakeśin on the other. The Śrauta Sūtra of Bharadvāja contained certain portions which have not become available so far. It is hoped that the lost portions will come to light some day.

I am grateful to the Vaidika Saṁśodhana Maṇḍala, Poona, for having undertaken to publish this work. I express sincere gratitude to the Education Ministry of the Government of India for having given liberal grant towards the publication of this work. For preparing the edition of the Bhāradvāja-texts, I have borrowed manuscripts and transcripts from several Institutions and libraries whose names are mentioned in the Introduction. I express gratitude to the authorities of all of them. I had the opportuniiy of discussing certain portions, particularly from the Pariśeṣa Sūtra, with Vedaratna G.A. KHARE ŚASTRI of Gokarn (N. Kanara) to whom I express my sincere thanks. Thanks are due to Professor R. N. DANDEKAR, Head of the Department of Sanskrit, University of Poona, for having gone through the Introduction and for having made useful suggestions. Shri V. V. BHIDE, my colleague in the *Śrautakośa* department, has helped me in proof-reading. Occasionally I had useful discussions with him. I thank Pandit V. B. BHAGAVAT, Principal, Śrī Balamukund Sanskrit Mahavidyalaya of T. M. Vidyapith, Poona, for having helped me in reading the proofs of the Index of words. The Proprietors of the Samarth Bharat Press and the Veda-Vidya Press of Poona have printed the book with care.

The editor acknowledges his indebtedness to the University of Poona for the grant-in-aid received by him from the University towards the cost of the publication of his book.

Vaidika Saṁśodhana Maṇḍala, Poona,
*Saura Caitra 1, Śaka* 1886
March 21, 1964

C. G. Kashikar

CONTENTS

## भारद्वाजश्रौतसूत्रम्



## भारद्वाजपैतृमेधिकसूत्रम्



## भारद्वाजपरिशेषसूत्रम्

## विस्तृतानुक्रमणी

# भारद्वाजश्रौतसूत्रम्

### दर्शपूर्णमासौ



### अग्न्याधेयम्

वरुणप्रघासपर्व



साकमेधपर्व



शुनासीरीयपर्व



काम्यानि चातुर्मास्यानि



पञ्च सांवत्सरिकाणि



पूर्वप्रायश्चित्तम्



ज्योतिष्टोमः

# शुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६४ | २ | यज्ञायज्ञियं | यज्ञायज्ञीयं |
| १०२ | १९ | पात्रयोर्व्युदूत्य | पात्रयोर्व्युदूत्य |
| ११५ | ८ | संप्रेष्यति | संप्रेष्यति' |
| १३४ | १४ | मानुषः | मानुषाः |
| १३४ | १७ | ” | ” |
| १७१ | २ | ॰निष्क्रामति | ॰निष्क्रामयति |
| १९० | १० | देवता वृकेणा॰ | देवतावृकेणा॰ |
| १९९ | ४ | यतरोऽध्वर्यु॰ | यतोऽध्वर्यु॰ |
| २०० | १० | सहप्रथमौ | सह प्रथमौ |
| २०४ | १८ | प्रतिप्रस्थात्रेणोत्तरम् | प्रतिप्रस्थानेनोत्तरम् |
| २०४ | २१ | देवता वृकेणा॰ | देवतावृकेणा॰ |
| २०८ | १३ | सँस्रावेण | ससँस्रावेण |
| २११ | ६ | धिष्ण्यानां | धिष्णियानां |
| २१४ | ८ | सकृच्छस्तायां | सकृच्छास्तायां |

॥ श्रीः ॥

# प्रास्ताविकम्

अथेदं भरद्वाजीयं श्रौतसूत्रं पैतृमेधिकसूत्रं परिशेषसूत्रं च मन्त्रपदसूच्यादिभिरलंकृतं प्रकाशयितुं प्रमोदते मे चेतः। वैदिकसंशोधनमण्डले पुण्यपत्तनस्थे वेदानुसंधानकार्यं बहुकालं यावत् कुर्वाणेन मया श्रौतकोशसंपादनकार्यवशात् विविधानां श्रौतसूत्राणामध्ययनस्य शोभनावसरो लब्धः। तत्र भित्तिस्थानीययजुर्वेदस्य तैत्तिरीयशाखाया बोधायनादिश्रौतसूत्राणामध्ययनशीलस्य मम नचिरादेव आचार्यधुरीणेन प्रकाशितं भारद्वाजश्रौतसूत्रं दृग्गोचरमभवत्। अपूर्णतया प्रकाशितमिदं सूत्रमंशतोऽपि पुनः संस्कारमर्हतीति मयावलोकितम्। अवशिष्टस्यांशस्य प्रकाशनमप्यावश्यकमासीत्। अन्यकार्यव्यापृतत्वात् आचार्यधुरीणस्य अत्र कर्मणि प्रवृत्तिमनुपलभ्य स्वयमेवेदं कार्यमङ्गीकर्तव्यमिति मया निश्चितम्।

कार्यस्यास्य विशिष्योपक्रमः शाके १८७७ वत्सरेऽभूत्। न केवलं श्रौतसूत्रमेव यावदुपलब्धं प्रकाशनीयम् अपि तु भारद्वाजपैतृमेधिकसूत्रं भारद्वाजपरिशेषसूत्रं च प्रकाशनीयमिति निर्णयः कृतः। भरद्वाजीयं गृह्यसूत्रं हॉलण्डदेशे पूर्वमेव प्रकाशितमासीत्। अतः श्रौतपैतृमेधिकपरिशेषसूत्रेषु प्रकाशितेषु भरद्वाजीयकल्पसूत्रं यावदुपलब्धं प्रकाशितं भवेदिति विचारः स्थिरीभूतः। सत्याषाढसूत्रानुयायिभिः भरद्वाजीयं पितृमेधसूत्रमेव स्वीकृतम्। आपस्तम्बीयानां यद्यपि पितृमेधसूत्रं पृथक् मुद्रितमुपलभ्यते तथापि तस्य पाठः भरद्वाजीयपितृमेधसूत्रेण विपुलं साम्यमावहति। अतः भरद्वाजीयपितृमेधसूत्रपाठस्य गभीरमध्ययनम् आवश्यकमिति मया तदङ्गीकृतम्। परिशेषसूत्रममुद्रितपूर्वं भारद्वाजश्रौतपैतृमेधिकसूत्रयोः परिशेषस्वरूपं परिभाषास्वरूपं च वर्तते।

## लिखितग्रन्थादिसामग्री

श्रौतादिसूत्रपाठनिर्धारणार्थं या लिखितग्रन्थादिसामग्री उपयुक्ता सा अधस्तान्निर्दिश्यते।

### भारद्वाजश्रौतसूत्रम्

लिखितग्रन्थाः

(१) A₁ तञ्जौरिमहाराजासरफोजी–सरस्वतीमहालग्रन्थालयस्थो ग्रन्थः, क्रमाङ्कः २०२७ (ज. ला. संग्रहे २१०), देवनागरीलिपिः, पत्राणि १४९, प्रश्नाः २१–२५

(२) A₂ भाण्डारकर-प्राच्यविद्यासंशोधनमन्दिरस्थः, क्रमाङ्कः ७९ (१८८४-८७),

देवनागरीलिपिः, पत्राणि १४२, शाके १८०८ वत्सरे लिखितः, प्रश्नाः १–१०

(३) $A_3$ वांई (सातारा) प्राज्ञपाठशालाग्रन्थालयस्थः, देवनागरीलिपिः, पत्राणि ८१, प्रश्नाः १–१०

(४) $A_4$ मुम्बापुरीविश्वविद्यालयग्रन्थालयस्थः, क्रमाङ्कः ७५६, देवनागरीलिपिः, पत्राणि १९०, प्रश्नाः १–१०, आचार्यरघुवीरेण $D_2$ संज्ञया निर्दिष्टः ।

(५) $A_5$ पटोदरप्राच्यविद्यामन्दिरस्थः, क्रमाङ्कः ८९४, देवनागरीलिपिः, पत्राणि १०६, प्रश्नाः १–१०

(६) $B_1$ मैसूरुविश्वविद्यालयप्राच्यविद्यासंशोधनमन्दिरस्थः, क्रमाङ्कः बी ११४, आन्ध्रलिपिः, पत्राणि २७८, प्रश्नाः १–१४

(७) $B_2$ होशियारपूर–विश्वेश्वरानन्दवैदिकशोधसंस्थानग्रन्थालयस्थः, क्रमाङ्कः ५५९७, ग्रन्थाक्षरैः तालपत्रेषु लिखितस्य ग्रन्थस्य प्रतिलिपिः, प्रश्नाः १–११; आचार्यरघुवीरेण Gb संज्ञया निर्दिष्टः ।

(८) $B_3$ होशियारपूर–विश्वेश्वरानन्दवैदिकशोधसंस्थानग्रन्थालयस्थः, क्रमाङ्कः ५९८०, ग्रन्थाक्षराणि, तालपत्रात्मको ग्रन्थः, प्रश्नाः १–९, आचार्यरघुवीरेण पठितोऽपि नोपयुक्तः ।

मुद्रितग्रन्थः

R आचार्यरघुवीरेण 'जर्नल ऑफ वैदिक स्टडीज्' संज्ञकायाः पत्रिकायाः भागद्वये प्रकाशितः १९३४–३५ खिस्ताब्दयोः । आदित आरभ्य द्वादशप्रश्नस्य पष्ठकण्डिकाया नवमसूत्रपर्यन्तम् ।

भारद्वाजपैतृमेधिकसूत्रम्

लिखितग्रन्थाः

(१) $T_1$ तञ्जौरमहाराजासरफोजी–सरस्वतीमहालग्रन्थालयस्थः, क्रमाङ्कः बी २८५६ ए (११७७७), देवनागरीलिपिः, पत्राणि १५, पूर्णः, अशुद्धिबहुलः ।

(२) $T_2$ उपर्युक्तग्रन्थालयस्थः, क्रमाङ्कः बी २८५७ (११७७८), देवनागरीलिपिः, पत्राणि १०, पूर्णः, अशुद्धिबहुलः ।

(३) वांई (सातारा) प्राज्ञपाठशालाग्रन्थालयस्थः, देवनागरीलिपिः, पत्राणि १२, आपस्तम्बपितृमेधसूत्रसंज्ञकः ।

(४) भारद्वाजपैतृमेधिकभाष्यम्, तञ्जौरग्रन्थालयस्थः, क्रमाङ्कः बी २८५७ (११७७८), पत्राणि १०–२५

(५) पूर्ववत्, क्रमाङ्कः बी ३८५६ बी, देवनागरीलिपिः, पत्राणि १५–३८

(६) आहिताग्निसंस्कारप्रयोगः, तञ्जौरग्रन्थालयस्थः, क्रमाङ्कः बी ९५१९ (११७७९), पत्राणि १०

(७) आपस्तम्बपितृमेधः अपरप्रयोगः तञ्जौरग्रन्थालयस्थः, क्रमाङ्कः बी ९५०१, पत्राणि १२

मुद्रितग्रन्थाः

(१) Ap आपस्तम्बपितृमेधसूत्रं गार्ग्यगोपालयज्वनः कपर्दिस्वामिनश्च भाष्याभ्यां युतं कुम्भकोणे शारदाविलासमुद्रणालये श्री. टी. एम्. नारायणशास्त्रिभिः १९१६ खिस्ताब्दे प्रकाशितं ग्रन्थाक्षरनिबद्धम्।

(२) HA हिरण्यकेशिपितृमेधसूत्रं महादेवकृतवैजयन्तीटीकया समेतं आनन्दाश्रमे पुण्यपत्तनस्थे १९३२ खिस्ताब्दे सत्याषाढसूत्रेण सह प्रकाशितम्।

(३) HC आचार्यकलान्त्महोदयेन 'पितृमेधसूत्राणि' इतिसंज्ञके ग्रन्थे लाइप्झिग् नगरे १८९६ खिस्ताब्दे प्रकाशितं हिरण्यकेशिपितृमेधसूत्रम्।

## भारद्वाजपरिशेषसूत्रम्

लिखितग्रन्थाः

(१) Pb पुण्यपत्तनस्थ–भारतेतिहाससंशोधकमण्डलग्रन्थालयस्थः, क्रमाङ्कः ३६, १०९९; देवनागरीलिपिः, पूर्णः।

(२) Bm मुम्बापुरीविश्वविद्यालयग्रन्थालयस्थः, क्रमाङ्कः ७५७, देवनागरीलिपिः, पूर्णः।

(३) Br बडोदरप्राच्यविद्यामन्दिरस्थः, क्रमाङ्कः ३९०, देवनागरीलिपिः, पूर्णः।

(४) C कलिकाता–एशियाटिकसोसायटीग्रन्थालयस्थः, क्रमाङ्कः ३ एफ् २५१, १८२ सूत्रादारभ्यान्तं यावत्।

(५) Pa पुण्यपत्तनस्थ-आनन्दाश्रमग्रन्थालयस्थः, क्रमाङ्कः ६५ ९, देवनागरी लिपिः, पत्राणि १२, पूर्णः।

तत्र श्रौतसूत्रपाठविनिश्चयार्थम् अष्टौ लिखितग्रन्थाः संपादिताः। तेषु पञ्च देवनागरीलिपिबद्धाः त्रयश्चेतरलिपिबद्धाः। ग्रन्थादिदाक्षिणात्यलिपिपुस्तकस्थः पाठः देवनागरीपाठापेक्षया शुद्धतरः समीचीनतरश्च वर्तते यतः भारद्वाजशाखानुयायिनः प्रायेण दक्षिणभारते न्यवसन्। भारद्वाजकल्पस्य आपस्तम्बकल्पेनातीव साम्याद्भारद्वाजशाखाया अध्ययनपरंपरा खण्डिता। तञ्जौर–सरस्वतीमहालग्रन्थालयस्थो लिखितग्रन्थो यद्यपि देवनागरीलिपिबद्धः तथापि सः दाक्षिणात्यलिपिग्रन्थमूलक एव। अत्रोपयुक्तेषु लिखितग्रन्थेषु केचन आचार्यरघुवीरेण

उपयुक्तपूर्वाः केचन अनुपयुक्ताः। तञ्जौरपुस्तकं वर्जयित्वा अन्येषां देवनागरीलिखितग्रन्थानां
पाठः प्रायः समानः। अयमाचार्यरघुवीरस्य अभिमततरः। किंतु तदपेक्षया दाक्षिणात्यलिखित-
ग्रन्थपाठः समीचीनतर इति ममाभिप्रायः। एको दाक्षिणात्यलिपिलिखितग्रन्थोऽलाभकर
इति मत्वा आचार्यरघुवीरेण न स्वीकृतः। परं तत्र केचन समीचीनाः पाठा उपलब्धाः।
लिखितग्रन्थेषूपलब्धाः प्रायः सर्वे पाठभेदाः प्रतिपृष्ठं टिप्पणीरूपेण प्रदर्शिताः। तेषां
तुलनया स्वीकृतपाठस्य समीचीनत्वमन्यथाभावं च परीक्षितुं सुशकम्।

श्रौतपैतृमेधिकपरिशेषसूत्राणां लिखितग्रन्थोपलब्धेः सूत्रपाठनिर्धारणस्य सुकरत्वेऽपि
क्वचन पाठाभ्यूहनं कर्तव्यमापतितम्।

एतेषां सूत्रग्रन्थानां कर्तुर्नाम भरद्वाज उत भारद्वाज इति विषये विप्रतिपत्तिर्दृश्यते।
यतः आपस्तम्बश्रौतसूत्रभाष्यकारो धूर्तस्वामी, एतद्भाष्यवृत्तिकारो रामाग्निचित्, सत्याषाढ-
सूत्रस्य वैजयन्तीसंज्ञकायाः टीकायाः कर्ता महादेवः, एतत्सूत्रटीकाकारो गोपीनाथः, बोधायन-
श्रौतसूत्रस्य अग्निष्टोमचन्द्रिकाटीकायाः कर्ता इत्येतैः भरद्वाज इति संज्ञया स व्यवहृतः।
तथा च आपस्तम्बश्रौतसूत्रटीकाकारो रुद्रदत्तः, बौधायनश्रौतसूत्रस्य सुबोधिनीटीकाकारो
महादेवो वाजपेयी, सत्याषाढसूत्रटीकाकारो वाञ्छेश्वरः दण्डवती महादेवश्च इत्येतैः भारद्वाज
इति तस्य संज्ञा कृता। यतः एतेषु प्राचीनतमो धूर्तस्वामी भरद्वाज इति संज्ञया तं व्यवहरति
तस्मात् सैव संज्ञा अस्माभिरपि स्वीकृता। अत्रेदमप्यवधेयं यद् भारद्वाजगृह्यसूत्रे (३.११)
'कण्वाय बोधायनाय भरद्वाजाय सूत्रकारायापस्तम्बाय' इति सूत्रे भरद्वाज इति संज्ञयैव सूत्र-
कारोऽप्युदाहृत इति।

आपस्तम्बसूत्रानुसारिभिः भारद्वाजपैतृमेधिकसूत्रमेव स्वीकृतम्। अत उत्तरकालीनैः गार्ग्यगोपालयज्वसदृशैः टीकाकारैस्तदापस्तम्बीयपितृमेधसूत्रत्वेन परिगृह्य आपस्तम्बश्रौतसूत्रस्य ३१–३२ प्रश्नाविति तत् परिगणितम्। कपर्दिस्वामिनां पितृमेधसूत्रभाष्यं मुद्रितमस्ति। तदापस्तम्बीयमित्युच्यते। किंतु तत्सूत्रस्य पटलसंज्ञकानां प्रकरणानामन्तेषु 'भारद्वाजसूत्रे' इत्येवं निर्देशो दृश्यते। क्वचित् आपस्तम्बपितृमेधसूत्रं भारद्वाजपैतृमेधिकसूत्राद्भिन्नम्। एतादृशेषु स्थलेषु कपर्दिभाष्यं भारद्वाजपैतृमेधिकसूत्रपाठमेवानुसरतीति स्पष्टम्। भारद्वाजापस्तम्बपितृमेधसूत्रे पञ्चसु पटलेषु विभिन्ने। किंतु एतेषु पटलेषु प्रथमप्रश्नस्य द्वादश कण्डिकाः द्वितीयप्रश्नस्य च पञ्च कण्डिका अन्तर्भवन्ति। द्वितीयप्रश्नस्यावशिष्टाः सप्त कण्डिका बहिष्कृताः। अतः मूलतो भरद्वाजेन विरचितस्य पितृमेधसूत्रस्य व्याप्तिः प्रथमः प्रश्नः द्वितीयस्य च पञ्च कण्डिका इत्येतावती आसीत्। कालान्तरेण सप्त कण्डिकास्तत्र समावेशिता इति तर्कयितुं युक्तम्। तैत्तिरीयशाखाभाष्ये सायणाचार्यैः आपस्तम्बश्रौतसूत्राणि नियतमुद्धृतानि वर्तन्ते। तैत्तिरीयारण्यकान्तर्गतानां पितृमेधमन्त्राणां भाष्ये तु तैः भारद्वाजपैतृमेधिकसूत्राण्येवोद्धृतानि। तैत्तिरीयारण्यकस्य षष्ठप्रपाठकस्य प्रथमानुवाकस्य भाष्ये तैः स्पष्टमुक्तम्—"तेषां च पितृमेधमन्त्राणां विनियोगो भारद्वाजकल्पे बौधायनकल्पे चाभिहितः।" 'ब्राह्मण एकहोता' (तैआ ३.७) इति मन्त्रस्य भाष्ये तैरुक्तम्—"अनन्तरभाविनोऽनुवाकस्य चातुर्मास्येषु केशनिवर्तनेषु तद्दत्तं तत्सत्यमिति जपित्वा पश्चाज्जपमापस्तम्ब आह ब्राह्मण एकहोतेति चानुवाकमिति। तथा ब्रह्ममेधेऽनुपद्रवतोऽजस्यानुमन्त्रणे विनियोगं भरद्वाज आह ब्राह्मण एकहोतेति चेति।" यदि सायणाचार्याणामापस्तम्बपितृमेधसूत्रस्य पृथग्भावोऽभिप्रेतोऽभविष्यत् तर्हि तैः उभयत्रापि आपस्तम्बीयत्वेनैव निर्देशः कृतोऽभविष्यत्। अन्त्येष्टिप्रयोगेषु पितृमेधसूत्रस्य भरद्वाजीयत्वेनैव निर्देशः कृतो दृश्यते। तथा च भास्करभट्टोऽन्त्येष्टिपद्धतेरादौ—

> भरद्वाजकृतं सूत्रं तद्भाष्यं कल्पकारिकाः।
> सुविलोक्यानाहिताग्नेः समन्त्रं पैतृमेधिकम्॥
> कृतिः स्फुटतरा सेयं ज्ञेया तदनुसारिणी।
> आपस्तम्बैरपि ग्राह्यं नान्यत् सूत्रं हि विद्यते॥

अन्तेऽपि—

> इति श्रीमद्भारद्वाजकृतं यदेतत् कल्पाख्यसूत्रं जगति प्रसिद्धम्।
> ग्राह्यं तदन्त्येष्टिविधौ सदापस्तम्बैः...इत्यादि॥

रुद्रदत्तेनापस्तम्बश्रौतसूत्रटीकायां वारंवारं भारद्वाजश्रौतसूत्रमुद्धृतम्। तथा नवमप्रश्नस्य प्रायश्चित्तविषयकस्य टीकायां भरद्वाजपैतृमेधिकसूत्रमप्युद्धृतम्। अतः तत्समये पितृमेधसूत्रं भरद्वाजीयमित्येव प्रतीतिरासीदिति स्पष्टम्।

सत्याषाढीयैरपि भारद्वाजपितृमेधिकसूत्रमेव स्वीकृतमित्यत्रेदं प्रमाणम्। सत्याषाढसूत्रस्य वैजयन्तीटीकाया आदौ टीकाकारेण महादेवेनोक्तम्—"इदं हि सप्तविंशतिप्रश्नात्मकं सत्याषाढहिरण्यकेशिसूत्रम्।" अन्तिमौ द्वौ प्रश्नौ धर्मसूत्रमित्युक्त्वा "पितृमेधस्तु भारद्वाजीयो मुनिना परिगृहीतः" इति स्पष्टमुक्तम्। सत्याषाढपितृमेधसूत्रस्य टीकाया आदौ टीकाकारेण दण्डवती–महादेवदीक्षितेन सूत्रस्यास्य भारद्वाजीयत्वं स्पष्टमेवोक्तम्।

## भारद्वाजसूत्रोद्धाराः

प्रायेण श्रौतसूत्राणां टीकाकारा अन्यसूत्रग्रन्थेभ्यः सूत्राण्युदाहरन्ति। न केवलं स्वशाखीयेभ्यः सूत्रग्रन्थेभ्यः अपि तु शाखान्तरीयसूत्रग्रन्थेभ्योऽपि सूत्राणि तैरुदाहृतान्युपलभ्यन्ते। क्वचित् स्वमतदर्ढनार्थं क्वचिच्च मतान्तरप्रदर्शनार्थं सूत्राण्युदाहृतानि भवन्ति। क्वचित् यथाशब्दं सूत्राण्युदाह्रियन्ते क्वचित् साररूपेण। उद्धृतसूत्रपाठः कदाचित् मूलपाठं समन्वेति कदाचिन्न। कदाचित् कस्यचित् सूत्रग्रन्थस्य विविधाः पाठसंप्रदाया भवन्ति तत्र कश्चनैकः संप्रदाय उद्धृतसूत्रेषु दृश्यते। यथा तथा वा भवतु उद्धृतसूत्रपाठानां संग्रहणं सूत्रपाठनिर्धारणार्थमंशतोऽपि सहायकं भवति। एवंरूपाः परिश्रमाः कैश्चन विद्वद्भिः पूर्वं कृता वर्तन्ते। आचार्यरघुवीरेण केचन भारद्वाजसूत्रोद्धारा आपस्तम्बसत्याषाढसूत्रटीकाकृद्भिः धृताः संगृहीताः। परं तदपेक्षया बहुतराणि भारद्वाजसूत्रवाक्यानि आपस्तम्बादिसूत्राणां टीकाकृद्भिरुद्धृतानि प्रत्यक्षं परोक्षं वा तत्र तत्रोपलभ्यन्ते।

अधोलिखिताभ्यष्टीकाभ्य उद्धृतानि भारद्वाजसूत्रवाक्यानि सूत्रपाठस्याधस्तात् टिप्पणीरूपेण प्रदत्तानि वर्तन्ते—

( १ ) आपस्तम्बश्रौतसूत्रस्य रुद्रदत्तटीका १–१५ प्रश्नेषु। अग्रिमा टीका नोपलभ्यते।

( २ ) धूर्तस्वामिभाष्यम् आपस्तम्बश्रौतसूत्रस्य १–८ प्रश्नानाम्। ९–१० प्रश्नयोर्भाष्यमिदानीं प्रकाशितम्। तत्रोद्धृतानि सूत्रवाक्यान्यन्यत्र पृथङ्निर्दिष्टानि। १६–१७ प्रश्नयोः धूर्तस्वामिभाष्यं वै. सं. मं. ग्रन्थालयस्थे वाजपेययाजि–बापटधुंडिराजदीक्षितानां लिखितग्रन्थे दृष्टम्।

( ३ ) आपस्तम्बीयधूर्तस्वामिभाष्ये रामाग्निचित्कृता वृत्तिः १–१० प्रश्नेषु।

( ४ ) बौधायनश्रौतसूत्रे महादेववाजपेयिनः सुबोधिनीटीका १–५ प्रश्नेषु। नेयं मुद्रिता। तत्रतत्रोपलभ्यान् लिखितग्रन्थान् पठित्वा सूत्राणि संकलितानि।

( ५ ) अग्निष्टोमचन्द्रिका बौधायनश्रौतसूत्रे ६–८ प्रश्नेषु। लिखितग्रन्थोपलभ्या।

(६) यज्ञेश्वरदीक्षितकृतः कर्मान्तपरिभाषादिसंग्रहः, तज्ञौग्रन्थाख्यस्य: लिखितग्रन्थरूपः।

(७) महादेवभट्टस्य वैजयन्तीटीका सत्याषाढसूत्रे १–६ प्रश्नेषु।

(८) गोपीनाथभट्टस्य ज्योत्स्नाटीका सत्याषाढसूत्रे ७–१० प्रश्नेषु।

(९) वाञ्छेश्वरसुधीकृता टीका सत्याषाढसूत्रे १–१०,२४ प्रश्नेषु। तत्र २४ प्रश्नीया टीका आनन्दाश्रममुद्रितपुस्तके प्रकाशिता। शिष्टा लिखितग्रन्थरूपा।

(१०) मातृदत्ताचार्यस्य टीका सत्याषाढसूत्रस्य गृह्यसूत्रांशे।

(११) तैत्तिरीयशाखायाः सायणभाष्यम्।

(१२) ऐतरेयब्राह्मणस्य सायणभाष्यम्।

(१३) आत्मानन्दस्य अस्यवामीयसूक्तभाष्यम्।

(१४) श्रीनिवासमखिकृता प्रायश्चित्तसुबोधिनी लिखितग्रन्थरूपा।

किंचन भारद्वाजसूत्रमनेकटीकासूद्धृतमुपलभ्यते। इतोऽप्यधिकेषु सूत्रटीकाग्रन्थेषु प्रयोगग्रन्थेषु चोद्धृतानि भारद्वाजसूत्राण्युपलब्धुं शक्यम्। टीकाकृद्भिर्यानि भारद्वाजसूत्राण्युद्धृतानि तेषु न केवलं भारद्वाजश्रौतसूत्रग्रन्थान्तर्गतानि अपि तु पैतृमेधिकपरिशेषसूत्रग्रन्थयोरपि सूत्राण्युद्धृतानि दृश्यन्ते। तेन सर्वेरामेषां सूत्राणां भरद्वाजीयत्वं टीकाकृद्भिरभ्युपगतमिति स्पष्टं प्रतीयते। एकेनैव टीकाकृता एकत्र श्रौतसूत्रमन्यत्र पैतृमेधिकसूत्रं ततोऽप्यन्यत्र परिशेषसूत्रमुद्धृतमिति बहुश उपलभ्यते। एकस्मिन्नेव स्थले श्रौतसूत्रं परिशेषसूत्रं चेत्युभयमप्युद्धृतमित्यपि दृश्यते। भारद्वाजगृह्यसूत्रं यत्र क्वाप्युद्धृतं न दृष्टम्। अत्रेदं चिन्तनीयं यद् भरद्वाजीयत्वेनोद्धृतानि प्राय उपलब्धभरद्वाजीयसूत्रविषयान्तःपातीनि कानिचन सूत्राणि भरद्वाजीयसूत्रेषु नोपलभ्यन्त इति। तेषां भरद्वाजीयत्वं न शङ्कनीयं बहुभिष्टीकाकृद्भिः केषांचन सूत्राणां भरद्वाजीयत्वेन निर्दिष्टत्वात्। भारद्वाजसूत्राणां ये अंशा इदानीमप्यनुपलब्धाः तद्गतानि तानि स्युरित्यभ्यूहितुं शक्यम्। कानिचन उद्धृतानि सूत्राण्येतादृशान् विषयानवलम्बन्ते ये उपलब्धश्रौतसूत्रे न सन्ति। अतः तानि सूत्राणि भारद्वाजसूत्रे नोपलभ्यन्त इति स्वाभाविकमेव। तेभ्यो वचनेभ्यस्तर्कयितुं शक्यं यदिदानीमुपलभ्यमानं भारद्वाजश्रौतसूत्रं न संपूर्णम् अपि तु केचन तस्यांशाः प्रचारदौर्बल्याद्वा अन्यस्मात् कस्माच्चित् कारणाद्वा नष्टा इति। यद्यपि केचन टीकाकृद्भिः भरद्वाजीयवचनानि परंपरयोद्धृतानि संभाव्यन्ते तथापि बहुभिः तानि साक्षादुद्धृतानीति निर्णेतुं योग्यम्। सायणाचार्यैः तैत्तिरीयारण्यकभाष्ये भरद्वाजीयपितृमेधसूत्राणि बाहुल्येनोद्धृतानि। तैत्तिरीयसंहिताब्राह्मणयोर्भाष्ये तैः विशेषतः आपस्तम्बश्रौतसूत्रवचनानि क्वचित् बौधायनश्रौतसूत्रवचनानि चोद्धृतानि। भरद्वाजसूत्रं विरलमेव तैरुद्धृतम्। आपस्तम्बीये रुद्रदत्तभाष्ये बहूनि भरद्वाजीयवचनान्युद्धृतान्युपलभ्यन्ते। परं षोडशप्रभृतिषु प्रश्नेषु तद्भाष्यं नोपलभ्यते।

भारद्वाजश्रौतसूत्रस्य आपस्तम्बश्रौतसूत्रस्य च यथा विधिविधाने विपुलं साम्यं तथा भाषाशैलीविषयेऽपि।

## भारद्वाजसूत्रं तैत्तिरीयशाखा च

भारद्वाजश्रौतसूत्रं कृष्णयजुर्वेदीयतैत्तिरीयशाखामवलम्बते यतस्तच्छाखायाः संहितायाः ब्राह्मणात् आरण्यकाच्चोद्धृता बहवो मन्त्रास्तत्र विनियुक्ताः। अस्याः शाखाया रचनाक्रमः सूत्ररचनाकाले सुदृढ आसीदित्यनुमीयते यतः केषुचित् स्थलेषु शाखीया मन्त्रा अनुवाकरूपेण अनुवाकशेषरूपेण चोद्धृता उपलभ्यन्ते। क्वचन '... इति प्रतिपद्य... इत्यन्तेन' इति रीत्यापि मन्त्रा उद्ध्रियन्ते। 'इति विज्ञायते' इति निर्देशेन बहुत्र ब्राह्मणवाक्यान्युद्धृतानि भवन्ति तेषु कानिचन तैत्तिरीयशाखागतानि भवन्ति।

## भारद्वाजसूत्रं शाखान्तराणि च

कृष्णयजुर्वेदस्य शाखान्तरेभ्यः मैत्रायणीकाठकादिसंहिताभ्योऽपि उद्धृता ऋचो यजूंषि च भारद्वाजसूत्रे तत्र तत्रोपलभ्यन्ते। अस्य ग्रन्थस्यान्ते मन्त्रसूची मुद्रिता तदवलोकनेनेदं स्पष्टं भवेत्। मैत्रायणीसंहितायाश्चत्वारिंशदधिका मन्त्राः काठकसंहितायाः उपचत्वारिंशाः वाजसनेयिसंहितायाः उपविंशाः शौनकीयाथर्ववेदाच्च चत्वार इत्येवंप्रकारेण शाखान्तरेभ्यो मन्त्रा उद्धृता दृश्यन्ते। ब्राह्मणग्रन्थेषु केवलमेकमेव कौषीतकिब्राह्मणमुल्लिखितं भवति। एतदपेक्षया आपस्तम्बश्रौतसूत्रेऽधिकानि ब्राह्मणवचनानि निर्दिष्टानि। भारद्वाजसूत्रस्यान्ते ग्रन्थकर्तॄणां नामसूची वर्तते। गार्बेसंपादिते आपस्तम्बश्रौतसूत्रेऽपि तादृशी सूची मुद्रितास्ति। तयोस्तुलनयेदं स्पष्टं भवेत्। अथैतदवधारणीयं यदापस्तम्बश्रौतसूत्रे वाजसनेयकमतं प्रायः पञ्चस्थलेषु निर्दिष्टम्, भारद्वाजश्रौतसूत्रे तु नैकवारमपि। भारद्वाजापस्तम्बश्रौतसूत्रयोः यथा तैत्तिरीयशाखीया मन्त्रा विनियुक्ताः तथा मैत्रायणीकाठकवाजसनेयसंहिताभ्योऽपि केचन मन्त्रा विनियुक्ताः। तत्र ये मन्त्रा आपस्तम्बश्रौतसूत्रे विनियुक्तास्त एव भारद्वाजश्रौतसूत्रेऽपि। किंतु पञ्चषेषु स्थलेषु यत्रापस्तम्बश्रौतसूत्रे तैत्तिरीयशाखीया वाजसनेयशाखीया वा मन्त्रा विनियुक्तास्तत्र भारद्वाजश्रौतसूत्रे मैत्रायणीसंहितान्तर्गताः काठकसंहितान्तर्गता वा मन्त्रा विनियुक्ता दृश्यन्ते।

च तैत्तिरीयशाखीयाविति वक्तुं युक्तम्। अनयोर्मतानि विविधेषु ग्रन्थेषूद्धृतानि न समानं विषयमनुबध्नन्ति। ब्राह्मणग्रन्थेषु विधिविधानं प्रायो न विस्तरेण क्रियते। अनुष्ठानविनिश्चयार्थं वारंवारमूहः कर्तव्यो भवति। एतादृशेषु स्थलेषु मतभेदाः संभवन्ति। क्वचन एतयोर्मतानि शाखान्तरीयवचनमवलम्बन्ते। एतयोर्मतयोः परस्परतुलनायां कृतायां आश्मरथ्यमतं परंपरानुसारि आलेखनमतं तु सौकर्यानुसारीति सामान्यतो वक्तुं शक्यते। अत एव प्राय आश्मरथ्यमतस्य निर्देशः प्रथमम् आलेखनमतस्य च तदनन्तरं क्रियते।

आश्मरथ्यालेखनयोरैतिह्ये विचार्यमाणे बोधायनप्रवरसूत्रे वसिष्ठगोत्रीये कुण्डिनां गणे अश्मरथाः तथा च भृगुगोत्रीये वत्सगणे आलेखना निर्दिष्टाः। कात्यायनप्रवरसूत्रानुसारेण आश्मरथ्याः विश्वामित्रगोत्रेऽन्तर्भूताः। आश्मरथ्यालेखनावाचार्यौ वसिष्ठभृगुगोत्रीयाविति यद्यभ्युपगम्येत, तर्हि वैदिकधर्मप्रशासने तयोः प्राधान्यं स्पष्टं प्रतीयेत। तयोः भिन्नानि मतानि भारद्वाजापस्तम्बसूत्रयोः विविधान् विषयाननुबध्नन्तीति पूर्वमेवोक्तम्। यदि समानं विषयमेवाधिकृत्य तयोर्मतभिन्नत्वमभविष्यत् तर्हि तदेवाचार्यद्वयं तेषु तेषु सूत्रेषूल्लिखितमिति तर्कः प्रतिष्ठितोऽभविष्यत्। तादृशी स्थितिर्नास्ति। अतः भिन्नेषु सूत्रेषु नैके आश्मरथ्या नैके आलेखनाश्च निर्दिष्टा इत्यूहनीयं भवति। तत्तेषां सूत्राणां रचनासमये ययोराश्मरथ्यालेखनयोर्मतमतान्तराणि ख्यातानि तानि तैस्तैः सूत्रकारैरुद्धृतानि भवेयुः। भारद्वाजापस्तम्बसूत्रयोर्विभिन्नकालविरचितत्वात्तस्य तस्य सूत्रकारस्य समये विद्यमानयोराचार्ययोर्मतान्तराणि तत्रोद्धृतानीति वक्तुं योग्यम्। भारद्वाजपरिशेषसूत्रेऽप्येतस्याचार्यद्वयस्य मतानि निर्दिष्टानि। तत्रापीयमेव स्थितिः।

भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरेण प्रकाशितस्य महाभारतस्य प्रधानसंपादकैः **डॉ. वि. स. सुखटणकरमहोदयैः** महाभारतरचनाविषय इदमुक्तं यत् भारतस्य महाभारतरूपेण संस्करणं भृगुकुलोत्पन्नैः कृतमिति। यद्यपि वैदिकसाहित्ये भृगवो निर्दिष्टाः तथापि तत्र तेषां तादृशं प्राधान्यं न दृश्यते यादृशं महाभारतसंस्करणे दृश्यते इत्यपि तेषामभिप्रायः। किंतु भृगूणां प्राधान्यं न महाभारते आकस्मिकतयाविर्भूतम्। अपि तु वेदकालमारभ्य महाभारतरचनाकालं यावत्तेषां वैदिकधर्मप्रशासने प्राधान्यं संततं दृश्यते। यज्ञेषु प्रधाना ऋत्विजो *विशिष्टगोत्रोत्पन्नाः स्युरिति श्रौतसूत्रकाराणामुपदेशः। तत्राध्वर्युराङ्गिरसः।* अङ्गिरसां भृगूणां च निकटतरः संबन्धः। चतुरः प्रधानान् ऋत्विजो विहायान्ये ऋत्विजोऽपि भार्गवा आङ्गिरसा वा स्युः। विशिष्टास्विष्टिषु होतापि भार्गवो भवति। राजसूयाङ्गभूते दशपेयेऽपि भार्गवो होता भवति। एवमध्वर्योर्होतुश्च प्रयोगे भार्गवाङ्गिरसानामधिष्ठानं तेषां धर्मशासनविषये राजकीयशासनविषये च प्राधान्यं द्योतयति। एवं भार्गवाणां प्राधान्यं न केवलं महाभारते अपि तु वेदेऽपि दृश्यते।

## बौधायनसूत्रं भारद्वाजसूत्रं च

तैत्तिरीयशाखायाः षट् सूत्राणि वर्तन्ते बौधायनभारद्वाजापस्तम्बसत्याषाढवैखानसवाधूलसंज्ञकानि। सत्याषाढसूत्रस्य वैजयन्तीटीकाकारो महादेवो ग्रन्थारम्भे षट् सूत्रकाराननेनैव क्रमेण प्रणमति। तत्र वाधूलसूत्रं वर्जयित्वा अन्येषां सूत्रग्रन्थानामैतिहासिकरीत्या स एव कालक्रमः। बौधायनसूत्रं प्राचीनतमम्। बौधायनधर्मसूत्रे (२.५.९–१४) ब्रह्मयज्ञाङ्गभूततर्पणे 'काण्वं बोधायनं प्रवचनकारम् आपस्तम्बं सूत्रकारं सत्याषाढं हिरण्यकेशिनम्' इति क्रमेण सूत्रकारा निर्दिष्टाः। बौधायनगृह्यसूत्रे (४.८) सर्पबलिप्रकरणे एतेषां सूत्रकाराणामनेनैव क्रमेण निर्देश उपलभ्यते। बौधायनश्रौतसूत्रं प्रवचनरूपं वर्तते। तस्य भाषा ब्राह्मणग्रन्थभाषया साम्यमावहति। सूत्रेऽस्मिन् यागविधिर्विस्तरेणोपवर्णितः। मन्त्राः सकलपाठेनोद्धृताः। तैत्तिरीयशाखीयानि ब्राह्मणवाक्यानि 'अथ वै भवति' इत्युपक्रमेणोद्ध्रियन्ते। द्वैधकर्मान्तप्रायश्चित्तशुल्बप्रवरसूत्रांशैरुपबृंहितमिदं सूत्रम्।

भारद्वाजश्रौतसूत्रे केषुचन विषयेषु बौधायनश्रौतसूत्रेण समानं केषुचिच्च विषमम्। भारद्वाजश्रौतसूत्रे यागविधिर्न तावता विस्तरेणोपवर्णितो यावता बौधायने। मन्त्रा न सकलपाठेनोद्धृताः। 'विज्ञायते' इत्युपक्रमेणोपसंहारेण वा ब्राह्मणवचनान्युद्धृतानि। बौधायनभारद्वाजसूत्रयोर्विषयक्रमो न सर्वथा समानः। भारद्वाजश्रौतसूत्रे प्रायश्चित्तानि ज्योतिष्टोमसूत्रात् प्रागुपवर्णितानि बौधायने तु परिशिष्टस्वरूपे प्रश्ने। बौधायने प्रवर्ग्यसूत्रमग्निष्टोमसूत्रानन्तरं प्रदत्तं भारद्वाजे तु ज्योतिष्टोमसूत्रमध्य एव दृश्यते। अस्मिन् विषये यद्वक्तव्यं तदग्रे वक्ष्यामः। बौधायनसूत्रे विनियोजकवाक्यं मन्त्रमनुसरति, भारद्वाजे तु मन्त्रो विनियोजकवाक्यम्। बौधायने परिभाषाप्रकरणं न विद्यते। द्वितीयप्रश्ने कर्मान्तसूत्रारम्भे च कथनाशस्तस्वरूपो विद्यते। भारद्वाजेऽपि एतत्प्रकरणं पृथक्त्वेन नास्ति। प्रथमपञ्चमप्रश्नेषु प्रश्नेषु कानिचन सूत्राणि परिभाषारूपाण्युपलभ्यन्ते। बौधायने केचन ब्राह्मणग्रन्था निर्दिष्टाः न ते भारद्वाजे। बौधायनद्वैधसूत्रे केषांचन आचार्याणां मतान्तराणि प्रस्तुतानि। तेषां नैकोऽपि भारद्वाजे निर्दिष्टो वर्तते। एवमेव ये आचार्याः भारद्वाजे निर्दिष्टाः न ते बौधायने। यद्यपि भारद्वाजसूत्रं प्रवचनमिति संबोद्धुमसंभवं तथापि प्रवचनत्वद्योतकानि कानिचित् लक्षणानि तत्रोपलभ्यन्ते। तथा च इदमः प्रयोगो बौधायनवद् भारद्वाजेऽपि दृश्यते। 'पशुं विशास्ति' 'पयाँसि विशास्ति' इति प्रयोग उभयोरुपलभ्यते। आपस्तम्बे तु 'अध्वर्युः संप्रेष्यति' इति। अन्येऽपि केचन प्रयोगविशेषा बौधायनभारद्वाजयोः समाना उपलभ्यन्ते ये आपस्तम्बे न दृश्यन्ते।

## भारद्वाजसूत्रमापस्तम्बसूत्रं च

इतरश्रौतसूत्रापेक्षया भारद्वाजापस्तम्बश्रौतसूत्रयोः दृढतरं साम्यं वर्तते। नेदं साम्यं

केवलं विध्युपदेशे अपि तु रचनायामपि। उभयोः सूत्रग्रन्थयोः बहूनि सूत्राणि शब्दशः समानानि वर्तन्ते अन्यान्यंशतः भिद्यन्ते। उभयोः विषयानुक्रमः प्रायः समानः। भरद्वाजीये अग्न्युपस्थानपूर्वकमग्निहोत्रमुपवर्णितम्, आपस्तम्बीये त्वग्निहोत्रपूर्वकमग्न्युपस्थानमुपवर्णितम्। भरद्वाजीये यत्र दर्शपूर्णमासयोरग्निहोत्रस्य च प्रायश्चित्तानि परिगणितानि तत्रापस्तम्बीये निरूढपशोरप्युक्तानि। आपस्तम्बीये दशमादित्रयोदशान्तेषु प्रश्नेष्वग्निष्टोम उपवर्णितः चतुर्दशे च उक्थ्यषोडश्यतिरात्राप्तोर्यामाणां विशेषाः उक्ताः। भरद्वाजीये तु दशमादिचतुर्दशान्तेषु प्रश्नेषु ज्योतिष्टोमस्य विधिः प्रतिपादितः। उक्थ्यादीनां विशेषास्तत्रतत्रैवोक्ताः।

प्रायः सर्वेषु आध्वर्यवसूत्रेषु प्रवर्ग्यानुष्ठानं पृथक् प्रश्न उपपादितं वर्तते। भारद्वाजश्रौतसूत्रे तु एकादशः प्रवर्ग्यप्रश्नः ज्योतिष्टोमप्रकरणान्तर्गतो दृश्यते। परं सप्रवर्ग्यज्योतिष्टोमप्रयोगस्य दशमैकादशप्रश्नयोश्च तुलनायां कृतायामिदं स्पष्टं भवति यत् प्रवर्ग्यप्रश्न इतराध्वर्यवसूत्रवत् भरद्वाजीयेऽपि मूलतो ज्योतिष्टोमप्रकरणोत्तरं पृथग्रूपेण वर्तमान आसीत्। येन केनापि प्रयोगसौकर्यार्थं दशमप्रश्नोत्तरं स्थापितः अग्रिमैर्लिपिकारैस्तत्रैव निवेशित इति।

सूत्ररचनायां यथा बौधायनभारद्वाजयोर्भेदः तथा भारद्वाजापस्तम्बयोरपि। भारद्वाजसूत्रे प्रथमं विधानं ततश्च मन्त्रः। आपस्तम्बे तु प्रथमं मन्त्रः ततश्च विधानम्। उभाभ्यामपि सूत्रकाराभ्यां स्वकीयमतोपबृंहणार्थं वा मतान्तरप्रदर्शनार्थं वा स्वशाखीयानि शाखान्तरीयाणि वा वचनान्युद्धृतानि। तत्रापस्तम्बसूत्रे वचनोद्धारोऽधिकतरो दृश्यते। उभाभ्यामपि 'विज्ञायते' इतिशब्दपुरःसरं ब्राह्मणवचनान्युद्धृतानि। तेषु कानिचन वचनानि यत्र कुत्रापि ब्राह्मणग्रन्थेषु नोपलभ्यन्ते। वाजसनेयकमतमापस्तम्बीये वारंवारं प्रदर्शितम्। भारद्वाजे नैकवारमपि। उभयोः सूत्रग्रन्थयोर्निकटतमसंबन्धे इदमप्येकं प्रमाणं भवितुमर्हति यदुभयोरपि आश्मरथ्यालेखनयोराचार्ययोर्मतानि तत्र तत्र प्रदर्शितानि। उभयोरपि किमपि स्वरूपसामान्यं दृश्यते। तथा च 'तत्रैषोऽत्यन्तप्रदेशः' इतिप्रकारकं साधारणनियमप्रदर्शनमुभयोरपि दृश्यते। भारद्वाजे त्वधिकत्वेन। 'एतावन्नाना' इतिप्रकारकं विशेषद्योतनमप्युभयोः समानम्। एकेषां मतमापस्तम्बसूत्रे बहुवारमुल्लिखितम्। तत्र द्वाविंशतिस्थलेषु एकीयं मतं भारद्वाजमतेन संवदति। तेन भारद्वाजमतमापस्तम्बसूत्रे साक्षात् परंपरया वा निर्दिष्टमिति वक्तुं शक्यम्।

## सत्याषाढसूत्रम्

सत्याषाढसूत्रमापस्तम्बसूत्रेण विपुलं साम्यमावहति। यतो भारद्वाजापस्तम्बश्रौतसूत्रे परस्परं समन्वितः तस्मात् भारद्वाजसूत्रं सत्याषाढसूत्रेणापि किंचन साम्यमाधत्त इति क्रमप्राप्तमेव। क्वचित् सत्याषाढसूत्रमतमापस्तम्बसूत्रापेक्षया भारद्वाजसूत्रं समन्वेतीति दृश्यते।

सत्याषाढीयैः पितृमेधसूत्रं भारद्वाजीयमेव स्वीकृतम्। सत्याषाढगृह्यसूत्रेऽपि केचन विषया भारद्वाजगृह्यसूत्रात् स्वीकृताः।

## भारद्वाजपरिशेषसूत्रम्

अत्र प्रकाशितः परिशेषसूत्रपाठः पञ्चभिर्लिखितपुस्तकैः संस्कारितो वर्तते। तत्र त्रिषु पुस्तकेषु सूत्रस्यास्य भारद्वाजपरिशेषसूत्रमिति संज्ञा दृश्यते द्वयोश्च भारद्वाजपरिभाषासूत्रमिति। सूत्रमिदं भारद्वाजश्रौतसूत्रस्य परिशिष्टरूपं वर्तते।

भारद्वाजपरिशेषसूत्रस्य द्विविधं प्रयोजनम्। भारद्वाजश्रौतसूत्रस्योपबृंहणं परिभाषाप्रकाशनं च। परिशेषसूत्रे २२२ सूत्राणि भवन्ति। तेषु १०२ परिभाषास्वरूपाणि, ९ अनुग्रहव्याख्यानरूपाणि, १११ परिशेषरूपाणि च। तत्र परिशेषसूत्राणि नियतं भारद्वाजमूलसूत्रमनुसरन्ति। भारद्वाजश्रौतसूत्रे परिभाषा पृथग्रूपेण नोक्ता। परिशेषसूत्रे विवृता परिभाषा प्रायेणापस्तम्बपरिभाषया संवदति परिशेषसूत्रं च बौधायनश्रौतसूत्रेण संवदति। परिशेषसूत्रे त्रिषु स्थलेषु बौधायनश्रौतसूत्रं साक्षान्निर्दिष्टम्। कानिचन सूत्राणि विवरणपराणि दृश्यन्ते। प्रसङ्गानुरोधेनाचार्याणां मतान्तराण्यपि निर्दिश्यन्ते। तथा चाश्मरथ्यालेखनाचार्ययोर्नामनिर्देशः अष्टसु स्थलेषु दृश्यते। बादरायणः औडुलोमिरितीमावाचार्यावप्युल्लिखितौ। कानि चन मतानि 'एकम्' 'अपरम्' इतिरूपेणापि निर्दिश्यन्ते। मध्येमध्ये ब्राह्मणवाक्यसदृशानि वचनान्युद्धृतानि वर्तन्ते। किं तेषां मूलमिति निर्धारयितुं दुःशकम्।

भारद्वाजपरिशेषसूत्राणि कण्डिकासु विभक्तानि भारद्वाजश्रौतसूत्रस्याङ्गभूतान्यासन्निति तर्कयितुं किंचिद्विनिगमकं वर्तते। परिशेषसूत्रस्य प्रायः सर्वेषु लिखितपुस्तकेषु ५१ सूत्रस्यान्ते २२ इति कण्डिकासंख्या, ८१ सूत्रान्ते च २४ इति कण्डिकासंख्या प्रदर्शिते स्तः। परिशेषसूत्राणां कश्चन विशिष्टो विषयक्रमो न दृश्यते। अयस्थो विषयक्रमो भारद्वाजश्रौतसूत्रविषयक्रमं नैवानुसरति। एकमेव विषयं स्पृशन्ति सूत्राणि भिन्नस्थानेषु विकीर्णानि दृश्यन्ते। यद्यप्यत्र वर्तमाना विषया बौधायनापस्तम्बादिश्रौतसूत्रेषूपलभ्यन्ते तथापि ग्रन्थोऽयं किंचिद्वैशिष्ट्यमावहति। तथा चातिपवित्रेष्ट्या विधानमस्मिन्नेव सूत्र उपलभ्यते। बौधायनादिसूत्रेषूक्तायाः पवित्रेष्ट्या विधानानुसारिणीयमिष्टिः। चातुर्मास्यानां समस्तप्रयोगः पञ्चभिरहोभिः समापनीयः काठकश्रौतसूत्रे शाखान्तरप्रयोगेषु चोपलभ्यते। परिशेषसूत्रे पञ्चदशभिरहोभिः द्वादशभिरहोभिश्चेति द्विधानुष्ठेयौ चातुर्मास्यप्रयोगप्रकारौ विहितौ वर्तेते। अधोनिर्दिष्टाः परिशेषसूत्रगता विषया उपलब्धभारद्वाजश्रौतसूत्रे न दृश्यन्ते—चातुर्मास्यहौत्रम्, पशुयागयाजमानम्, नक्षत्रेष्टयः, अग्निचयनं सप्रायश्चित्तम्, हौत्रपरिभाषा, वाजपेयः, साग्निका

एकाहाः, अश्वमेधः, राजसूयः, सत्राणि, सौमिकप्रायश्चित्तानि, पाशुकचातुर्मास्यानि, पञ्चैका-दशिनी, अतिपवित्रेष्टिश्च । एवंप्रकारेण परिशेषसूत्राणां चतुर्थोऽशो भारद्वाजसूत्रेऽनुपलभ्य-मानान् विषयान् स्पृशति । तेन पूर्वस्मिन् काले उपरिनिर्दिष्टविधिविधायको भारद्वाजसूत्र-भागोऽविद्यत इत्यनुमीयते । अन्यानपि कांश्चन विषयाननुसरन्ति भारद्वाजसूत्राणि सूत्रान्तर-टीकाकृद्भिरुद्धृतानि पूर्वमनुक्रान्तानि । तस्मात् सुस्पष्टमिदं यद्भारद्वाजश्रौतसूत्रं पूर्वं तैत्तिरीय-शाखीयसूत्रान्तरवत् परिपूर्णमासीत् तस्य च कश्चनांशः केनचित् कारणेन कस्मिंश्चित् काले विनष्ट इति । सूत्रान्तरटीकाकृद्भिर्यत्र भारद्वाजश्रौतसूत्राण्युद्धृतानि तत्र परिशेषसूत्राण्य-प्युद्धृतानि । तेनेदं ज्ञायते यदेतेषां टीकाकाराणां सकलं परिशेषसूत्रं सुपरिचितमासीत् तैश्च भारद्वाजश्रौतसूत्रवत् परिशेषसूत्रस्यापि प्रामाण्यमङ्गीकृतमासीदिति । बौधायनश्रौतसूत्र-टीकाकारो महादेवो यज्ञेश्वरश्च, आपस्तम्बश्रौतसूत्रटीकाकारो रुद्रदत्तो रामाग्निचित् च, सत्याषाढसूत्रटीकाकारो महादेवो गोपीनाथो वाञ्छेश्वरो मातृदत्तश्च, इत्येतैः परिशेषसूत्राणि स्वकीयायां टीकायामुद्धृतानि । पितृमेधप्रयोगदीपिकाकारेणोपेन्द्रेणोक्तम्—" तत्र भरद्वाजेन भगवता कृत्स्नं कल्पसूत्रमुक्त्वा तत्र पुनः ये न्याया अनुक्ता अर्थाश्च पक्षाश्च तान् सर्वान् द्रढयितुमगतिकान् प्रयोक्तुं संदिग्धान् व्यवस्थापयितुं च परिशेषसूत्रमुपचक्रमे" इति । परिशेष-सूत्रस्याकीर्णत्वं विषयक्रमस्वरूपे भारद्वाजश्रौतसूत्रेण तस्य विसंवादश्चेत्येताभ्यामनुमीयते यत् परिशेषसूत्रं नैकेन विरचितं नाप्येकस्मिन् काले विरचितमिति । तस्य पूर्वतनोंऽशः बोधायनापस्तम्बसूत्ररचनानन्तरम् अपरश्चांशः तैत्तिरीयशाखीयश्रौतसूत्रटीकारचनायाः पूर्वं च रचितो भवेदिति सामान्यतो वक्तुं शक्यम् ।

## भारद्वाजसूत्रस्य रचनाकालः

बौधायनभारद्वाजश्रौतसूत्रयोः परस्परसंबन्धः पूर्वं प्रदर्शितः तेन बौधायनश्रौतसूत्रस्य भारद्वाजश्रौतसूत्रात् पूर्वकालीनत्वं स्पष्टं प्रतीतम् । अन्यान्यपि कारणानि तदुपोद्वलकानि भवन्ति । बौधायनश्रौतसूत्रे गोपितृयज्ञोऽन्याधेयाङ्गत्वेन प्रतिपादितः । भारद्वाजश्रौतसूत्रे अन्येषु च श्रौतसूत्रेषु तस्याभावः । पिण्डपितृयज्ञस्य सकलविधिं स्वयं यजमानः कुर्यादिति बोधायनः । तस्योपकल्पनमध्वर्युणा कर्तव्यमित्यन्ये सूत्रकाराः । सहायतासंपादनमिदमुत्तर-कालीनत्वं सूचयति । दर्शेष्ट्यां सांनाय्यार्थं यावतीनां गवां दोहेन कुम्भः पूरितो भवेत् तावत्यो दोग्धव्या इति बोधायनः । षड्वमा गावो भवन्तीति कर्मान्तसूत्रे । नास्यैताः रात्रिं कुमाराश्चन पयसो लभन्त इत्यापस्तम्बेनोक्तम् । भेदोऽयं कालभेदेन दिग्भेदेन वा समर्थयितुं शक्यः । बौधायनश्रौतसूत्रे ऋचो यजूंषि च सकलपाठेनोद्धियन्ते । अनुषङ्गः कर्तव्यश्चेत् तदापि सकलपाठेनैवोद्धृतानि भवन्ति । निरूढपशुयागे उत्तरवेद्यामाहवनीये प्रणीते अतिमुक्तिसंज्ञका आहुतयो होतव्या भवन्ति । तदर्थम् ' अग्निर्यज्ञं नयतु प्रजानन्...', ' वायुर्यज्ञं

नयतु प्रजानन्...', 'सूर्यो यज्ञं नयतु प्रजानन्...', 'यज्ञो यज्ञं नयतु प्रजानन्...' इत्यृचः सकलपाठेनोक्ताः। भारद्वाजसूत्रे प्रथमा ऋक् सकलपाठेनोक्ता शिष्टाश्चानुपङ्गेण 'वायुरादित्यो यज्ञो यज्ञं नयतु प्रजानन्...' इति। आपस्तम्बसूत्रे तु सर्वा एव ऋचोऽनुपङ्गेणोक्ताः। अनुपङ्गपद्धतिरियं सूत्रकाराणामुत्तरमुत्तरं काले द्योतयतीति वक्तुं शक्यम्। 'तन्त्रेऽत्यन्तप्रदेशः' इति शब्दप्रयोगो बोधायनस्य मूलसूत्रे नोपलभ्यते। कर्मान्तसूत्र एकदैव कृतः। भारद्वाजश्रौतसूत्रे तु स बहुवारं कृतो दृश्यते। प्रश्नार्थकसर्वनामानि कर्मान्तसूत्रे बहुवारं प्रयुक्तानि। भारद्वाजश्रौतसूत्रे द्वयोः स्थानयोरेव तत्प्रयोगो दृश्यते। आपस्तम्बश्रौतसूत्रे तु नैकत्रापि। प्रश्नार्थकसर्वनाम्नां प्रयोगः प्रवचने युज्यते। अत इदमनुमातुं युक्तं यद्भारद्वाजश्रौतसूत्रं बौधायनकर्मान्तसूत्रस्य पश्चाद्रचितमिति।

भारद्वाजश्रौतसूत्रस्य आपस्तम्बश्रौतसूत्रात् पूर्वकालीनत्वं बहुभिर्विद्वद्भिः प्रदर्शितम्। अनयोः सूत्रयोरुपरिनिर्दिष्टः परस्परसंबन्धस्तदेव द्योतयति। सत्याषाढसूत्रस्य वैजयन्तीटीकाकारेण ग्रन्थादौ मङ्गले आपस्तम्बात् पूर्वं भरद्वाजो निर्दिष्टः। आपस्तम्बसूत्रे एकेषां मतं बहुषु स्थलेषु निर्दिष्टम्। तत्र द्वादशसु स्थलेषु एकीयं मतं भारद्वाजसूत्रोक्तविधानेन संवदति। आपस्तम्बसूत्रापेक्षया भारद्वाजश्रौतसूत्रे रचनायाः शैथिल्यमनुभूयते। आपस्तम्बसूत्रे चतुर्विंशे प्रश्ने परिभाषा एकत्र संगृहीता, न तथा भारद्वाजे। तत्र मध्येमध्ये काचन परिभाषा दत्ता वर्तते। भारद्वाजसूत्रे चतुर्थप्रश्ने ऐष्टिकयाजमानमुक्तम्। तथाप्याध्वर्यवेऽपि क्वचिद्याजमानमुक्तम्। एवमेव नवमे प्रश्ने प्रायश्चित्तेषु प्रपश्चितेष्वपि पञ्चमे प्रश्ने किञ्चित् प्रायश्चित्तमुक्तम्। भारद्वाजापस्तम्बसूत्रयोः शब्दतोऽर्थतश्च विपुले साम्ये वर्तमानेऽपि तयोः कश्चन भेदोऽवश्यं भवति। आपस्तम्बसूत्रे नवमे प्रश्ने विद्यमानानि अग्निहोत्रविषयकाणि दर्शपूर्णमासेष्टिविषयकाणि च कानिचित् प्रायश्चित्तानि भारद्वाजसूत्रे नोपलभ्यन्ते। आपस्तम्बसूत्रे नवमप्रश्ने निरूढपशुप्रायश्चित्तान्युक्तानि तानि भारद्वाजश्रौतसूत्रे न सन्ति। एवं बहुधा विचार्यमाणे भारद्वाजश्रौतसूत्रं बौधायनश्रौतसूत्रादुत्तरकालीनम् आपस्तम्बश्रौतसूत्रात् प्राक्कालीनमासीदिति निर्णेतुं योग्यम्। तत्रापि भरद्वाजो बोधायनापेक्षया आपस्तम्बस्य समीपतर आसीदिति वक्तुं योग्यम्।

## भरद्वाजस्य मूलस्थानम्

भारद्वाजशाखायाः प्रचारो दक्षिणभारते आसीत्। तत्रैतस्याः शाखाया लिखितग्रन्था उपलब्धाः। तथाप्यस्या मूलस्थानस्य विनिगमकं किंचिल्लिङ्गं भारद्वाजगृह्यसूत्र उपलभ्यते। सीमन्तोन्नयनप्रकरण उक्तम्—

सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाः।
विवृत्तचक्रा आसीनास्तीरेण यमुने तव॥

तत्र सूत्रकारेणाग्रे उक्तं यस्यास्तीरे निवसन् स्यात्तस्या नाम्ना ऊहः कर्तव्य इति। टीकाकारेणात्रोदाहरणरूपेणोक्तम्—'तीरेण वेगवति तव तीरेण कावेरि तव' इति। एतेन तर्क्यते यत् टीकाकारोऽयं भारद्वाजशाखानुसारी स्यात् स च वेगवतीकावेर्योः प्रदेशे निवसन् भवेदिति। सूत्रे यमुनानद्याः साक्षान्निर्देशो वर्तते। तेनेदं ज्ञायते यत् सूत्रकारोऽयं यमुनायाः समीपदेशे निवसन्नासीदिति। भारद्वाजापस्तम्बसूत्रयोः साम्यं पूर्वं पर्याप्तं प्रदर्शितम्। उभयोः सूत्रयोः रचयित्रोः परस्परसामीप्यमेव साम्येनानेन सूच्यते। आपस्तम्बस्य मूलस्थानं नान्ध्रप्रदेशः किंतु कुरुपञ्चालदेश आसीदिति विदुषां निर्णयः। अतः भरद्वाजस्यापि मूलस्थानं तत्समीपमेव यमुनातीरप्रदेशे स्यात् न दक्षिणदेशे इति क्रमप्राप्तम्। आपस्तम्बसूत्रापेक्षया भारद्वाजसूत्रे मैत्रायणीशाखाया अधिकतरः प्रभावो दृश्यते। तस्याः शाखायाः प्रचारः पञ्चनददेशे सविशेषमासीत्। पूर्वभारते वाजसनेयशाखायाः प्रचार आसीत्। एतया शाखयापि आपस्तम्बसूत्रस्य दृढतरः संबन्धो दृश्यते। अतः आपस्तम्बस्य मूलस्थानमुत्तरभारते पूर्वस्यां दिश्यासीत् भरद्वाजस्य च तदपेक्षया पश्चिमस्यां दिश्यासीदिति तर्कयितुं युक्तम्। आश्मरथ्या-लेखनयोराचार्ययोर्निर्देशः पूर्वं कृतः। आश्वलायनश्रौतसूत्रमार्यावर्ते विरचितमासीदिति सप्रमाण-मुच्यते यतस्तस्मिन् सूत्रे सरस्वत्याः प्लक्षप्रस्रवणस्य कारपचवस्य च निर्देशो वर्तते। तस्मिन् सूत्रे आश्मरथ्यालेखनयोर्मतानि निर्दिष्टानि। अतस्तावप्यार्यावर्तनिवासिनावास्ताम्। तयोर्मतानां भारद्वाजापस्तम्बसूत्रयोर्बाहुल्येन निर्देशात् अनयोः सूत्रयो रचयितारावप्यार्यावर्त एव न्यवसता-मित्युपरि कृतस्तर्कोऽनेन दृढीक्रियते।

एवं भरद्वाजविरचितश्रौतादिसूत्रस्वरूपविषये संक्षेपेणोक्तम्। विस्तरस्तु आङ्ग्ल-भाषामये उपोद्घाते द्रष्टव्यः।

* * * *

भरद्वाजप्रणीतश्रौतपैतृमेधिकपरिशेषसूत्राणां मूलपाठोऽत्र यथामति प्रकाशितः। अन्ते पदसूची दत्ता। तत्र मन्त्रस्थानि पदानि तथा च सूत्रगतानि साधारणानि पदानि वर्जितानि। मन्त्राणां सूच्यपि दत्ता। सूत्रान्तरेषूद्धृतानि यानि भारद्वाजसूत्रवाक्यानि मूलसूत्रेषु नोपलब्धानि तेषां विषयानुसारेण विरचिता सूच्यपि दत्ता।

सूत्राणामाङ्ग्लभाषानुवादः पृथग्रूपेण मुद्रितः। तत्र सूत्रगतानां मन्त्राणामप्यनुवादः कृतः। बहुषु स्थलेषु मन्त्राः प्रतीकरूपेण निर्दिश्यन्ते कचिच्च केवलमनुवाक एव निर्दिष्टो भवति। एतादृशेषु स्थलेषु समेषां मन्त्राणामनुवादः कृतः। तैत्तिरीयशाखीयमन्त्रानुवादावसरे न केवलं सायणाचार्याणां भट्टभास्करमिश्राणां च भाष्यमवलोकितम्, अपि तु आधुनिक-विद्वद्भिः कृता आङ्ग्लादिभाषामया अनुवादा अपि दृष्टाः। प्रतिसूत्रमनुवादे टिप्पण्योऽपि आवश्यकतानुसारेण विनिवेशिताः।

भारद्वाजश्रौतसूत्रस्य योऽशः अद्यावधि नोपलब्धः तद्विषये सुधीभिः साहाय्यमाचरणीयमिति प्रार्थये ।

एवं संपादितस्यास्य ग्रन्थस्य प्रकाशनं वैदिकसंशोधनमण्डलेनाङ्गीकृतमिति तस्योपकारभरं कृतज्ञतापूर्वकं शिरसि वहामि । भारतप्रशासनस्य शिक्षामन्त्रालयेन ग्रन्थस्यास्य प्रकाशनाय समुचितं द्रव्यसाहाय्यं कृतमिति तस्य कृतज्ञतां प्रकटयामि । एतद्ग्रन्थस्य संपादनार्थं याभिः संस्थाभिः ग्रन्थालयैः च लिखितग्रन्थाः तेषां प्रतिलिपयो वा उपयोगार्थं प्रदत्ताः तेषां नामनिर्देशः पूर्वं कृतोऽस्ति । तेषां संचालकेभ्यो धन्यवादान् वितरामि । सूत्रपाठविनिश्चयविषये गोकर्णनिवासिभिः श्रौतविद्वानालंकार–खरे–गणेशशास्त्रिभिः साहाय्यं कृतम् । वै. सं. मण्डले कार्यं कुर्वद्भिः श्री. वि. वि. भिडेमहोदयैः न केवलं मुद्रितावलोकने, अपि तु सूत्रपाठनिर्धारणे वारंवारं साहाय्यं कृतम् । समर्थभारत–वेदविद्यामुद्रणालययोरधिकृतैः ग्रन्थस्यास्य मुद्रणं त्वरया सावधानं च कृतम् । एतेभ्यः सर्वेभ्यो धन्यवादान् वितरामि ।

पुणे–विद्यापीठेनास्य ग्रन्थस्य प्रकाशनार्थं द्रव्यसाहाय्यं कृतम् । तदर्थं तत्प्रति कृतज्ञताभावं प्रकटीकरोमि ।

अन्ते च भगवतो भरद्वाजस्य सूत्रग्रन्थानां प्रकाशनेनात्मानं धन्यं मन्यमानः तं मुनिं सविनयं प्रणम्य प्रास्ताविकमिदमुपसंहरामि ।

वैदिक-संशोधन-मण्डलम्, पुणें
सौर चैत्र शु. १ शाके १८८६ वत्सरे

विद्वद्वशंवदः
चिं. ग. काशीकर

# INTRODUCTION

## § 1. Manuscripts and Printed Materials

### (i) *Bhāradvāja Śrauta Sūtra*

The text of the Bhāradvāja Śrauta Sūtra presented in the following pages is based on the following *materials* :—

*Manuscripts :*

(1) $A_1$. Tanjore Maharaja Sarfoji's Sarasvatī Mahal Library, Tanjore, MS No. 2027, J. L. Collection No. 210, Devanāgarī script, written on country paper, size 9½″ × 4½″, folia 149, ten lines in a page, Praśnas I-XIV and Sections 1-4 of Praśna XV. As the manuscript could not be lent out, a transcript of the same was procured.

(2) $A_2$. Bhandarkar Oriental Research Institute, Poona, MS. No. 79 of 1884-87. Devanāgarī script, written on paper, size 13″ × 4½″, folia 142, age Śaka 1808, good hand-writing, eight lines in a page, Praśnas I-IX and sections 1-4 of Praśna X.

(3) $A_3$. Prājña Pāṭhaśālā, Wai (Satara), Devanāgarī script, written on country paper, folia 81, size 12″ × 5¾″, thirteen lines in a page, good hand-writing, Praśnas I-IX and sections 1-4 of Praśna X.

(4) $A_4$. [illegible] country paper, si[illegible] Praśnas I-IX an[illegible] cript is used by RAGHU VIRA under the designation Db for his edition of the BhārŚS.

(5) $A_5$. Oriental Institute, Baroda, Acc. No. 894, Devanāgarī script, written on country paper, folia 106, twelve lines in a page, size 11¾″ × 5¾″, good hand-writing, Praśnas I-IX and sections 1-4 of Praśna X. This manuscript is used by RAGHU VIRA under the designation Di.

(6) $B_1$. Mysore University Oriental Research Institute, MS. No. B 114, Telugu script, written on paper, folia 278, Praśnas I-XIV. The text is often incorrect. As the manuscript could not be lent out, a Devanāgarī transcript of the same was procured.

(7) $B_2$. Vishveshvaranand Vedic Research Institute, Hoshiarpur, MS. No. 5597, Devanāgarī transcript of a palm-leaf manuscript written in Grantha script belonging to Sri G. Harihara Śastri of Trivandrum. It contains the text of Praśnas I-XII. The last Praśna is incomplete and ends with the 8th Kaṇḍikā. The text is often incorrect. This manuscript is used by RAGHU VIRA under the designation Gb for his edition of BhārŚS.

(8) $B_3$. Vishveshvaranand Vedic Research Institute, Hoshiarpur, MS No. 5980, palm-leaf manuscript written in Grantha script, old in age, incomplete, contains Praśnas I–X. The last Praśna contains only the first three (third incomplete) sūtras of the 1st Kaṇḍikā. In the case of a long mantra, the manuscript gives only its beginning and end. The text is often incorrect. RAGHU VIRA had collated this manuscript, but did not include it in his critical apparatus "for it is full of lacunas, and is not of much value for the constitution of the text. Its inclusion would have made the critical apparatus unnecessarily heavy." However, in spite of the general incorrectness of its text, this manuscript is found to support many correct readings, and is therefore used for the present edition.

*Printed Text*,:

R. In the *Journal of Vedic Studies*, Lahore, Vols. I and II, 1934-35, RAGHU VIRA has published a critical edition of the text of the Bhāradvāja Śrauta Sūtra from the beginning up to sūtra 9 of the 6th Kaṇḍikā of Praśna XII, leaving the Jyotiṣṭoma incomplete. It ends with नद्धयुगे अवहितशम्ये उदिष्मती—thus describing the rites up to the bringing in of the Havirdhāna carts. This edition is based on the following five manuscripts—two written in Devanāgarī script and three in Grantha script :

(1) Da. Oriental Institute, Baroda, Acc. No. 894. This has been used for the present edition under the designation $A_3$.

(2) Db. Bombay University Library, MS No. 756. This has been used for the present edition under the designation $A_4$.

(3) Ga. Punjab University Library, Lahore, MS No. 1427. This could not become available for the present edition. It may, however, be pointed out that the readings of this MS as given in the critical apparatus of RAGHU VIRA's edition generally agree with those of $B_1$ in the present edition.

(4) Gb. The Devanāgarī transcript of the MS belonging to Sri G. Harihara Śastri of Trivandrum. This has been used for the present edition under the designation $B_2$.

(5) Gc. Belonging to Sri G. Harihara Sastri of Trivandrum. The location of this manuscript has not been given; hence no attempt could be made to procure it. The readings of this MS noted by RAGHU VIRA in the foot-notes, sometimes agree with those of $B_2$ of the present edition. Like $B_3$, in the case of a long mantra or group of mantras, this manuscript also gives only the beginning and the end.

D. A. V. College MS No. 5980 was collated, but was not utilised by RAGHU VIRA. This is the same as $B_3$ used for the present edition.

### (ii) *Bhāradvāja Paitṛmedhika Sūtra*

*Manuscripts* :

The following manuscripts are used for the edition of the text of Bhāradvāja Paitṛmedhika Sūtra :—

(1) $T_1$. Tanjore Maharaja Sarfoji's Sarasvatī Mahal Library, Tanjore, MS No. B 3856a (11777), Devanāgarī script, folia 1–15, complete. The writing is incorrect and has many lacunas. The incorrect readings and lacunas have not been recorded in the present edition.

(2) $T_2$. T. M. S. S. M. Library, Tanjore, MS No. B 3857 (11778), complete, written in Devanāgarī, folia 1–10. The text is incorrect and has many lacunas.

(3) Prājña Pāṭhaśālā, Wai (Satara), written on country paper, entitled in the margin as Āpastamba Pitṛmedhasūtra, folia 1-12. Its text fully agrees with the printed text of the Āpastamba Pitṛmedhasūtra (*see* below). Therefore, its readings have not been recorded independently.

Besides these, the following manuscripts were also consulted :—

(i) *Bhāradvāja Paitṛmedhikabhāṣya*. T. M. S. S. M. Library, Tanjore, MS No. B 3857 (11778), folia 10–25. The text is incorrect and has many lacunas.

(ii) Same as above. T. M. S. S. M. Library, Tanjore, MS No. B 3856 b, Devanāgarī, folia 15–38, also incorrect and having many lacunas.

(iii) *Āhitāgnisaṁskāraprayoga*. T.M.S.S.M. Library, Tanjore, MS No. B 9519 (11779), folia 1–10. Based on the Bhāradvāja Paitṛmedhika Sūtra.

(iv) *Āpastambapitṛmedhaḥ Aparaprayogaḥ*. T. M. S. S. M. Library, Tanjore, MS No. B 9501, folia 1–12.

*Printed Texts :*

(1) Āp. The Āpastamba Pitṛmedhasūtra together with the commentary of Gārgya Gopālayajvan and the bhāṣya of Kapardisvāmin, edited by T. M. Narayana Śastrigal, Kumbakonam, Sharada Vilas Press, 1916. The book is printed in Grantha characters. According to the editor, the edition has been based on certain manuscripts.

(2) HA. The Hiraṇyakeśi Pitṛmedhasūtra, with the commentary called *vaijayantī* by Mahādeva Dīkṣita, printed at the end of the edition of the Satyāṣāḍhasūtra, Anandaśrama, Poona 1932. The incorrect readings in HA have not been recorded in the foot-notes of the present edition.

(3) HC. The Hiraṇyakeśi Pitṛmedhasūtra edited by CALAND and printed in his *Pitṛmedhasūtrāṇi*, Leipzig 1896.

*H = HA, HC*

HA is based on three manuscripts : क, ख, and ग. HC agrees with ख.

For the relationship of the Bhāradvāja Paitṛmedhika Sūtra with the Pitṛmedha Sūtras of Āpastamba and Satyāṣādha-Hiraṇyakeśin, see the sequel.

### (iii) *Bhāradvāja Pariśeṣa Sūtra*

*Manuscripts :*

The following manuscripts are used for the edition of the text of the Bhāradvāja Pariśeṣa Sūtra:—

(1) Bm. Bombay University Library, MS No. 757, Devanāgarī script, written on paper, not very old, good hand-writing, but torn in many places, gives complete text.

(2) Br. Oriental Institute Baroda, MS No. 390, Devanāgarī script, written on paper, gives complete text.

(3) [illegible]. Asiatic Society of Bengal, Calcutta, MS No. III F 251. The manuscript gives the portion from sūtra 182 to the end. It begins : श्रीगणेशाय नमः । स्त्रियाश्चैव संस्कारार्थमौपासनम् etc.

(4) Pā. Anandaśrama, Poona, MS No. 65 A, Devanāgarī script, written on paper, folia 1-12, ten lines in a page, gives complete text.

(5) Pb. Bhārata Itihāsa Saṁśodhaka Maṇḍala, Poona, MS No. 36, 1094,—Devanāgarī script, written on paper, old, date not given, gives complete text.

## § 2. Critical Evaluation of the Materials

(i) *Bhāradvāja Śrauta Sūtra* :—The eight manuscripts used for preparing the present edition have been divided into two main groups : group A consisting of five MSS written in Devanāgarī, and group B consisting of three MSS written in non-Devanāgarī scripts. $A_1$ seems to have been copied from a Grantha manuscript. The following peculiarities with regard to its orthography may be noted: a superfluous *anusvāra* [illegible] in एतावंशानां, चमसाग्रुंभवन्; स in place of a visarga as in पदस्सहस्रम्; त्रुवृत् for त्रिवृत्; गृण्हीयात् for गृह्णीयात्; शिरोभन्यानां for शिरोऽभ्यानां. No *raṅga* is written in the case of an *anunāsika*. From the textual point of view, however, these manuscripts may be broadly divided into two groups : (i) $A_1, B_1, B_2, B_3$, and (ii) $A_2, A_3, A_4, A_5$. The main difference between these two groups pertains to the division of the text. While the former group divides the entire Sūtra-text into fifteen Praśnas (the last Praśna being incomplete), the latter group divides it into ten Praśnas (the last Praśna being incomplete). The first group consisting of $A_1, B_1, B_2$, and $B_3$, in spite of its more or less defective readings represents the original text. The readings found in this group of manuscripts are often correct,[1] even though such readings are not always supported by all the manuscripts in the group. This group may be further divided into two sub-groups : $A_1, B_1$, and $B_2, B_3$. At VIII. 19.11-18 a lacuna is found in $A_1$ and $B_1$. Many times the readings in $A_1$, $B_1$ are found acceptable,[2] while at other times the readings in $B_2, B_3$ are preferable.[3] The manuscript here designated as $B_3$ was rejected by RAGHU VIRA because in his opinion it was of no use. Sometimes, however, it was found that that manuscript contained readings which were preferable but which were not to be found in any other manuscript[4].

1. See foot-notes to II.16.13, VIII.11.11, X.10.8, XI.1.17.
2. See foot-notes to I.6.12, VIII.16.10, 19.11-18, IX.18.4, X.10.1,7, XI.2.15. 3. See foot-notes to I.12.5, 14.2, III.2.9,10, V.10.3, 13.15, VII.6.3, VIII.3.8-10, 4.14, 22.6, IX.9.16, 16.10.
4. See foot-notes to I.9.1, II.2.8, V.13.11, VIII.20.11, IX.8.3,10.7, 14.14, 15.11.

यत्यभित आहवनीयं प्रतीची श्रोणी अभितो गार्हपत्यम् ॥ ११ ॥ मध्ये संनतां प्राचीमुदीचीं प्रवणां पुरस्ताद्रंहीयसीं पश्चात् प्रथीयसीं दक्षिणतो वर्षीयसीं पुरीषवतीं करोति ॥ १२ ॥ यत् पुरीषमतिशेत उत्करं[1] तद् गमयति ॥ १३ ॥ यत् तृणं मूलं वातिशेते स्फ्येन तच्छिनत्ति न नखेन ॥ १४ ॥ ॥२॥

आहार्यपुरीषां पशुकामस्य वेदिं कुर्यात्[2] खननपुरीषां प्रजाकामस्येति विज्ञायते ॥ १ ॥ उद्धृत्य नित्यमन्यदावपेदित्येकम् । अखातायामेवान्यदावपेदित्यपरम् ॥ २ ॥ यत्र खनेत् तत्र खननमन्त्रं जपेत् ॥ ३ ॥ अधिश्रितेषु हविःषु पौर्णमास्यां वेदिं कुर्यात् ॥ ४ ॥ पूर्वेद्युः प्राग् बर्हिष आहरणादमावास्यायाम् ॥ ५ ॥ यत् प्रागुत्तरस्मात् परिग्राहात् तत् कृत्वोपवसति ॥ ६ ॥ समानमितरत् ॥ ७ ॥ ब्रह्माणमामन्त्रयते ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि इति ॥ ८ ॥ प्रसूतो ब्रह्मणा स्फ्येन वेदिं परिगृह्णाति । ऋतमसि इति दक्षिणतः ऋतसदनमसि इति पश्चात् ऋतश्रीरसि इत्युत्तरतः ॥ ९ ॥ अथैनां स्फ्येन प्रतीचीं योयुप्यते धा असि स्वधा असि इत्यनुवाकशेषेण[3] ॥ १० ॥ पश्चार्धे त्रिवृतीयदेशे वेदेः स्फ्यं तिर्यञ्चं स्तब्ध्वा संप्रेष्यति प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि पत्नी" संनह्याज्येनोदेहि इति ॥ ११ ॥ आग्नीध्र एतानि कर्माणि कुर्यादित्येकम् । अध्वर्युरित्यपरम्[4] ॥ १२ ॥ उपनिनीय प्रोक्षणीः स्फ्यस्य वर्त्मन् दक्षिणेन स्फ्यमसंस्पृष्टा[5] बर्हिरासादयति ॥ १३ ॥ यं द्विष्यात् तं ध्यायेत् ॥ १४ ॥ उत्करे पुरस्तात् प्रत्यञ्चं स्फ्यमुदस्यति शतभृष्टिरसि वानस्पत्यो द्विषतो वधः इति ॥ १५ ॥ यं द्वेष्टि तस्य नाम गृह्णाति ॥ १६ ॥ हस्ताववनिज्य स्फ्यं प्रक्षालयति । नाग्रं प्रतिमृश्वति ॥ १७ ॥ वेदिं कृत्वा नानवनिज्य हस्तौ पात्राणि पराहृण्यात् ॥ १८ ॥ उत्तरेण प्रणीताः पश्चात् प्रागग्रमिध्माबर्हिषी[6] उपसादयति ॥ १९ ॥ ॥३॥

दक्षिणमिध्ममुत्तरं बर्हिः ॥ १ ॥ स्रुवं च स्रुचश्च प्राशित्रहरणं[7] चादाय

---

1. $A_{4,5}$ उत्करे
2. $B_2$ omitted
3. K commences sūtra 11 with अनुवाकशेषेण.
4. *Subodhini* on *BaudhSS* I.11, *Rudradatta* on ĀpSS II.3.11, Mahādeva on SatS I.4 (p. 104) and Vāñcheśvara on SatS (57b) quote this sūtra verbatim.
5. $A_1$ °नसिदं स्पृष्ट्वा बर्हि°; $A_{2,3}$ °मसंस्पृष्टा बर्हि°; $A_{4,5}$ °मसंस्पृष्टा बर्हि°; $B_1$ °मसदं स्पृष्टा; $B_2$ °मसंस्पृष्टा बर्ही°; $B_3$ °स्पृष्ट्वा बर्हि°
6. $A_1$,$B_{1,2}$ प्रागिध्मा°; $B_3$ इध्मा°
7. A,$B_1$ समाशित्र°; $B_3$ संमृड्ढि प्राशित्र°

पत्नी पिनष्टि दासी वा ॥ १ ॥ धृष्टिरसि ब्रह्म यच्छ इत्युपवेषमादाय गार्हपत्यात् प्रत्यञ्चावङ्गारौ निरूह्यान्यतरमुत्तरापरमवान्तरदेशं प्रतिनिरस्यति अपाग्नेऽग्निमामादं जहि निष्क्रव्यादँ सेध इति ॥ २ ॥ आ देवयजं वह इत्यन्यतरमवस्थाप्य तस्मिन् कपालमुपदधाति ध्रुवमसि पृथिवीं दृँह इति ॥ ३ ॥ तत् सव्यस्याङ्गुल्याधिनिधाय कपालेऽङ्गारमधिवर्तयति[1] निर्दग्धँ रक्षो निर्दग्धा अरातयः इति[2] ॥ ४ ॥ धर्त्रमसि ॥ धरुणमसि इति पूर्वंपूर्वं कपालमुपदधाति । धर्मासि इति दक्षिणम् । चित स्थ इत्युत्तरम् । मरुतां शर्धोऽसि[3] इति पश्चम् । चिदसि ॥ परिचिदसि इत्यवशिष्टे उपदधाति । तूष्णीं वाष्टौ संपादयति ॥ ५ ॥ एवमेवोत्तरं कपालयोगमुपदधाति ॥ ६ ॥ एकादश संपादयति द्वादश वैन्द्राग्नस्य ॥ ७ ॥ एवमनुपूर्वाण्येवैष्वत ऊर्ध्वं कर्माणि क्रियन्ते ॥ ८ ॥ अथैनान्यङ्गारैरध्यूहति भृगूणामङ्गिरसां तपसा तप्यध्वम् इति ॥ ९ ॥ अत्र मदन्तीरधिश्रयति ॥ १० ॥ निष्टप्तोपवातायां पात्र्यां वाचंयमस्तिरः पवित्रं पिष्टानि संवपति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टँ सं वपामि ॥ अग्नीषोमाभ्याम् इति यथादेवतम् । त्रिर्यजुषा तूष्णीं चतुर्थम् ॥ ११ ॥ ॥२४॥

अथैनानि पवित्राभ्यामुत्पुनाति देवो वः सवितोत्पुनातु इति पच्छो गायत्र्या ॥ १ ॥ प्रणीताभिर्हवींषि संयौति ॥ २ ॥ अन्या वा यजुषोत्पूय ॥ ३ ॥ स्रुवेण प्रणीताभ्य आदाय वेदेनोपयम्याहरति[4] ॥ ४ ॥ समापो अद्भिरग्मत इति पिष्टेष्वानयति[5] ॥ ५ ॥ अद्भ्यः परि प्रजाता स्थ समद्भिः पृच्यध्वम् इति तप्ताभिः[6] प्रदक्षिणं पर्याप्लावयति ॥ ६ ॥ जनयत्यै त्वा सं यौमि इति संयुत्य विभजते यथाभागं व्यावर्तेथाम् इति[7] यतः पुनर्न सँहरिष्यन् भवति ॥ ७ ॥ अथाभिमृशति अग्नये त्वा इति दक्षिणं पिण्डम् अग्नीषोमाभ्यां त्वा इत्युत्तरं पौर्णमास्याम् इन्द्राग्निभ्याम् इत्यमावास्यायामसंनयतः ॥ ८ ॥ इदमहँ सेनाया अभीत्वर्यै मुखमपोहामि इति वेदेन कपालेभ्योऽङ्गारानपोह्य मखस्य शिरोऽसि इति दक्षिणं पिण्डमादाय दक्षिणे कपालयोगेऽधिश्रयति घर्मोऽसि विश्वायुः इति ॥ ९ ॥ एवमेवोत्तरं पिण्डमादायोत्तरे[8] कपालयोगेऽधिश्रयति ॥ १० ॥ एवमनुपूर्वाण्येवैष्वत

1. $A_{2-5}$ कपालमंगार°
2. *Subodhinī* on BaudhŚS I.8 : भारद्वाजोऽप्याह तत्सव्यांगुल्याभिनिधाय कपाले etc.
3. $A$,$B_{2,3}$ शर्धं स्थ
4. Thus $A_1$,$B_2$; $A_{2-5}$,R °यत्या°; $B_1$ वेदेनोपयत्या°
5. Mahādeva on SatS I.6 (p.137) refers to sūtras 2 and 5 : अत्र प्रणीताभिर्हवींषि संयौतीति भरद्वाजेनोक्तत्वात् आनयतीत्याद्युक्तम् ।; $B_1$ पिष्टेष्वप आनयति
6. Mahādeva on SatS I.6 (p. 138) : तदुक्तं भरद्वाजेन तप्ताभिः पिष्टानीति ।
7. In R sūtra 7 ends here.
8. Thus $A_1$,$B_2$; $A_{2-5}$,R °योत्तर°; $B_1$ °योत्तरेण

ऊर्ध्वं कर्माणि क्रियन्ते ॥ ११ ॥ अत्राज्यं निर्वपति। उपरितरां[1] वा ॥ १२ ॥
॥२५॥

सर्वाणि कपालान्यभिप्रथयति उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम् इति ॥ १ ॥ अतुङ्गमनपूपाकृतिं कूर्मस्येव प्रतिकृतिमश्वशफमात्रं करोति ॥ २ ॥ पात्र्यामप आनीय प्रदक्षिणं लेपेनानुपरिमार्ष्टि[2] त्वचं गृह्णीष्व इत्येकैकम्। नातिक्षारयति ॥ ३ ॥ त्रिः पर्यग्नि करोति[3] अन्तरितँ रक्षोऽन्तरिता अरातयः इति ॥ ४ ॥ परि वाजपतिः कविः इति वा ॥ ५ ॥ देवस्त्वा सविता श्रपयतु इत्युल्मुकैः प्रतितपति ॥ ६ ॥ अग्निस्ते तनुवं माति धाक् इति दर्भैरभिज्वलयति ॥ ७ ॥ अविदहन्तः श्रपयत इति वाचं विसृजते ॥ ८ ॥ सं ब्रह्मणा पृच्यस्व इति वेदेन पुरोडाशे साङ्गारं भस्माध्यूहति ॥ ९ ॥ अथाङ्गुलिप्रक्षालनं पात्रीनिर्णेजनमित्युल्मुकेनाभितप्य स्फ्येनान्तर्वेदि तिस्रः प्राचीरुदीचीर्वा लेखा लिखित्वासँस्पन्दयन् प्रत्यगपवर्गं त्रिर्निनयति[4] एकताय स्वाहा इत्येतैः प्रतिमन्त्रम् ॥ १० ॥ ॥२६॥

॥ इति[5] प्रथमः प्रश्नः[5] ॥

---

1. $A_{2-3}$,R °तरं
2. $B_2$ लेपानुपरि°
3. Rāmāgnicit on ĀpŚS 1.25.8 : सायंदोहप्रभृत्यानीय आदायानयनात्। But the BhārŚS does not here refer to the fetching of the evening milk.
4. $A_{2-3}$ °नयन्
5. Thus $B_2$; $A_{2,3,4}$ प्रथमः; $A_1$ omitted; $A_{4,5}$ इति प्रथमः; $B_1$ इति प्रोक्त

## अथ द्वितीयः प्रश्नः

देवस्य[1] त्वा सवितुः प्रसवे इति स्फ्यमादाय तृणेन सँश्यति[2] शतभृष्टिरसि वानस्पत्यो द्विषतो वधः सहस्रभृष्टिः शततेजा वायुरसि तिग्मतेजाः इति ॥ १ ॥ अपरेणाहवनीयं वेदिर्भवति यजमानमात्र्यपरिमिता वा प्राची ॥ २ ॥ यथा हवीँष्यासन्नानि संभवेदेवं तिरश्ची ॥ ३ ॥ वेदेन वेदिं विविदुः पृथिवीँ सा पप्रथे पृथिवी पार्थिवानि । गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञो जायते विश्वदानिः इति पुरस्तात् स्तम्बयजुषो वेदेन वेदिं त्रिः संमार्ष्ट्युपरिष्टाद् वा ॥ ४ ॥ पूर्वार्धाद् त्रितृतीयदेशाद् वेदेः स्तम्बयजुर्हरति ॥ ५ ॥ पृथिव्यै[3] वर्मासि इत्यन्तर्वेदि प्रागग्रमुदगग्रं वा दर्भं निधाय तस्मिन् स्फ्येन प्रहरति पृथिवि देवयजन्योषध्यास्ते मूलं मा हिँसिषम् इति ॥ ६ ॥ अपहतोऽररुः पृथिव्यै इति स्फ्येन सतृणान् पाँसूनपादाय हरति व्रजं गच्छ गोस्थानम् इति ॥ ७ ॥ वर्षतु ते द्यौः इति वेदिं प्रत्यवेक्षते ॥ ८ ॥ उत्तरतो निवपति बधान देव सवितः परमस्यां परावति शतेन पाशैर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् ॥ अररुस्ते दिवं मा स्कान् इति ॥ ९ ॥ स उत्करो भवति ॥ १० ॥ तमाग्नीध्रो गृह्णाति अररो दिवं मा पप्तः इति ॥ ११ ॥ एवमेव द्वितीयँ हरत्येवं तृतीयम् ॥ १२ ॥ अपहतोऽररुः पृथिव्यै देवयजन्यै इति द्वितीयमपादत्ते ॥ १३ ॥ अपहतोऽररुः पृथिव्या अदेवयजनः इति तृतीयम् ॥ १४ ॥ ॥१॥

तूष्णीं चतुर्थँ हृत्वा स्फ्येन वेदिं परिगृह्णाति ॥ १ ॥ वसवस्त्वा परि गृह्णन्तु गायत्रेण छन्दसा इति दक्षिणतः ॥ २ ॥ रुद्रास्त्वा इति पश्चात् ॥ ३ ॥ आदित्यास्त्वा इत्युत्तरतः ॥ ४ ॥ स्फ्येन वै सर्वं वेदिकर्म क्रियते[4] ॥ ५ ॥ ततः संप्रेष्यति इमां नराः कृणुत वेदिमेत्य वसुमतीँ रुद्रवतीमादित्यवतीम् । वर्ष्मन् दिवो नाभा पृथिव्या यथायं यजमानो न रिष्येत् ॥ एत देवेभ्यो जुष्टामदित्या उपस्थे । इमां देवा अजुषन्त सर्वे । रायस्पोषा यजमानं विशन्तु इति ॥ ६ ॥ अथास्या उत्तमां त्वचँ समुद्धृत्योत्करं गमयति ॥ ७ ॥ अथैनां खनति द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं वा सीतामात्रीँ रथवर्त्ममात्रीं वा[5] यावत् पार्ष्ण्याः श्वेतं तावतीं वा देवस्य सवितुः सवे कर्म कृण्वन्ति वेधसः इति ॥ ८ ॥ मूलं छिनत्ति[6] ॥ ९ ॥ आ प्रतिष्ठायै खनति ॥ १० ॥ प्राञ्चौ वेद्यँसावुन्न-

1. $B_1$ begins with ओं.
2. $A_{2-5}$,R संयूयति
3. $A_{2-5}$,$B_1$ पृथिवी
4. *Subodhinī* on BaudhŚS I.11 quotes this sūtra verbatim.
5. Thus $B_3$; A,$B_2$,R omitted
6. $B_1$ भिनत्ति

यत्यभित आहवनीयं प्रतीची श्रोणी अभितो गार्हपत्यम् ॥ ११ ॥ मध्ये संनतां प्राचीमुदीचीं प्रवणां पुरस्तादंहीयसीं पश्चात् प्रथीयसीं दक्षिणतो वर्षीयसीं पुरीषवतीं करोति ॥ १२ ॥ यत् पुरीषमतिशेत उत्करं[1] तद् गमयति ॥ १३ ॥ यत् तृणं मूलं वातिशेते स्फ्येन तच्छिनत्ति न नखेन ॥ १४ ॥ ॥२॥

आहार्यपुरीषां पशुकामस्य वेदिं कुर्यात्[2] खननपुरीषां प्रजाकामस्येति विज्ञायते ॥ १ ॥ उद्धृत्य नित्यमन्यदावपेदित्येकम् । अखातायामेवान्यदावपेदित्यपरम् ॥ २ ॥ यत्र खनेत् तत्र खननमन्त्रं जपेत् ॥ ३ ॥ अधिश्रितेषु हविःषु पौर्णमास्यां वेदिं कुर्यात् ॥ ४ ॥ पूर्वेद्युः प्राग् बर्हिष आहरणादमावास्यायाम् ॥ ५ ॥ यत् प्रागुत्तरस्मात् परिग्राहात् तत् कृत्वोपवसति ॥ ६ ॥ समानमितरत् ॥ ७ ॥ ब्रह्माणमामन्त्रयते ब्रह्मन्नुत्तरं परिग्राहं परिग्रहीष्यामि इति ॥ ८ ॥ प्रसूतो ब्रह्मणा स्फ्येन वेदिं परिगृह्णाति । ऋतमसि इति दक्षिणतः ऋतसदनमसि इति पश्चात् ऋतश्रीरसि इत्युत्तरतः ॥ ९ ॥ अथैनां स्फ्येन प्रतीचीं योयुप्यते धा असि स्वधा असि इत्यनुवाकशेषेण[3] ॥ १० ॥ पश्चार्धे विवृतीयदेशे वेदेः स्फ्यं तिर्यञ्चं स्तब्ध्वा संप्रेष्यति प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढि पत्नीं संनह्याज्येनोदेहि इति ॥ ११ ॥ आग्नीध्र एतानि कर्माणि कुर्यादित्येकम् । अध्वर्युरित्यपरम्[4] ॥ १२ ॥ उपनिनीय प्रोक्षणीः स्फ्यस्य वर्त्मन् दक्षिणेन स्फ्यमसंस्पृष्टा[5] बर्हिरासादयति ॥ १३ ॥ यं द्विष्यात् तं ध्यायेत् ॥ १४ ॥ उत्करे पुरस्तात् प्रत्यञ्चं स्फ्यमुदस्यति शतभृष्टिरसि वानस्पत्यो द्विषतो वधः इति ॥ १५ ॥ यं द्वेष्टि तस्य नाम गृह्णाति ॥ १६ ॥ हस्ताववनिज्य स्फ्यं प्रक्षालयति । नाग्रं प्रविमुञ्चति ॥ १७ ॥ वेदिं कृत्वा नानवनिज्य हस्तौ पात्राणि पराहृण्यात् ॥ १८ ॥ उत्तरेण प्रणीताः पश्चात् प्रागग्रमिध्माबर्हिषी[6] उपसादयति ॥ १९ ॥ ॥३॥

दक्षिणमिध्ममुत्तरं बर्हिः ॥ १ ॥ स्रुवं च स्रुचश्च प्राशित्रहरणं[7] चादाय

1. $A_{4,5}$ उत्करे
2. $B_2$ *omitted*
3. K commences sūtra 11 with अनुवाकशेषेण.
4. *Subodhinī* on BaudhSS I.11, Rudradatta on ĀpSS II.3.11, Mahādeva on SatS I.4 (p. 104) and Vāñcheśvara on SatS (57b) quote this sūtra verbatim.
5. $A_1$ °बर्हिर्दं स्पृष्टा बर्हि°; $A_{2,3}$ °मसंस्पृष्टा बर्हि°; $A_{4,5}$ °मसंस्पृष्टा बर्हि°; $B_1$ °मसंद स्पृष्टा; $B_2$ °मसंस्पृष्टा बर्ही°; $B_3$ °स्पृष्ट्वा बर्हि°
6. $A_1, B_{1,2}$ प्राग्बिध्मा°; $B_3$ इध्मा
7. $A, B_1$ सप्राशित्र°; $B_3$ संमृड्ढि प्राशित्र°

गार्हपत्ये वाहवनीये वा निष्टपति प्रत्युष्टँ रक्षः प्रत्युष्टा अरातयः इति ॥ २ ॥ वेदाग्रैः प्रतिविभज्य संमार्ष्टि। अप्रतिविभज्य वा ॥ ३ ॥ स्रुवमग्र उत्तानं धारयमाणोऽग्रैरन्तरतोऽभ्याकारँ सर्वतो बिलमभिसमाहारं तन्मूलैर्दण्डं[1] गोष्ठं मा निर्मृक्षम् इति ॥ ४ ॥ जुहूँ[2] संमार्ष्ट्युत्तानां[2] धारयमाणोऽग्रैरन्तरतोऽभ्याकारं प्राचीं मध्यैर्बाह्यतः प्रतीचीं मूलैर्दण्डं वाचं प्राणं मा निर्मृक्षम् इति ॥ ५ ॥ उपभृतँ संमार्ष्टि तिरश्चीं धारयमाणोऽग्रैरन्तरतोऽभ्याकारं प्रतीचीं मध्यैर्बाह्यतः प्राचीं मूलैर्दण्डं चक्षुः श्रोत्रं मा निर्मृक्षम् इति ॥ ६ ॥ यथा स्रुवं तथा ध्रुवां प्रजां योनिं मा निर्मृक्षम् इति ॥ ७ ॥ रूपं वर्णं[3] मा निर्मृक्षे वाजि[4] त्वा सपत्नसाहँ संमार्ज्मि इति प्राशित्रहरणम् ॥ ८ ॥ न संमृष्टानि चासंमृष्टानि च सँस्पर्शयेत् ॥ ९ ॥ यदि सँस्पर्शयेत् पुनरेव निष्टप्य संमृज्यात्[5] ॥ १० ॥ संमृष्टानि निष्टपति अग्नेर्वस्तेजिष्ठेन तेजसा निष्टपामि इति ॥ ११ ॥ ॥४॥

अथैतानि संमार्जनान्यद्भिः सँस्पृश्याग्नौ प्रहरति यतरस्मिन् निष्टपति[6] दिवः शिल्पमवततं पृथिव्याः ककुभि श्रितम्। तेन वयँ सहस्रवल्शेन सपत्नं नाशयामसि स्वाहा इति ॥ १ ॥ उत्करे वोदस्यति ॥ २ ॥ पत्नीमूर्ध्वज्ञुमासीनाँ संनह्यति तिष्ठन्तीं वा स्वयं वा पत्न्यारभमाणं मौञ्जेन योक्त्रेणान्यतरतःपाशेनाभ्यन्तरं वाससो बाह्यतो वा आशासाना सौमनसम् इति ॥ ३ ॥ उत्तरेण नाभिं निष्टक्यं ग्रन्थिं कृत्वा दक्षिणतो नाभेः पर्यूहते ॥ ४ ॥ अग्ने गृहपत उप मा ह्वयस्व इति गार्हपत्यमभिमन्त्रयते ॥ ५ ॥ देवानां पत्नीरुप मा ह्वयध्वम् इति देवपत्नीरपरेण गार्हपत्यम् ॥ ६ ॥ देवपत्न्या लोकमुपतिष्ठते[7] पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिँसीः इति ॥ ७ ॥ देशाद् दक्षिणत उदीच्युपविशति इन्द्राणीवाविधवा भूयासमदितिरिव सुपुत्रा। अस्थूरि त्वा गार्हपत्योपनिषदे सुप्रजास्त्वाय इति ॥ ८ ॥ गार्हपत्यमभिमन्त्रयते सुप्रजसस्त्वा वयम् इत्येतया ॥ ९ ॥ मम पुत्राः शत्रुहणो अथो मे दुहिता विराट्। उताहमस्मि संजया

1. $B_3$ मूलै°
2. $A_1$ जुहूस्संमार्ष्ट्युत्तानं; $A_{2-3}$ जुहूमुत्तानां संमार्ष्टि प्राची; $B_{2-3}$ जुहूं संमार्ष्ट्युत्तानं
3. वर्णं पशूनां
4. $A_1$,$B_1$,R वाजिनं
5. Rāmāgnicit on ĀpŚS II.4.9: संमृष्टस्यासंमृष्टपात्रस्पर्शने पुनर्निष्टप्य संमृज्यात् स्वेन मन्त्रेणेति भरद्वाजः। Rudradatta on the same sūtra of ĀpŚS: यदि स्पर्शयेत् पुनरेव निष्टप्य संमृज्यादिति भारद्वाजः। Vāñcheśvara on SatS has cited this sūtra with स्पर्शयेत् for संस्पर्शयेत्.
6. $B_{2,3}$ संमार्ष्टि. In R sūtra 1 ends with प्रहरति. cf. ĀpŚS II.5.1
7. $A_1$,B लोक उप°

पत्युर्मे श्लोक उत्तमः इति च ॥ १० ॥ पूषा ते बिलं विष्यतु इति सर्पिर्धानस्य बिलं विष्यति ॥ ११ ॥ अदितिरस्यच्छिद्रपत्रा इत्याज्यस्थालीमादाय ॥ १२ ॥ ॥५॥

तस्यां पवित्रान्तर्हितायां प्रभूतमाज्यं निर्वपति महीनां पयोऽस्योषधीनाँ रसस्तस्य तेऽक्षीयमाणस्य निर्वपामि देवयज्यायै इति ॥ १ ॥ दक्षिणाग्नावधिश्रयति इदं विष्णुर्वि चक्रमे इति ॥ २ ॥ विलाप्य वा निर्वपति ॥ ३ ॥ इषे त्वा इति दक्षिणार्धे गार्हपत्यस्याधिश्रयति ॥ ४ ॥ ऊर्जे त्वा इत्यपादाय वेदेनोपयम्य[1] पत्न्या उपयच्छति ॥ ५ ॥ तत् सा निमील्यानुच्छ्वसन्त्यवेक्षते[2] महीनां पयोऽस्योषधीनाँ रसोऽदब्धेन त्वा चक्षुषावेक्षे सुप्रजास्त्वाय इति ॥ ६ ॥ तेजोऽसि इत्युत्तरार्धे गार्हपत्यस्याधिश्रयति ॥ ७ ॥ तेजसे त्वा इत्यपादाय वेदेनोपयम्याहरति[3] तेजोऽसि तेजोऽनु प्रेहि इति ॥ ८ ॥ आहवनीयेऽधिश्रयति अग्निस्ते तेजो मा वि नैत् इति ॥ ९ ॥ उत्तरेण प्रोक्षणीः स्फ्यस्य वर्त्मन् सादयति अग्नेर्जिह्वासि सुभूर्देवानां[4] धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे भव इति ॥ १० ॥ अथैनदध्वर्युश्च यजमानश्च निमील्यानुच्छ्वसन्ताववेक्षेते[5] आज्यमसि इति प्रतिपद्य तस्य ते भक्षीय इत्यन्तेन ॥ ११ ॥ अथैनदुदगग्राभ्यां पवित्राभ्यां[6] पुनराहारं त्रिरुत्पुनाति शुक्रमसि ॥ ज्योतिरसि ॥ तेजोऽसि इत्येतैर्मन्त्रैः ॥ १२ ॥ आज्यवतीभ्यां पवित्राभ्यां[7] प्रोक्षणीरुत्पुनाति देवो वः सवितोत्पुनातु इति पच्छो गायत्र्या ॥ १३ ॥ ॥६॥

अनिष्कासिना स्रुवेणान्तर्वेद्याज्यानि गृह्णाति वेदे स्रुचोऽत्याधाय[8] ॥ १ ॥ चतुर्गृहीतं जुह्वां शुक्रं त्वा शुक्रायां धाम्नेधाम्ने देवेभ्यो यजुषेयजुषे गृह्णामि इत्येतैस्त्रिभिर्मन्त्रैः । पञ्चानां त्वा वातानाम् इति चतुर्थम् ॥ २ ॥ एवमेवोत्तरैर्मन्त्रैरुपभृति[9] ध्रुवायामिति गृह्णाति ॥ ३ ॥ अष्टगृहीतमुपभृति चतुर्गृहीतं ध्रुवायाम् । पञ्चगृहीतं पशुकामस्य ॥ ४ ॥ तैरेव मन्त्रैर्यजमानोऽनुमन्त्रयते[10] ॥ ५ ॥ अपि वाध्वर्युरेवैवाध्वर्युर्गृह्णीयात् ॥ ६ ॥ याजमानैर्यजमानोऽनुमन्त्रयते ॥ ७ ॥ भूयो जुह्वां गृह्णात्यल्पीय उपभृति भूयिष्ठं ध्रुवायाम् ॥ ८ ॥ समंविलं धारयमाणो जुह्वां गृह्णाति

1. $B_1$ °यत्य
2. Thus all MSS. ĀpŚS II.6.2 : निमील्य वीक्ष्यानुच्छ्व°
3. Thus $A_1$,$B_3$; $B_2$ वेदेनोपयाम्या°; $A_{2-5}$,$B_1$ वेदेनोपयत्वा°; R वेदेनोपहरा°
4. $B_2$ जुह°
5. Thus $B_{2,3}$; $A_{,,}$$B_1$,R, ĀpŚS II.6.6 : निमील्य वीक्ष्यानुच्छ्व°
6. A,$B_{1,2}$ omitted
7. A,$B_2$ omitted
8. The translation of sūtras 1 and 2 should be adjusted according to the text printed above.
9. $B_3$ एवमेवोत्तरैरुत्तरै°
10. $B_1$ °मेत

मध्यदेश उपभृति भूमौ[1] प्रतिष्ठितायां ध्रुवायाम् ॥ ९ ॥ नान्तर्वेदि गृहीतस्य पश्चात् प्रतिहरति[2] ॥ १० ॥ नोत्कर आज्यं किंचन सादयति ॥ ११ ॥ आपो देवीरग्रेपुवः इति प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्रयते ब्रह्मन् प्रोक्षिष्यामि इति ॥ १२ ॥ प्रसूतो ब्रह्मणा विपार्येध्मं प्रोक्षति कृष्णोऽस्याखरेष्ठोऽग्नये त्वा स्वाहा इति ॥ १३ ॥ वेदिरसि इति वेदिम् । बर्हिरसि इति बर्हिः । एकैकं त्रिस्त्रिः प्रोक्षति ॥ १४ ॥ अन्तर्वेदि पुरोग्रन्थि[3] बर्हिरासाद्य प्रोक्षति । दिवे त्वा इत्यग्रम् । अन्तरिक्षाय त्वा इति मध्यम् । पृथिव्यै त्वा इति मूलम् ॥ १५ ॥ स्रुच्यग्राण्युपपाय्य मूलान्युपपाययति ॥ १६ ॥ ॥७[4]॥

सह स्रुचा पुरस्तात् प्रत्यञ्चं ग्रन्थिं प्रत्युक्षति पोषाय त्वा इति ॥ १ ॥ यत्प्रोक्षणीनामुच्छिष्येत[5] तदन्तर्वेदि निनयति स्वधा पितृभ्यः इति ॥ २ ॥ दक्षिणायै श्रोणेरुपक्रम्योत्तरस्याः संततां धारां स्रावयति[6] ॥ ३ ॥ पूषा ते ग्रन्थिं विष्यतु इति बर्हिर्विस्रँसयति ॥ ४ ॥ ऊर्ध्वं प्राञ्चमुदगूढं प्रत्यञ्चमायच्छति[7] ॥ ५ ॥ पुरस्तात् प्रस्तरं गृह्णाति । नानुमार्ष्टि न प्रतिमार्ष्टि नावधूनोति[8] । कर्पञ्चिवाषादत्ते[9] विष्णो स्तूपोऽसि इति ॥ ६ ॥ तस्मिन् पवित्रे अपिसृजति अयं प्राणश्चापानश्च यजमानमपिगच्छताम् । यज्ञे ह्यभूतां पोतारौ पवित्रे हव्यशोधने इति ॥ ७ ॥ ततः संप्रेष्यति[10] स्तृणीत[10] बर्हिः परिधत्त वेदिं जामिं मा हिँसीरमुया शयाना । दर्भैः स्तृणीत हरितैः सुवर्णैर्निष्का इमे यजमानस्य ब्रध्ने इति ॥ ८ ॥ ब्रह्मणे प्रस्तरं प्रयच्छति[11] प्राणापानाभ्यां त्वा सतनुं करोमि इति ॥ ९ ॥ ब्रह्मा यजमानाय यजमाने प्राणापानौ दधामि इति ॥ १० ॥ मयि प्राणापानौ इति यजमानः प्रत्याह ॥ ११ ॥ शुल्वं स्तृणाति ऊर्णाम्रदसं त्वा स्तृणामि इत्या दक्षिणायै श्रोणेः[12] प्रपाद्योत्तरस्मादँसात्[13] संततम् ॥ १२ ॥ सर्वस्यां

---

1. $B_{2,3}$ भूमि
2. Thus $B_1$; A,R प्रतिहरति; $B_2$ प्रहरति. Vāñcheśvara on SatS (66a) : पश्चात् प्रतिहरतीति भारद्वाजः ।
3. $B_2$ omitted
4. A omitted
5. Thus $A_1$,$B_2$; $A_{2-3}$,R °ष्यति°; $B_1$ °मुच्छेष्यति
6. $A_1$,$B_1$ स्राविष्या वयति; $A_{2-3}$ स्राविष्या वपति
7. $A_1$,$B_1$ प्रत्यंचमप्य; $A_{2-3}$ °च्छेत्
8. $B_1$ न वसूनोति; $B_3$ न विधूनोति
9. Thus $A_{2,3}$; $A_1$,$B_1$ वर्पवापादत्ते; $A_4$ °पाधाते; $A_3$ °पापत्ते; $B_2$ °पाद्रे
10. $A_1$ °ष्यत्यस्तृ°; $A_{2-5}$ °ष्यत्यभिस्तृ°; $B_1$ °ष्यत्यस्तृ°
11. $B_2$ omitted
12. $A_1$ श्रोणी; $A_{2-3}$ श्रोण्या; $B_1$ श्रोण्ये. cf. II.8.3. K closes sūtra 12 with स्तृणामि इति.
13. $A_1$,$B_1$ पाद्यो°; $B_{2,3}$ उपक्रम्योत्तर°

वेद्यां बर्हिः स्तृणाति बहुलमनतिदृश्नम् ऊर्णाम्रदसं त्वा स्तृणामि इति त्रिधातु पञ्चधातु वा प्रागपवर्गं प्रत्यगपवर्गं वा ॥ १३ ॥ अग्रैर्मूलान्याच्छादयति[1] ॥ १४ ॥ ॥८॥

धातौधातौ मन्त्रं जपति[2] ॥ १ ॥ अत्रैकेऽनूयाजार्थे उल्मुके निरूहन्ति ॥ २ ॥ प्रस्तरं धारयमाणोऽपरेणाहवनीयँ सँस्पृष्टान् परिधीन् परिदधाति। उदगग्रं मध्यमं गन्धर्वोऽसि विश्वावसुः इति इन्द्रस्य बाहुरसि इति दक्षिणं मित्रावरुणौ त्वा इत्युत्तरम् ॥ ३ ॥ अभ्यग्रमाहवनीयं दक्षिणमवाग्रमुत्तरम्[3] ॥ ४ ॥ एवमनुपूर्वाण्येवैष्णवत[4] ऊर्ध्वं कर्माणि क्रियन्ते ॥ ५ ॥ सूर्यस्त्वा पुरस्तात् पातु इत्याहवनीयमभिमन्त्र्य मध्येऽग्नेरूर्ध्वे[5] आघारसमिधावादधाति ॥ ६ ॥ वीतिहोत्रं त्वा कवे इति दक्षिणाम् ॥ ७ ॥ तूष्णीमुत्तराम् ॥ ८ ॥ बर्हिषः समावनन्तर्गर्भौ विधृती कृत्वा मध्ये वेदेरुदीचीनाग्रे निदधाति विशो यन्त्रे स्थः इति ॥ ९ ॥ विधृत्योः प्रस्तरँ सादयति वसूनाँ रुद्राणामादित्यानाँ सदसि सीद इति ॥ १० ॥ प्रस्तरे जुहूं जुहूरसि घृताची इति ॥ ११ ॥ समं मूलैर्दण्डं करोति ॥ १२ ॥ उत्तरेण जुहूमुपभृतं प्रतिकृष्टतरामधस्ताद्[6] विधृत्योः उपभृदसि इति ॥ १३ ॥ उत्तरेणोपभृतं ध्रुवां प्रतिकृष्टतरामुपरिष्टाद् विधृत्योः ध्रुवासि इति ॥ १४ ॥ असँस्पृष्टाः सादयति ॥ १५ ॥ दक्षिणेन जुहूँ स्रुवँ सादयत्युत्तरेण वा ध्रुवाम् ऋषभोऽसि शाक्वरो घृताचीनाँ सूनुः प्रियेण नाम्ना प्रिये सदसि सीद इति ॥ १६ ॥ ॥ ९ ॥

अथैना[7] अभिमन्त्रयते एता असदन् इत्यनुवाकशेषेण ॥ १ ॥ विष्णूनि स्थ वैष्णवानि धामानि स्थ प्राजापत्यानि इत्याज्यान्यभिमन्त्रयते[8] ॥ २ ॥ सस्रुवामाज्यस्थालीं वेदं पात्रीं चादायापरेण गार्हपत्यमुपविश्य इदमहँ सेनाया अभीत्वर्यै मुखमपोहामि इति वेदेन पुरोडाशात् साङ्गारं भस्मापोह्याभिमन्त्रयते सूर्यं ज्योतिर्विभाहि महते इन्द्रियाय बलाय इति ॥ ३ ॥ पात्र्यामुपस्तृणाति स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः इति ॥ ४ ॥

1. $B_3$ °मूलान्यभि°
2. cf. foot-note [illegible] I.4.4
3. Thus $B_2$; $A_1$,$B_1$ दक्षिणं वाम°; $B_3$ दक्षिणं वा पायम°; R °मवागम° cf. ĀpŚS II.9.6
4. $B_3$ °वैतेष्वत
5. Rudradatta on ĀpŚS II.9.9: मध्येऽग्नेरिति भारद्वाजः। Vāñcheśvara on SatS (67b) has quoted this sūtra verbatim beginning with मध्ये.
6. $B_3$ प्रतिकृष्टतर°
7. $A_1$,$B_{1,3}$ °नाम्
8. Rāmāgnicit on ĀpŚS II.10.4: विष्णूनीति सुचामाज्यस्थाल्या अभिमन्त्रणं न स्थालीस्थस्य भरद्वाजमताच।

आज्येनाभिघारयति आप्यायतां घृतयोनिरग्निर्हव्यानुमन्यताम् । खमङ्क्ष्व त्वचमङ्क्ष्व सुरूपं त्वा वसुविदं पशूनां तेजसाग्नये जुष्टमभिघारयामि इति दक्षिणम् । तूष्णीमुत्तरम् ॥ ५ ॥ सांनाय्यमभिघारयति यस्त आत्मा पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे । आत्मन्वान् सोम घृतवान् हि भूत्वा देवान् गच्छ सुवर्विन्द यजमानाय मह्यम् इति ॥ ६ ॥ पात्र्यामुद्वासयति आर्द्रः प्रथस्नुर्भुवनस्य गोपाः । शृत उत्स्नाति जनिता मतीनाम् इति ॥ ७ ॥ न पर्यावर्तयति न भिनत्ति ॥ ८ ॥ ॥१०॥

इरा भूतिः पृथिव्यै रसो मोत्क्रमीत् इति कपालानि प्रत्यनक्ति ॥ १ ॥ अथैनावपरिवर्गमणिकापमनक्ति[1] देवस्त्वा सविता मध्वानक्तु इति ॥ २ ॥ उपरिष्टादभ्यज्याधस्तादुपानक्ति ॥ ३ ॥ स्वक्तमकूर्मपृषन्तं[2] कृत्वा सांनाय्ये चालंकृत्यान्तर्वेदि चतुर्होत्रा पौर्णमास्याँ हवीँष्यासादयेत् । पञ्चहोत्रामावास्यायाम् ॥ ४ ॥ भूर्भुवः सुवः इति प्रथमायां पौर्णमास्याम् ॥ ५ ॥ संवत्सरे पर्यागत एताभिरेवासादयेत् ॥ ६ ॥ प्रथम एव संवत्सरं इत्याश्मरथ्यः । संवत्सरेसंवत्सर इत्यालेखनः[3] ॥ ७ ॥ अपरेण स्रुचः पुरोडाशावासादयति ॥ ८ ॥ मध्ये वेदेः सांनाय्यकुम्भ्यौ संधाय दक्षिणस्यां वेदिश्रोण्याँ शृतमासादयत्युत्तरस्यां दधि ॥ ९ ॥ अपि वा पूर्वँ शृतमपरं दधीत्येकेषाम् ॥ १० ॥ अग्रेण ध्रुवां वेदँ सादयति अयं वेदः पृथिवीमन्वविन्दद् गुहा सतीं गहने गह्वरेषु । स विन्दतु यजमानाय लोकमच्छिद्रं यज्ञं भूरिकर्मा करोतु इति ॥ ११ ॥ वेद्यन्तान् परिस्तीर्य होतृषदनं कल्पयति ॥ १२ ॥ जघनेन वेदिमुदगग्रैर्दर्भैः सँस्तीर्णं भवति ॥ १३ ॥ ॥११॥

ततः संप्रेष्यति अग्नये समिध्यमानायानुब्रूहि इति ॥ १ ॥ आसीन इध्मं प्रणवेप्रणवे समिधमादधाति ॥ २ ॥ यत्राभिजानाति समिद्धो अग्न आहुत इति तदेकामनूयाजसमिधमवशिष्य सर्वमिध्मशेषमभ्याधाय वेदेनाहवनीयं त्रिरुपवाजयति ॥ ३ ॥ स्रुवेण ध्रुवाया आज्यमादाय वेदेनोपयम्योत्तरं परिधिसंधिमन्ववहृत्य दक्षिणाप्राङ्ङासीनः संततमृजुमाघारमाघारयति[4] प्रजापतिं मनसा ध्यायन् ॥ ४ ॥ स्रुवेणाज्यस्थाल्या आज्यमादाय ध्रुवामाप्याययति आ प्यायतां ध्रुवा घृतेन इत्येतया

1. Thus $B_2$; $A_1$ °मनीकाप°; $A_{3-5}$,$B_2$ °निका°; $B_1$ °मनिकप°
2. Thus $D_2$; $A_1$ स्वक्तः कूर्मपृषंतं; $A_{2-5}$,R स्वक्तकूर्मपृषंतं; $B_3$ स्वक्तं कूर्मिपृषंतं; $B_1$ missing
3. *Subodhinī* on BaudhŚS I.14 quotes verbatim sūtras 4-7 beginning with चतुर्होत्रा पौर्णमास्याँ.
4. In H sūtra 4 ends here.

॥ ५ ॥ तत्रैपोऽत्यन्तप्रदेशो यत्र क्व च ध्रुवाया आज्यमादत्त एवमेवैनामाप्याययति[1]। ध्रुवाया एवानादिष्टाज्यार्थाः क्रियन्ते ॥ ६ ॥ ततः संप्रेष्यति अग्नीत् परिधीँश्चाग्निं च त्रिस्त्रिः संमृड्ढि इति ॥ ७ ॥ सस्फ्यैरिध्मसंनहनैराग्नीध्रः परिधीँश्चाग्निं च त्रिस्त्रिः संमार्ष्टि ॥ ८ ॥ तूष्णीं परिधीन् ॥ ९ ॥ अग्ने वाजजिद् वाजं त्वा सरिष्यन्तं वाजं जेष्यन्तं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्याय इत्यग्निं संमार्ष्टि ॥ १० ॥ अग्रेण जुहूं ध्रुवां वोत्तानौ[2] पाणी प्रतिष्ठाप्य ॥ ११ ॥ ॥१२॥

आहवनीयायाञ्जलिं करोति[3] भुवनमसि वि प्रथस्वाग्ने यष्टरिदं नमः इति ॥ १ ॥ जुहूमादत्ते जुह्वेहि इति। उपभृतम् उपभृदेहि इति ॥ २ ॥ उपभृति जुहूमत्यादधाति सुयमे मे अद्य घृताची भूयास्तं स्वावृतौ सूपावृतौ इति ॥ ३ ॥ तत्रैपोऽत्यन्तप्रदेशो यत्र क्व चोपभृति जुहूमत्यादधाति स्रुवत एवाध्यूहति स्रुवत उपावहरति ॥ ४ ॥ न च सँशिञ्जयति[4] नाभिदेशे च स्रुचौ धारयते ॥ ५ ॥ समं प्राणैरित्येकेषाम् ॥ ६ ॥ अग्रेण ध्रुवामनवक्लिश्नन् प्रस्तरमत्याक्रामति अग्नाविष्णू मा वामव क्रमिषम् इति ॥ ७ ॥ दक्षिणतोऽवतिष्ठते विष्णो स्थानमसि इति ॥ ८ ॥ अन्तर्वेदि दक्षिणः पादो भवति। अवघ्र[5] इव[5] सव्यः ॥ ९ ॥ दक्षिणं परिधिसंधिमन्ववहृत्योर्ध्वस्तिष्ठन्नन्वारब्धे यजमाने प्राञ्चमुदञ्चं संततमृजुमाघारमाघारयति समारभ्योर्ध्वो अध्वरः इति ॥ १० ॥ न्यञ्चमाघारयेद् वृष्टिकामस्योर्ध्वँ स्वर्गकामस्य ॥ ११ ॥ एवं भूयिष्ठमाहुतीनां जुहोति ॥ १२ ॥ हुत्वानुप्राणिति[6] ॥ १३ ॥ हिं स्रुवद्भ्यः इति स्रुचावुद्गृह्णाति ॥ १४ ॥ असँस्पर्शयन् स्रुचौ प्रत्याक्रामति ॥ १५ ॥ ॥१३॥

पाहि माग्ने दुश्चरितादा मा सुचरिते भज इति ॥ १ ॥ एते एवाक्रमणप्रत्याक्रमणे मन्त्रवती भवतः ॥ २ ॥ तत्रैपोऽत्यन्तप्रदेशो या उत्तरतः सन्त्याहुतीर्जुहोत्युत्तरं परिधिसंधिमन्ववहृत्य ता जुहोति। या दक्षिणतो दक्षिणं परिधिसंधिमन्ववहृत्य ताः ॥ ३ ॥ दक्षिणेनैव दक्षिणात्याक्रामति[7] सव्येनोदङ्। अपि वा सव्येन दक्षिणा दक्षिणेनोदङ् ॥ ४ ॥ प्रत्याक्रम्य जुह्वा ध्रुवाँ समनक्ति मखस्य शिरोऽसि सं ज्योतिषा

1. Thus $B_3$; A °मेवैनमा°; $B_1$ °मेवैना आप्या°
2. Thus $B_{2,3}$; $A_1$,$B_1$ वोत्तानिनो; $A_{2,3}$ चोत्तानिनो; $A_{4,5}$,R चोत्तानो, See: ĀpSS II.13.2
3. Rudradatta on ĀpSS II.13.2: आहवनीयायाञ्जलिं करोतीति भारद्वाजवचनात्।
4. $A_{1-5}$ संशिञ्ज°
5. $A_1$ अवस्रुव; $A_{2-5}$ अवघ्रः; $B_1$ अविस्रुव; $B_2$ अवघ; $B_3$ अवघ्र; ĀpSS II.13.10 अवघ्र
6. Thus $B_{2,3}$; A,$B_1$,R हुत्वा हं माणिति; ĀpSS II.14.9 हुत्वाभिप्राणिति
7. Thus $B_3$; $A_1$ दक्षिणमत्या°; $A_{2-5}$ दक्षिणं क्रा°; $B_1$ दक्षिणक्रामति; R दक्षिणाक्रा°

ज्योतिरद्रुह्काम् इति ॥ ५ ॥ उन्नीतं[1] रायः इति स्रुवेण ध्रुवाया आज्यमादाय स्रुवीराथ स्वाहा इति जुहूं प्रत्यभिघारयति ॥ ६ ॥ यज्ञेन यज्ञः संततः इति जुह्वा ध्रुवाम् ॥ ७ ॥ निधाय स्रुचौ वेदेरत्यन्तं[2] तृणमादायोत्तरत उत्करे[3] प्राञ्चौ प्रवरायावतिष्ठेते क इदमध्वर्युर्भविष्यति स इदमध्वर्युर्भविष्यति। यज्ञो यज्ञस्य विष्णोः स्थाने तिष्ठामि। वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु। वाचं प्रपद्ये भूर्भुवः सुवः इति पूर्वोऽध्वर्युः। क इदमग्नीद् भविष्यति स इदमग्नीद् भविष्यति। यज्ञो यज्ञस्य विष्णोः स्थाने तिष्ठामि। वागार्त्विज्यं करोतु मन आर्त्विज्यं करोतु। वाचं प्रपद्ये भूर्भुवः सुवः इति ॥ ८ ॥ ॥१४॥

अपर आग्नीध्रः ॥ १ ॥ स्फ्यं चेध्मसंनहनानि चान्वारभेते[4] ॥ २ ॥ ब्रह्माणमामन्त्रयते ब्रह्मन् प्रवरायाश्रावयिष्यामि इति ॥ ३ ॥ प्रसूतो[5] ब्रह्मणाश्रावयति[5] आश्रावय इति ओश्रावय इति वा ॥ ४ ॥ अस्तु श्रौषट् इत्याग्नीध्रः प्रत्याश्रावयति ॥ ५ ॥ तत्रैषोऽत्यन्तप्रदेशो यत्र क्व चाध्वर्युराश्रावयेन्नित्यमेवाग्नीध्रोऽपरेणोत्करं दक्षिणामुखस्तिष्ठन् स्फ्यं सेध्मसंनहनमूर्ध्वं धारयमाणः प्रत्याश्रावयति ॥ ६ ॥ आग्नीध्रागारे तु सोमे[6] ॥ ७ ॥ आश्राव्य प्रवरं प्रवृणीते अग्निर्देवो होता देवान् यक्षद् विद्वाँश्चिकित्वान् मनुष्वद्भरतवददोऽवददोवत्[7] इति यथार्षेयो यजमानः[8] ॥ ८ ॥ त्रीनार्षेयान्[8] मन्त्रकृत इतऊर्ध्वान् वृणीते ॥ ९ ॥ अपि वा मनुवद् इत्येव प्रवृणीते ॥ १० ॥ पुरोहितस्यार्षेयान् राज्ञः प्रवृणीते ॥ ११ ॥ ब्रह्मण्वदा च वक्षद् ब्राह्मणा अस्य यज्ञस्य प्रावितारः इत्युक्त्वा असौ इति होतुरुपांशु नाम गृह्णाति ॥ १२ ॥ मानुषः इत्युच्चैः ॥ १३ ॥ वेद्यां तृणमपिसृज्य ॥ १४ ॥ ॥ १५ ॥

अनपव्याहरन्तः प्रचरन्तीति विज्ञायते ॥ १ ॥ यत्राभिजानाति घृतवती-मध्वर्यो[9] स्रुचमास्यस्व इति तज्जुहूपभृतावादायात्याक्रम्याश्राव्याह समिधो यज इति

1. $A_1$,$B_1$ स्वनीतं; $B_2$ त्रिरुन्नीतं
2. A,$B_1$ °रत्यंतं; $B_2$ °रत्यन्तः; $B_3$ °रत्यन्त
3. Rudradatta on ĀpŚS II.15.1 : तत्रोत्तरत उत्करे इति भारद्वाजबौधायनौ ।
4. $B_3$ चान्वारभते
5. Thus $B_3$; $A_1$ प्रसूते ब्रह्मणोश्रा°; $A_2$ ततो ब्रह्मणा श्रावयावप्रसूतोध्वर्यु°; $A_{3-5}$,R ततो ब्रह्मणा प्रसूतोऽध्वर्युराश्रावयति; $B_1$ प्रसूते ब्रह्मणा°; $B_2$ प्रसूतो ब्रह्म श्रावयति
6. *Subodhinī* on BaudhŚS quotes verbatim sūtra 6 commencing with यत्र क्व च and also sūtra 7 omitting the word तु.
7. $A_1$ °भरतवददोवत्; $A_{3-5}$ °भरतवददावत्; $B_1$ °भरतवद्देनाद्देवदिति; $B_2$ °भरतवदोवद-तोवत्; $B_3$ °भरतवददोवदिति
8. $A_{2-5}$,$B_1$ यजमानार्षेयान्
9. $B_2$ मधुमती°

॥ २ ॥ वषट्कृते जुहोति ॥ ३ ॥ आश्राव्याश्राव्य यज यज इत्येवोत्तरेभ्यः संप्रेष्यति[1] ॥ ४ ॥ अपरेणाघारसंभेदं प्राचः प्रयाजानभिक्रामं[2] जुहोति ॥ ५ ॥ समानत्र वा ॥ ६ ॥ अपि वा समिधः पुरस्ताद् यजति तनूनपातं दक्षिणत इडः पश्चाद् बर्हिरुत्तरतः स्वाहाकारं मध्ये ॥ ७ ॥ यत्र समिद्धतमस्तत्र[3] सर्वा आहुतीर्जुहुयात् ॥ ८ ॥ चतुर्थे होष्यन्नौपभृतादर्धं जुह्वामानयते[4] ॥ ९ ॥ पञ्च प्रयाजानिष्ट्वा प्रत्याक्रम्य यज्जुह्वामाज्यं परिशिष्टं तेन[5] हवींष्यभिघारयति ध्रुवामग्रेऽथाग्नेयं पुरोडाशमथोत्तरमथ भृतमथ दध्युपभृतमन्ततः ॥ १० ॥ अथायतने स्रुचौ सादयित्वा पुनरादत्ते ॥ ११ ॥ एवमादत्ते भवत आ स्विष्टकृतः ॥ १२ ॥ तत[6] आज्यभागाभ्यां प्रचरति ॥ १३ ॥ अग्नयेऽनुब्रूहि इति संप्रेष्यति ॥ १४ ॥ जुह्वां चतुर्गृहीतमाज्यं गृहीत्वा पञ्चगृहीतं वात्याक्रम्याश्राव्याह अग्निं यज इति ॥ १५ ॥ वषट्कृत उत्तरार्धपूर्वार्धे[7] जुहोति ॥ १६ ॥ नैतामुत्तरेणान्यामाहुतिं जुहोति ॥ १७ ॥ प्रत्याक्रम्य ॥ १८ ॥ ॥१६॥

सोमायानुब्रूहि इति संप्रेष्यति[8] ॥ १ ॥ यथागृहीतमाज्यं गृहीत्वात्याक्रम्याश्राव्याह सोमं यज इति ॥ २ ॥ वषट्कृते दक्षिणार्धपूर्वार्धे प्रबाहुक् पूर्वया जुहोति ॥ ३ ॥ नैतां दक्षिणेनान्यामाहुतिं जुहोति ॥ ४ ॥ प्रत्याक्रम्य ॥ ५ ॥ तत्रैपोऽत्यन्तप्रदेशः स्रुवेणैवाज्यदोहयोरित्यवद्यति[9] हस्तेन पुरोडाशस्य ॥ ६ ॥ जमदग्नीनामेव पञ्चावत्तं चतुरवत्तमितरेषाम् ॥ ७ ॥ अप्यजामदग्न्यो जामदग्न्यमानन्त्य पञ्चावत्तं कुर्वीत ॥ ८ ॥ ततः संप्रेष्यति अग्नयेऽनुब्रूहि इति ॥ ९ ॥ जुह्वामुपस्तीर्याग्नेयस्य पुरोडाशस्याङ्गुष्ठेन माँससँहिताभ्यामङ्गुलीभ्यां मध्यादवदाय पूर्वार्धादवद्यति पश्चार्धात् तृतीयं यदि पञ्चावदानः मा भेर्मा संविक्था मा त्वा हिँसिषं मा ते तेजोऽपक्रमीत्। भरतमुद्धरेमनुषिञ्च। अवदानानि ते प्रत्यवदास्यामि। नमस्ते अस्तु मा मा हिँसीः इति ॥ १० ॥ अङ्गुष्ठपर्वमात्राण्यवदानान्यसंभिन्दन्नवद्यति ॥ ११ ॥ अवदानान्यभिघार्य हविः प्रत्यभिघारयति यदवदानानि तेऽवद्यन् विलोमाकार्षमात्मनः। आज्येन

1. *Subodhinī* on BaudhŚS I.16 quotes this sūtra verbatim.
2. Thus $A_1$,$B_3$; $B_2$ प्रयाजानभि च क्रामन्
3. Thus $B_{2,3}$; A,$B_1$,R समिधस्तत्र
4. $B_{1,3}$ जुह्वां समा°
5. Vāñcheśvara on SatS (13b) has cited this sūtra verbatim from तेन up to दधि.
6. Thus $A_1$,$B_{2,3}$; $A_{2-3}$,$B_1$,R omitted
7. $A_{2-3}$ उत्तरार्धे. Vāñcheśvara on SatS (14a) has cited sūtras 15 and 16 verbatim.
8. A,$B_1$ omitted
9. $B_2$ °दोहयोरव°

प्रत्यनज्म्येनद् तत् त आप्यायतां पुनः इति ॥ १२ ॥ अत्याक्रम्याश्राव्याह अग्नि यज इति ॥ १३ ॥ वषट्कृते मध्ये जुहोति ॥ १४ ॥ अविद्धदिवाप्रक्षिणन्नाज्यं[1] हुत्वा पुरोडाशं जुहोति तत आज्यम् ॥ १५ ॥ ॥१७॥

पूर्वापूर्वा" सँहितामाहुतिं जुहोत्या स्विष्टकृतः ॥ १ ॥ अपि वा स्रुच्यमाघारमभिजुहुयात्[2] ॥ २ ॥ तत उपाँशुयाजाय संप्रेष्यति विष्णवे इत्युपाँशु अनुब्रूहि इत्युच्चैः ॥ ३ ॥ यथागृहीतमाज्यं गृहीत्वात्याक्रम्याश्राव्याह विष्णुम् इत्युपाँशु यज इत्युच्चैः ॥ ४ ॥ वषट्कृते जुहोति ॥ ५ ॥ अग्नीषोमीयमेक उपाँशुयाजँ समामनन्ति प्राजापत्यमेके ॥ ६ ॥ स एष पौर्णमास्यामेव भवति ॥ ७ ॥ यथाग्नेयेनैवमुत्तमेन पुरोडाशेन प्रचरति अग्नीषोमाभ्याम् इति पौर्णमास्याम् इन्द्राग्निभ्याम् इत्यमावास्यायामसंनयतः[3] ॥ ८ ॥ अथ यदि संनयेत् इन्द्रायानुब्रूहि इति संप्रेष्यति[4] ॥ ९ ॥ महेन्द्राय इति वा यदि[4] महेन्द्रयाजी भवति ॥ १० ॥ जुह्वामुपस्तीर्य द्विः शृतस्यावद्यति द्विर्दध्नश्चतुरवदानस्य त्रिः"[5] पञ्चावदानस्य ॥ ११ ॥ अभिघार्यात्याक्रम्याश्राव्याह इन्द्रं यज इति ॥ १२ ॥ महेन्द्रम् इति वा ॥ १३ ॥ वषट्कृते जुहोति ॥ १४ ॥ प्रत्याक्रम्य स्रुवेण पार्वणौ होमौ जुहोति ऋषभं वाजिनं वयं पूर्णमासं यजामहे। स नो दोहतां सुवीर्यं" रायस्पोषँ सहस्रिणम्। प्राणाय सुराधसे पूर्णमासाय स्वाहा इति पौर्णमास्याम्। अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना। सा नो दोहतां सुवीर्यं" रायस्पोषँ सहस्रिणम्। अपानाय सुराधसेऽमावास्यायै स्वाहा इत्यमावास्यायाम् ॥ १५ ॥ ॥१८॥

अत्र नारिष्ठान् होमाञ्जुहोति
दश ते तनुवो यज्ञ यज्ञियास्ताः प्रीणातु यजमानो घृतेन।
नारिष्ठयोः प्रशिषमीडमानो देवानां दैव्येऽपि यजमानोऽमृतोऽभूत् स्वाहा ॥
यं वां देवा अकल्पयन्नूर्जो भागँ शतक्रतू।
एतद्वां तेन प्रीणानि तेन तृप्यतमँहहौ स्वाहा ॥
अहं देवानाँ सुकृतामस्मि लोके ममेदमिदं न मिथुर्भवाति।

1. Emended. $A_1$ अपिद्भिवा प्रदक्षिणं नाज्यं; $A_{2-3}$ अविदधद्दिवाप्रदक्षणन्नाज्यं; $B_1$ अविदधति वा प्रदक्षिणं; $B_2$ अविदयद्दिवा प्रदक्षिणं नाज्यं; $B_3$ °प्रदक्षिणन्तन्नाज्यां
2. Rudradatta on ĀpSS II.19.9: तथा स्रुच्यमाघारमभिजुहोति पूर्वां पूर्वां वेत्येव सत्याषाढभारद्वाजौ।
3. Thus $B_{2,3}$; $A, B_1, R$ °याभिव्यधंनयतः
4. $B_2$ omitted
5. $B_{2,3}$ त्रिस्त्रिः

अहं नारिष्ठावनुयजामि विद्वान् यदाम्यामिन्द्रो अदधाद् भागधेयँ स्वाहा ॥
अदारसृद् भवत देव सोमास्मिन् यज्ञे मरुतो मृडता नः ।
मा नो विददभिमा मो अशस्तिर्मा नो विदद् वृजना द्वेष्या या स्वाहा ॥

इति ॥ १ ॥ ततः संप्रेष्यति अग्नये स्विष्टकृतेऽनुब्रूहि इति ॥ २ ॥ जुह्वामुपस्तीर्य सर्वेषाँ हविषामुत्तरार्धात् सकृत्सकृच्चतुरवदानस्यावद्यति[1] द्विः पञ्चावदानस्य ॥ ३ ॥ स्थवीयाँस्येतानि दैवतेभ्यो भवन्ति ॥ ४ ॥ द्विरभिघार्य न हविः प्रत्यभिघारयति ॥ ५ ॥ अत्याक्रम्याश्राव्याह अग्निँ स्विष्टकृतं यज इति ॥ ६ ॥ वषट्कृत उत्तरार्धपूर्वार्धेऽतिहाय पूर्वा आहुतीर्जुहोति ॥ ७ ॥ प्रत्याक्रम्यायतने स्रुचौ सादयति ॥ ८ ॥ अत्रैके प्राशित्रं समामनन्ति । उपरिष्टादेके ॥ ९ ॥ ॥१९॥

॥ इति[2] द्वितीयः प्रश्नः[2] ॥

---

1. Thus $B_{2,3}$; A,$B_1$,R अवद्यति is omitted.
2. $A_{2,3}$ द्वितीयः; $A_{4,5}$ इति द्वितीयः; $B_3$ हरिः ओम्

## अथ तृतीयः प्रश्नः

इडापात्रमुपस्तीर्याग्नेयस्य[1] पुरोडाशस्य दक्षिणार्धात् पूर्वमिडावदानमवद्यति मनुना दृष्टां घृतपदीं मित्रावरुणसमीरिताम् । दक्षिणार्धादसंभिन्दन्नवद्याम्येकतोमुखाम् इति ॥ १ ॥ पृष्ठं संभिद्य पूर्वार्धाद् यजमानभागमवद्यत्यणुमिव दीर्घम् ॥ २ ॥ संभेदाद् द्वितीयमिडावदानमवद्यति ॥ ३ ॥ एवं सर्वेषां हविषामिडां समवद्यति[2] ॥ ४ ॥ स्वधीयाँस्येतानि सौविष्टकृतेभ्यो भवन्ति ॥ ५ ॥ अभिघार्यान्तरा हवींषि स्रुचश्च हृत्वा होत्र इडामादधाति ॥ ६ ॥ स्वयं वा होतेडामादत्ते ॥ ७ ॥ अग्रेण होतारमध्वर्युर्दक्षिणातिक्रामत्यनुत्सृजन्नित्र[3] ॥ ८ ॥ होतेडयाध्वर्युं[4] परिगृह्णाति[5] ॥ ९ ॥ पश्चात् प्राङुपविश्य स्रुवेण होतुरङ्गुलिपर्वणी अनक्ति[6] ॥ १० ॥ पूर्वमक्त्वापरमनक्ति ॥ ११ ॥ यथेतं प्रतिपरेत्य पुरस्तात् प्रत्यङ्ङासीन इडाया इडामादधाति ॥ १२ ॥ हस्त्यां होत्रे सकृदुपस्तृणाति द्विरादधाति सकृदभिघारयति ॥ १३ ॥ स्वयं वा होतोत्तरमिडावदानमादत्ते ॥ १४ ॥ लेपादुपस्तृणाति ॥ १५ ॥ लेपादभिघारयति ॥ १६ ॥ उपहूयमानामिडामन्वारभेते अध्वर्युर्यजमानश्च ॥ १७ ॥ यत्राभिजानाति दैव्या अध्वर्यव उपहूता उपहूता मनुष्याः इति ॥ १८ ॥ ॥१॥

तदध्वर्युरेतं मन्त्रं जपति उपहूतः पशुमानसानि इति ॥ १ ॥ यत्राभिजानाति उपहूतोऽयं यजमानः इति तद् यजमान एतमेव मन्त्रं जपति ॥ २ ॥ उपहूतायामिडायामवान्तरेडां होता प्राश्नाति वाचस्पतये त्वा हुतं प्राश्नामि सदसस्पतये त्वा हुतं प्राश्नामि इति ॥ ३ ॥ उपहूतामिडां यजमानपञ्चमा ऋत्विजः प्राश्नन्ति इडे भागं जुषस्व नो जिन्व गा जिन्वार्वतः । तस्यास्ते भक्षिवाणः स्याम सर्वात्मानः सर्वगणाः इति ॥ ४ ॥ प्राश्य तूष्णीमास्त[7] आ मार्जनात् ॥ ५ ॥ अन्तर्वेदि पवित्रवति मार्जयन्ते[8] मनो ज्योतिर्जुषताम् इति ॥ ६ ॥ आग्नेयं पुरोडाशं प्राश्नं विरुज्य प्राशित्र-

---

1. A begins with ॐ; $A_1,B_{2,3}$ °पात्र उप°; $B_1$ begins with हरिः ओं.
2. Mahādeva on SatS II.3 (p.207) quotes this sūtra verbatim.
3. $A_{2-5},B_3$ क्रमत्य°; R closes sūtra 8 with °क्रामति. But see ĀpŚS III.2.2.
4. $A_1,B_{1,3}$ °डाया ध्व°; $A_2$ होतेडामध्वर्युं; $A_{3-5}$ °डाया [illegible]°
5. Thus $A_1$; $A_{2,3},B_1$ परिमृ°; $A_{4,5}$ परिसगृ°; $B_{2,3}$ परिप्रतिगृ°
6. *Subodhinī* on BaudhŚS I.18: पश्चात्प्राङासीनो होतुरङ्गुलिपर्वणी अनक्तीति सत्याषाढभारद्वाजौ । The quotation is identical with SatS. Rudradatta on ĀpŚS III.2.1: तथा च सत्याषाढभारद्वाजौ दक्षिणातिक्रम्य पश्चात्प्राङासीनो होतुरङ्गुलिपर्वणी अनक्तीति ।
7. Thus $B_{2,3}$; $A,B_1,R$ °मासीत
8. Mahādeva on SatS: भारद्वाजश्चाह अन्तर्वेदि पवित्रवति मार्जयन्त इति ।

हरणमादाय प्राशित्रमवद्यति अज्यायो यवमात्रादाव्याधात् कृत्यतामिदम्। मा रूरुपाम यज्ञस्य शुद्धँ स्विष्टमिदँ हविः इति ॥ ७ ॥ एवमुत्तरेणामविरुज्य[1] ॥ ८ ॥ अङ्गुष्ठेनोपमध्यमया[2] चाङ्गुल्या यवमात्रं पिप्पलमात्रं वा[3] संवृत्य प्राशित्रहरणे निधायाभिघार्य वेदेनोपयम्याग्रेणाहवनीयं ब्रह्मणे परिहरति ॥ ९ ॥ अग्रेण ध्रुवां यजमानभागं निधाय[3] ॥ १० ॥ ॥२॥

आग्नेयं पुरोडाशं बर्हिषदं कृत्वा यजमानोऽभिमृशति। तद् याजमाने व्याख्यास्यामः ॥ १ ॥ अथैनं चतुर्धा कृत्वा व्यादिशति[4] इदं ब्रह्मणः। इदँ होतुः। इदमध्वर्योः। इदमग्नीधः इति ॥ २ ॥ इदं यजमानस्य इत्यध्वर्युर्यजमानभागम् ॥ ३ ॥ स्थवीयाँस्येतानीडावदानेभ्यो भवन्ति ॥ ४ ॥ व्यादिश्याग्नीधे[5] षडवत्तमादधाति ॥ ५ ॥ उपस्तीर्यावदायाभिघार्य[6] पुनरेवोपस्तीर्यावदायाभिघारयति[7]। षडवत्तँ संपादयति ॥ ६ ॥ प्राश्नात्याग्नीध्रः[8] उपहूतो द्यौः पितोप मां द्यौः पिता ह्वयताम्। अग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्याय इति ॥ ७ ॥ वेदेन ब्रह्मयजमानभागौ परिहरति ॥ ८ ॥ अन्येन होत्रेऽन्येनाध्वर्यवे ॥ ९ ॥ पृथिव्यै भागोऽसि इति होता प्राश्नाति। अन्तरिक्षस्य भागोऽसि इत्यध्वर्युः। दिवो भागोऽसि इति सँस्थिते ब्रह्मा ॥ १० ॥ अन्वाहार्यपचने महान्तमोदनं पक्त्वाभिघार्यानभिघार्य वोद्वास्यान्तर्वेद्यन्वाहार्यमासन्नं यजमानोऽभिमृशति। तद् याजमाने व्याख्यास्यामः ॥ ११ ॥ ॥३॥

दक्षिणसद्भ्य उपहर्तवै इति संप्रेष्यति ॥ १ ॥ य ऋत्विजामुत्तरतः स्युस्तान् ब्रूयाद् दक्षिणत एत इति ॥ २ ॥ तेभ्यो दक्षिणत आसीनेभ्योऽन्वाहार्यं दक्षिणां[9] ददाति ब्राह्मणा अयं व ओदनः इति ॥ ३ ॥ उत्तरतः परीत इति पुनराह ॥ ४ ॥ हविःशेषानुद्वास्योल्मुके अपिसृज्य संप्रेष्यति ब्रह्मन् प्रस्थास्यामः समिधमाधायाग्नीद् परिधीँश्चाग्निं च सकृत्सकृत् संमृड्ढि इति ॥ ५ ॥ प्रसूतो ब्रह्मणाग्नीध्रोऽनूयाजसमिधमा-

1. In R sūtra 8 ends with उत्तरेणाम्.
2. Rudradatta on ĀpŚS III.1.3: तत्र अविरुज्योत्तरस्मादिति तु सत्याषाढभारद्वाजौ।
3. Thus $B_{2,3}$; A,R वादाय; $B_1$ पिप्पलमाय; Rudradatta on ĀpŚS III.1.10: तत्राग्रेण ध्रुवामिति भारद्वाजबोधायनौ। Mahādeva on SatS II.3 (p.306): भारद्वाजवचनात्तु व्रीहिप्रमाणं पिप्पलमात्रमित्यन्ये। Rudradatta on ĀpŚS III.1.2: तथा चाह भारद्वाजः प्राशित्रं पिप्पलमात्रमिति व्रीहिमात्रं स्यादिति।
4. Thus $B_{2,3}$; A,R व्यादिशेत; $B_1$ व्यादिशन्
5. $B_1$ मीधेऽग्ने; R °मीधेऽग्ने
6. $A_1$ °र्याधायाभि°; $B_1$ °र्यायाभिघार्य; $B_2$ °र्याधायाभि°; $B_3$ °र्याभिधायाभि°
7. $A_1$ °र्याधाया°; $B_2$ °स्तीर्याभिघा°; $B_3$ °स्तीर्याभिघा°
8. $A_{3-5}$ न ब्रह्मयजमानभागौ परिप्राश्य°
9. Thus $B_2$; $A, B_1$, R अन्वाहार्यं; $B_3$ °न्वाहार्यपचनं दक्षिणां

दधाति एषा तेऽग्ने समित् तया वर्धस्व चाप्यायस्व। वर्धतां च ते यज्ञपतिरा च प्यायतां[1] स्वाहा इति ॥ ६ ॥ अस्पर्यैरिध्मसंनहनैराग्नीध्रः परिधीँश्चाग्निं च सकृत्सकृत्[2] संमार्ष्टि। तूष्णीं परिधीन् ॥ ७ ॥ अग्ने वाजजिद् वाजं[3] त्वा ससृवाँसं वाजं जिगिवाँसं वाजिनं वाजजितं वाजजित्यायै संमार्ज्म्यग्निमन्नादमन्नाद्याय इत्यग्निँ संमार्ष्टि ॥ ८ ॥ अथैतानि संमार्जनान्यद्भिः सँस्पृश्याहवनीये प्रहरति यो भूतानामधिपती रुद्रस्तन्तिचरो वृषा। पशूनस्माकं मा हिँसीरेतदस्तु हुतं तव स्वाहा इति ॥ ९ ॥ उत्कर उदस्यतीत्येकेषाम् ॥ १० ॥ ॥४॥

जुहूपभृतावादायौपभृतं जुह्वां समानीयात्याक्रम्याश्राव्याह देवान् यज इति ॥ १ ॥ वषट्कृते जुहोति ॥ २ ॥ आश्राव्याश्राव्य यज यज इत्येवोत्तराभ्यां संप्रेष्यति ॥ ३ ॥ अग्रेणाघारसंभेदं प्रतीचोऽनूयाजान् यजति ॥ ४ ॥ प्राञ्चमुत्तम-मनुसँस्थापयति ॥ ५ ॥ उत्तमेनेतरावनुसंभिनत्ति ॥ ६ ॥ प्रत्याक्रम्यायतने स्रुचौ सादयित्वा वाजवतीभ्यां व्यूहति ॥ ७ ॥ वाजस्य मा प्रसवेन इति दक्षिणेनोत्तानेन सप्रस्तरां जुहूमुद्गृह्णाति। अथा सपत्नाँ इन्द्रो मे निग्राभेणाधराँ अकः इति सव्येन नीचोपभृतं नियच्छति ॥ ८ ॥ उद्ग्राभं च इति जुहूमुद्गृह्णाति। निग्राभं च इत्युपभृतं नियच्छति ॥ ९ ॥ ब्रह्म देवा अवीवृधन् इति प्राचीं जुहूं प्रोहति ॥ १० ॥ अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यताम् इति प्रतीचीमुपभृतं बहिर्वेदि निरस्यति ॥ ११ ॥ अद्भिरभ्युक्ष्योपभृतमभ्युदाहृत्य जुह्वा सँस्रावेण परिधीननक्ति। वसुभ्यस्त्वा इति मध्यमं रुद्रेभ्यस्त्वा इति दक्षिणम् आदित्येभ्यस्त्वा इत्युत्तरम् ॥ १२ ॥ न प्रस्तरे जुहूँ सादयति ॥ १३ ॥ विधृतीभ्यां प्रस्तरँ समुल्लिप्य[4] बर्हिषि विधृती अपिसृज्य स्रुक्षु प्रस्तरमनक्ति। अक्तँ रिहाणाः इति जुह्वामग्रं वियन्तु वयः इत्युपभृति मध्यं[5] प्रजां योनिं मा निर्मृक्षम्[6] इति ध्रुवायां मूलम् ॥ १४ ॥ एवमेव द्वितीयमनक्ति। एवं तृतीयम् ॥ १५ ॥ आयुषे त्वा इत्यक्तस्य तृणमपयम्य[7] जुह्वां प्रस्तरं प्रतिष्ठा-प्याश्राव्यासीनः संप्रेष्यति इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि इति ॥ १६ ॥ अनूच्यमाने सूक्तवाके ॥ १७ ॥ ॥५॥

---

1. $B_1$ प्यायतां च; $B_2$ प्यायतां वर्धिषीमहि च वयमा च प्यासिषीमहि
2. $A_{2-5}$ सकृत्
3. Vāñcheśvara (20b) on SatS has cited verbatim this sūtra partially.
4. $B_3$ समुल्लुप्य
5. $B_2$ मध्यमं
6. $B_2$ निर्मृक्षयोमाप्यायन्तामोषधय
7. Thus $A_1$,$B_{2,3}$; $A_{2-5}$,$B_1$,R °यत्य

सह शाखया प्रस्तरमुपरीव प्राञ्चमाहवनीये प्रहरति रोहितेन त्वाग्निर्देवतां
गमयत्विति इत्येतैर्मन्त्रैः । मरुतां पृषतय स्थ दिवं गच्छ ततो नो वृष्टिमेरय इति च ॥ १ ॥
न प्रतिशृणाति नात्यग्रं प्रहरेत् ॥ २ ॥ न पुरस्तात् प्रत्यस्येत् ॥ ३ ॥ जिह्ममिव
हस्तं कृत्वा[1] न्यञ्चमन्ततो नियच्छति ॥ ४ ॥ यत्राभिजानाति आशास्तेऽयं यजमानोऽसौ
इति तत् प्रस्तरमपिसृज्याह अग्नीद् गमय इति ॥ ५ ॥ त्रिरञ्जलिनाग्नीध्रः प्रस्तर-
मूर्ध्वमुद्यौति ॥ ६ ॥ न विष्वञ्चं वियुयात्[2] ॥ ७ ॥ ततोऽध्वर्युमाह अनुप्रहर संवदस्व
इति ॥ ८ ॥ पुरस्तादपाचं तृणमध्वर्युरनुप्रहरति स्वगा तनुभ्यः इति ॥ ९ ॥ एतदेतत्
इति त्रिरङ्गुल्यान्यवदिशति ॥ १० ॥ अहीनः प्राणः इति प्राणायतनानि संमृशति
॥ ११ ॥ आयुष्पा अग्नेऽस्यायुर्मे पाहि इति मुखं विमृष्टे ॥ १२ ॥ ध्रुवासि इतीमामभि-
मृश्य अगानग्नीत् इति[3] । अगन् इत्याग्नीध्रः । श्रावय इत्यध्वर्युः । श्रौषट् इत्याग्नीध्रः
॥ १३ ॥ मध्यमं परिधिमन्वारभ्य संप्रेष्यति स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः
शंयोर्ब्रूहि इति ॥ १४ ॥ अनूच्यमाने शंयुवाके परिधीन् प्रहरति यं परिधिं पर्यधत्थाः
इति मध्यमं यज्ञस्य पाथ उप समितम् इतीतरौ ॥ १५ ॥ अथाश्वमुत्तरार्ध्यमङ्गारमु-
पोहति ॥ १६ ॥ जुह्वामुपभृतो स्रुवमवधाय संस्रावेण परिधीनभिजुहोति संस्रावभागा
स्थेषा बृहन्तः इति ॥ १७ ॥ अत्रर्त्विजो हविःशेषान् भक्षयन्ति ॥ १८ ॥ ॥६॥

सस्रुवे जुहूपभृतावध्वर्युरादत्ते वेदं होता स्वयं चाज्यस्थालीमुदकमण्डलुं
चाग्नीध्रः ॥ १ ॥ पत्नीः संयाजयिष्यन्तः प्रत्यञ्चः प्रतिपरियन्ति ॥ २ ॥ दक्षिणेन
गार्हपत्यमध्वर्युः प्रतिपद्यत उत्तरेणेतरौ ॥ ३ ॥ कस्तम्भ्यां स्रुचौ सादयति अग्नेर्वाम-
पन्नगृहस्य सदसि सादयामि इति ॥ ४ ॥ धुरोः[4] प्रोहति धुरि धुर्यौ पातम् इति ॥ ५ ॥
यदि पात्र्यां निर्वपेत् स्फ्ये विमुञ्चेत् ॥ ६ ॥ अपरेण गार्हपत्यमूर्ध्वज्ञव आसीना
ध्यानेनोपांशु वा पत्नीः संयाजयन्ति ॥ ७ ॥ वेदमुपभृतं कृत्वा सोमायानुब्रूहि इति
संप्रेष्यति ॥ ८ ॥ यथागृहीतमाज्यं गृहीत्वाश्राव्याह सोमं यज इति ॥ ९ ॥ वषट्कृते
दक्षिणार्धे जुहोति ॥ १० ॥ यथागृहीतेनैव पत्नीः संयाजयन्ति ॥ ११ ॥ त्वष्ट्रेऽनुब्रूहि
इति संप्रेष्यति ॥ १२ ॥ आश्राव्याह त्वष्टारं यज इति ॥ १३ ॥ वषट्कृत उत्तरार्धे
जुहोति ॥ १४ ॥ उत्तरतः सोमं यजति दक्षिणतस्त्वष्टारमित्येकेषाम् ॥ १५ ॥
अत्र राकां पुत्रकामो यजेत सिनीवालीं पशुकामः कुहूं पुष्टिकामः ॥ १६ ॥ राकया

1. Rudradatta on ĀpŚS III.6.9: यथा जिह्ममिव हस्तं [illegible] [illegible]-
भारद्वाजो ।
2. B$_{1,2}$ विवृयात्
3. B इत्याह
4. B$_{1}$ धुरो, B$_{2}$ धुर

अनुब्रूहि इति संप्रेष्यति ॥ १७ ॥ आश्राव्याह राकां यज इति ॥ १८ ॥ वषट्कृते जुहोति ॥ १९ ॥ सिनीवाल्या अनुब्रूहि इति संप्रेष्यति ॥ २० ॥ आश्राव्याह सिनीवालीं यज इति ॥ २१ ॥ वषट्कृते जुहोति ॥ २२ ॥ ॥७॥

कुह्वा अनुब्रूहि इति संप्रेष्यति ॥ १ ॥ आश्राव्याह कुहूं यज इति ॥ २ ॥ वषट्कृते जुहोति ॥ ३ ॥ परिश्रिते देवानां पत्नीर्यजति । अपरिश्रिते वा ॥ ४ ॥ देवानां पत्नीभ्योऽनुब्रूहि इति संप्रेष्यति ॥ ५ ॥ आश्राव्याह देवानां पत्नीर्यज इति ॥ ६ ॥ वषट्कृते जुहोति ॥ ७ ॥ अग्नये गृहपतयेऽनुब्रूहि इति संप्रेष्यति ॥ ८ ॥ आश्राव्याह अग्निं गृहपतिं यज इति ॥ ९ ॥ वषट्कृते जुहोति ॥ १० ॥ पत्नीमन्वारम्भयित्वा स्रुवेण गार्हपत्ये जुहोति सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य युक्तौ धुर्यावभूताम् । संजानानौ विजहतामरातीर्दिवि ज्योतिरजरमारभेताम् स्वाहा इति ॥ ११ ॥ स्रुवेण होतुरङ्गुलिपर्वणी[1] अनक्ति ॥ १२ ॥ अपरमङ्क्त्वा[2] पूर्वमनक्ति ॥ १३ ॥ चतुर आज्यबिन्दून् होत्र इडामादधाति[3] पडग्रीधे ॥ १४ ॥ उपहूयमानामिडामन्वारभेते अध्वर्युः पत्नी च ॥ १५ ॥ उपहूतामिडां प्राश्नाति होता । प्राश्नात्याग्नीध्रः उपहूता पृथिवी मातोप मां माता पृथिवी ह्वयताम् । अग्निराग्नीध्रादायुषे वर्चसे जीवात्वै पुण्याय इति ॥ १६ ॥ प्राश्य मार्जयेते ॥ १७ ॥ इडान्तं भवति ॥ १८ ॥ ॥८॥

शंयुवन्तं वा ॥ १ ॥ यदि शंयुवन्तं कुर्याद् वेदात् तृणमपादाय जुह्वा-मग्रमङ्क्यात् ध्रुवे मध्यमाज्यस्थाल्यां मूलम् ॥ २ ॥ तस्य स एव कल्पो यः प्रस्तरस्य ॥ ३ ॥ इध्मप्रव्रश्चनान्यन्वाहार्यपचनेऽभ्याधाय पिष्टलेपफलीकरणहोमौ जुहोति ॥ ४ ॥ चतुर्गृहीत आज्ये फलीकरणानोप्य जुहोति अग्नेऽदब्धायोऽशीततनो इति प्रतिपद्य स्वाहाकारान्तेन ॥ ५ ॥ आज्येनैव पिष्टलेपं जुहोति[4] उलूखले मुसले यच्च शूर्पे आशिश्लेष दृषदि यत् कपाले । अवप्रुषो विप्रुषः संयजामि विश्वे देवा हविरिदं जुषन्ताम् । यज्ञे या विप्रुषः सन्ति बहीरग्नौ ताः सर्वाः स्विष्टाः सुहुता जुहोमि स्वाहा इति ॥ ६ ॥ वेदं होता पत्न्या उपस्थे त्रिरस्यति वेदोऽसि ॥ वित्तिरसि ॥ विदेय इत्येतैर्मन्त्रैः ॥ ७ ॥ अस्तमस्तं पत्नी प्रतिनिरस्यति[5] निर्दिपन्तं निरराति नुद इति

1. $B_{1,2}$ °ङ्गुली°
2. $B_2$ °मङ्क्त्वा
3. Thus $A_1$,$B_{2,3}$; $A_{2-5}$,R इडामवद्यति; $B_1$ इडामादायाति. cf. III.1.6.
4. Rudradatta on ĀpSS III.9.3: भारद्वाजस्त्वाह आज्येनैव पिष्टलेपं जुहोतीति। Similarly Mahādeva on SatS II.2.5 (p. 227): भरद्वाजोऽपि आज्येनैव पिष्टलेपं जुहोतीति।
5. Vāñcheśvara on SatS (28a): अस्तमस्तं प्रतिनिरस्यतीति भारद्वाजः।

॥ ८ ॥ स्वयं वा पत्न्यस्यते[1] ॥ ९ ॥ पुमाँसँ ह जानुका भवतीति विज्ञायते ॥ १० ॥ अत्रैके पत्न्या विमोचनँ समामनन्ति ॥ ११ ॥ वेदँ होताहवनीयात् स्तृणन्नेति घृतवन्तं कुलायिनम् इत्यनुवाकशेषेण ॥ १२ ॥ अत्रैके पार्वणौ होमौ समामनन्ति ॥ १३ ॥ स्रुवेण सर्वप्रायश्चित्तानि जुहोतीति विज्ञायते ॥ १४ ॥ ॥९॥

प्रत्याहुतिं[2] गृहीत्वा[2] वा ॥ १ ॥ ब्रह्म प्रतिष्ठा मनसो ब्रह्म वाचो ब्रह्म यज्ञानाँ हविषामाज्यस्य । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहाकृताहुतिरेतु देवान् स्वाहा ॥ आश्रावितमत्याश्रावितं वषट्कृतमत्यनूक्तं च यज्ञे । अतिरिक्तं कर्मणो यच्च हीनं यज्ञः पर्वाणि प्रतिरन्नेति कल्पयन् । स्वाहाकृताहुतिरेतु देवान् स्वाहा ॥

यद् वो देवा अतिपादयानि वाचाचित् प्रयतं देवहेडनम् ।
अरायो अस्माँ अभिदुच्छुनायतेऽन्यत्रास्मन्मरुतस्तन्निधेनन स्वाहा ॥
ततं म आपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते ।
अयँ समुद्र उत विश्वभेषजः स्वाहाकृतस्य समु तृप्णुतर्भुवः स्वाहा ॥

उद् वयं तमसस्परि ॥ उदु त्यम् ॥ चित्रम् ॥ इमं मे वरुण ॥ तत् त्वा यामि ॥ त्वं नो अग्ने ॥ स त्वं नो अग्ने ॥ त्वमग्ने अयासि ॥ प्रजापते ॥

इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम् ।
शतं जीवन्तु शरदः पुरूचीस्तिरो मृत्युं दधतां पर्वतेन स्वाहा ॥

इष्टेभ्यः[3] स्वाहा ॥ वषडनिष्टेभ्यः स्वाहा ॥ भेषजं दुरिष्ट्यै स्वाहा ॥ निष्कृत्यै स्वाहा ॥ दौराध्यै स्वाहा ॥ दैवीभ्यस्तनूभ्यः स्वाहा ॥ ऋद्ध्यै स्वाहा ॥ समृद्ध्यै स्वाहा[3] ॥ २ ॥ ॥१०॥

या सरस्वती विशोभगीना तस्यै ते[4] स्वाहा ॥ या सरस्वती वेशभगीना तस्यै ते स्वाहा ॥ इन्द्रोपानस्य वेशान् सुमनसः सजातान्[5] कुरु स्वाहा ॥ यद्कर्म यन्नाकर्म यदत्यगाम यदत्यरीरिचाम यन्नात्यरीरिचाम[6] तत् त्वं विष्णो यज्ञे[7] यज्ञं प्रतिष्ठापय स्वाहा ॥ यत इन्द्र भयामहे ततो नो अभयं कृधि । मघवञ्छग्धि तव तन्न ऊतये । विद्विषो विमृधो जहि स्वाहा ॥

---

1. $A_1$ पत्न्या स्वस्यते; $A_{2-5}$,$B_1$ पत्न्यास्यते; $B_2$ पत्यस्यते; $B_3$ पत्न्यस्यत
2. Thus $B_1$; $A_1$ प्रत्याहुतिंगृहीत्वा; $A_2$ प्रत्याहुति गृहीत्वा; $B_2$ प्रत्याहुतीगृहीत्वा; $B_3$,R प्रत्याहुती गृहीत्वा
3. $B_3$ इष्टेभ्यः स्वाहेत्यष्टौ
4. $B_3$ omitted
5. Thus all MSS; R सुजातान्
6. A,$B_1$ omitted
7. $A_{2-5}$,$B_{1,3}$ यज्ञो

स्वस्तिदा विशस्पतिर्वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः स्वाहा ॥
आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः ।
यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो[1] अध[1] ते स्याम स्वाहा ॥
अनाज्ञातं यदाज्ञातं यज्ञस्य क्रियते मिथु ।
अग्ने तदस्य कल्पय त्वँ हि वेत्थ यथातथꣳ स्वाहा ॥
पुरुषसंमितो यज्ञो यज्ञः पुरुषसंमितः ।
अग्ने तदस्य कल्पय त्वँ हि वेत्थ यथातथꣳ स्वाहा ॥
यत् पाकत्रा मनसा दीनदक्षा न यज्ञस्य मन्वते मर्तासः ।
अग्निष्टद्धोता क्रतुविद् विजानन् यजिष्ठो देवाँ ऋतुशो यजाति स्वाहा ॥
यदस्य कर्मणोऽत्यरीरिचं यद् वा न्यूनमिहाकरम् ।
अग्निष्टत् स्विष्टकृद् विद्वान् सर्वँ स्विष्टँ सुहुतं करोतु मे ॥

अग्नये स्विष्टकृते सुहुतहुत आहुतीनां कामानाँ समर्धयित्रे स्वाहा इति ॥ १ ॥ प्राजापत्यामित्युत्तमाँ[2] हुत्वा ॥ २ ॥ ॥११॥

अन्तर्वेद्यूर्ध्वस्तिष्ठन् ध्रुवया समिष्टयजुर्जुहोति[3] ॥ १ ॥ देवा गातुविदः इति प्रथमामाहुतिँ हुत्वा बर्हिरनुप्रहरति[4] ॥ २ ॥ वाचि स्वाहा इति द्वितीयाम् ॥ ३ ॥ वाते धाः स्वाहा इति तृतीयाम्[5] ॥ ४ ॥ होतृषदनाद् वेदिमभिस्तृणाति अभिस्तृणीहि परिधेहि वेदिं जामिं मा हिँसीरमुया शयाना । होतृषदना हरिताः सुवर्णा निष्का इमे यजमानस्य ब्रध्ने इति ॥ ५ ॥ अन्तर्वेदि प्रणीता आसादयति को वोऽयोक्षीत् स वो विमुञ्चतु इति ॥ ६ ॥ ततः पत्नीं विमुञ्चति इमं वि ष्यामि वरुणस्य पाशम् इति ॥ ७ ॥ आदाय योक्त्रं पत्नी सहाप उपगृह्णीते ॥ ८ ॥ अञ्जलावस्यै पूर्णपात्रमानयति ॥ ९ ॥ आनीयमाने जपति समायुषा सं प्रजया इत्येताम् ॥ १० ॥ मुखं विमृज्योत्तिष्ठति पुष्टिमती पशुमती प्रजावती गृहमेधिनी भूयासम् इति ॥ ११ ॥

1. $A_1, B_3$ °भाजो अध; $B_2$ °भाजो ध
2. $B_1$ प्राजापत्य हुत्वा°; $B_2$ प्रजापत्य हुत्वा°; $B_3$ omits प्राजापत्यामिति.
3. Rāmāgnicit on ĀpŚS III.12.1 : आज्यस्थाल्याः सर्वमाज्यं धित्वाभि । ध्रौवादकस्थ्येत्यास्थिति भरद्वाजमतिः ।
4. Rudradatta on ĀpŚS III.13.3 : बर्हिर्मुष्टि वेति तु भरद्वाजाद्याचार्याः । Vāñcheśvara on SatS (31a) has cited this sūtra verbatim beginning with प्रथमाम्.
5. Mahādeva on SatS II. 6 (p. 235) : मन्त्रत्रयेणाहुतित्रयं प्राप्तं तथैव मन्त्रविभागेन भरद्वाजेनापि दर्शितम् ।

तत उपवेषमुत्करे पुरस्तात्प्रत्यञ्चँ स्थविमत उपगूहति यं देवा मनुष्येषूपवेषमधारयन्। ये अस्मदपचेतसस्तानस्मभ्यमिहा कुरु ॥ उपवेषोपविद्धि नः प्रजां पुष्टिमथो धनम्। द्विपदो नश्चतुष्पदो ध्रुवाननपगान् कुरु इति ॥ १२ ॥ योपवेषे शुक् सामुमृच्छतु यं द्विष्मः इति यं द्वेष्टि तस्य नाम गृह्णाति ॥ १३ ॥ ॥१२॥

अथास्मै नामगृह्य प्रहरति निरमुं नुद ओकसः सपत्नो यः पृतन्यति। निर्बाध्येन हविषेन्द्र एणं पराशरीत् ॥ इहि तिस्रः परावत इहि पञ्च जनाँ अति। इहि तिस्रोऽति रोचना यावत् सूर्यो असद् दिवि ॥ परमां त्वा परावतमिन्द्रो नयतु वृत्रहा। यतो न पुनरायसि शश्वतीभ्यः समाभ्यः इति ॥ १ ॥ हतोऽसाववधिष्मामुम् इति ब्रूयाद् यं द्विष्यात् ॥ २ ॥ सँस्थिते कपालानि विमुञ्चति यानि घर्मे कपालानि इति ॥ ३ ॥ एतयैव यजमानोऽभिमन्त्रयेत[1] ॥ ४ ॥ सँस्थाप्य पौर्णमासीमिन्द्राय वैमृधाय पुरोडाशमेकादशकपालमनुनिर्वपति[2] ॥ ५ ॥ तत्र याथाकामी[3] प्रक्रमे। प्रक्रमात् तु नियम्यते ॥ ६ ॥ सप्तदशसामिधेनीको यथाश्रद्धदक्षिणः ॥ ७ ॥ शर्धवत्यौ संयाज्ये ॥ ८ ॥ अपि वैनँ समानतन्त्रं पौर्णमास्यां निर्वपेत्[4] ॥ ९ ॥ तमेतं नित्यवदेके समामनन्ति काम्यवदेके[5] ॥ १० ॥ तं यदा निर्वपेन्न तत ऊर्ध्वं विरमेत् ॥ ११ ॥ एवंविहिताभ्यां दर्शपूर्णमासाभ्यां यावज्जीवं यजते। त्रिँशतं वा वर्षाणि त्रिँशतं वा वर्षाणि ॥ १२ ॥ ॥ १३[6] ॥

श्वो भूते यजमानो ब्रह्माणं वृणीते भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे इति ॥ १ ॥ वृतो जपति अहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्देवेन सवित्रा प्रसूत आर्त्विज्यं करिष्यामि ॥ देव सवितरेतं त्वा वृणते बृहस्पतिं दैव्यं ब्रह्माणम् ॥ तदहं मनसे प्रब्रवीमि मनो गायत्रियै गायत्री त्रिष्टुभे त्रिष्टुब् जगत्यै जगत्यनुष्टुभेऽनुष्टुप् पङ्क्त्यै पङ्क्तिः प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो विश्वे देवा बृहस्पतये बृहस्पतिर्ब्रह्मणे ॥ ब्रह्म भूर्भुवः सुवः ॥ बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणां बृहस्पते यज्ञं गोपाय इत्युक्त्वापरेणाहवनीयमतिक्रम्य दक्षिणतो ब्रह्मसदनात्[7] तृणं निरस्यति निरस्तः

1. $A_{2-5}$ °नुमन्त्र°; $B_3$ °मन्त्रयते
2. Vāñcheśvara (33b) on SatS : अत एव भारद्वाजेन ब्राह्मणानुसारेण वैमृधो नित्यवत् सूत्रितः।
3. $B_{1,2}$ यथा°
4. Cited verbatim by Vāñcheśvara (33a) on SatS.
5. Rudradatta on ĀpSS III.15.3 : भारद्वाजस्त्वाह नित्यवदेके समामनन्ति काम्यवदेक इति। The portion काम्यवदेके cited by Vāñcheśvara (33a) on SatS,
6. $A_{2-5}$ add तृतीयः ॥ प्रथमः प्रश्नः समाप्तः ॥
7. $B_3$ ब्रह्मायतनात्

परावसुः[1] इति ॥ २ ॥ अथ उपस्पृश्य ब्रह्मसदन आहवनीयमभिमुख उपविशति इदमहमर्वाग्वसोः[2] सदने सीदामि ॥ प्रसूतो देवेन सवित्रा बृहस्पतेः सदने सीदामि ॥ तदग्नये प्रब्रवीमि तद् वायवे तत् सूर्याय तत् पृथिव्यै इति ॥ ३ ॥ ॥१४[3] ॥

तत्रैषोऽत्यन्तप्रदेशो वाग्यत एव मन्त्रवत्सु कर्मसु भवति यथाकामी[4] तूष्णींकेषु ॥ १ ॥ प्रणीतासु प्रणीयमानासु वाचं यच्छत्या[5] हविष्कृतः ॥ २ ॥ पशुपिपशुपि वाचं यच्छतीति विज्ञायते ॥ ३ ॥ अथैकेषां प्रातरनुवाक उपाकृते सामिधेनीषु प्रयाजानूयाजेषु स्तुतशस्त्रेष्विति वाचमेव यच्छेदिति ॥ ४ ॥ अथैकेषां यदृचा यदि यजुषा यदि साम्ना क्रियते वाचमेव यच्छेदिति ॥ ५ ॥ अथैकेषामन्योन्यस्मै वा ऋत्विजो यज्ञसंप्रदायं चरन्ति । यावद् वा ऋचार्त्विज्यं क्रियते होतृष्वेव तावद्यज्ञो भवति । यावद्यजुषाध्वर्युष्वेव तावत् । यावत् साम्नोद्गातृष्वेव तावत् । अथ यत्र क्व च यज्ञस्य विहितं ब्रह्मण्येव तावद्यज्ञो भवति । तस्मादेतस्मिन्नन्तर्धौ ब्रह्मा वाचंयमः स्यात् ॥ ६ ॥ स यदि प्रमत्तो व्याहरेदेता एव व्याहृतीरभिव्याहरेत् भूर्भुवः सुवः इति वैष्णवीं वार्चम् ॥ ७ ॥ यज्ञो वै विष्णुर्यज्ञेनैव यज्ञं संतनोतीति विज्ञायते ॥ ८ ॥ ॥१५[6]॥

यत्रैनमामन्त्रयते ब्रह्मन्नपः प्रणेष्यामि इति तत् प्रसौति
हिं प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु ।
सप्तर्षीणाँ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि ॥

ओं प्रणय इति ॥ १ ॥ यत्रैनमामन्त्रयते ब्रह्मन् प्रोक्षिष्यामि इति तत् प्रसौति
हिं प्रोक्ष यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु ।
सप्तर्षीणाँ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि ॥

ओं प्रोक्ष इति ॥ २ ॥ यत्रैनमामन्त्रयते ब्रह्मनुत्तरं परिग्राहं परिग्रहीष्यामि इति तत् प्रसौति
हिं बृहस्पते परिगृहाण वेदिँ स्वगा वो देवाः सदनानि सन्तु ।
तस्यां बर्हिः प्रथतां साध्वन्तरहिँसा णः[7] पृथिवी देव्यस्तु ॥

1. $B_2$ परावसुः
2. $B_2$ °र्वावसोः
3. $A_{2-5}$ ॥ १ ॥
4. $B_{1,2}$ यथा°
5. In R sūtra 2 ends with वाचं यच्छति.
6. $A_{2-5}$ ॥ २ ॥
7. R नः

देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु ।
सप्तर्षीणाँ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि ॥

ओं परिगृहाण इति ॥ ३ ॥ यत्रैनमामन्त्रयते ब्रह्मन् प्रोक्षिष्यामि[1] इति तत् प्रसौति हिं प्रोक्ष यज्ञम् इत्येतया ॥ ४ ॥ ॥१६[2]॥

यत्रैनमामन्त्रयते ब्रह्मन् सामिधेनीरनुवक्ष्यामि इति तत् प्रसौति
हिं प्रजापतेऽनुब्रूहि यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु ।
सप्तर्षीणाँ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि ॥

ओमनुब्रूहि इति ॥ १ ॥ यत्रैनमामन्त्रयते ब्रह्मन् प्रवरायाश्रावयिष्यामि इति तत् प्रसौति
हिं वाचस्पते वाचमाश्रावयैतामाश्रावय यज्ञं देवेषु[3] मां मनुष्येषु ॥
देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु ।
सप्तर्षीणाँ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि ॥

ओमाश्रावय इति ॥ २ ॥ यत्रास्मै प्राशित्रं परिहरति तत् प्रतीक्षते सूर्यस्य त्वा चक्षुषा प्रतिपश्यामि इति ॥ ३ ॥ ऋतस्य पथा पर्येहि इत्याह्रियमाणमभिमन्त्रयते ॥ ४ ॥ अप उपस्पृश्य प्रतिगृह्णाति देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि इति ॥ ५ ॥ व्यूह्य तृणानि पुरस्ताद्दण्डं भूमौ प्रतिष्ठापयति पृथिव्यास्त्वा नाभौ सादयामि इति ॥ ६ ॥ अवेक्षते सुपर्णस्य त्वा गरुत्मतश्चक्षुषावपश्यामि इति ॥ ७ ॥ अथैनदङ्गुष्ठेनोपमध्यमया चाङ्गुल्यादायासंस्लेत्यावगिरति अग्नेस्त्वास्येन प्राश्नामि ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणा ॥ इन्द्रस्य त्वा जठरे सादयामि इति ॥ ८ ॥ अप आचम्य पुनरेवाप आचामति या अप्स्वन्तर्देवतास्ता इदं शमयन्तु ॥ स्वाहाकृतं जठरमिन्द्रस्य गच्छ स्वाहा इति ॥ ९ ॥ ॥१७[4]॥

नाभिदेशमभिमृशति घसीना मे मा संपृक्थाः ॥ ऊर्ध्वं मे नाभेः सीद ॥ इन्द्रस्य त्वा जठरे सादयामि इति ॥ १ ॥ प्राणायतनानि संमृशति वाङ्म आसन् नसोः प्राणः इत्येतैर्मन्त्रैर्यथारूपम् ॥ २ ॥ अद्भिः पात्रं प्रक्षाल्य पूरयित्वा प्राङ् निनयति[5] दिशो जिन्व इति ॥ ३ ॥ अपरं पूरयित्वाभ्यात्मं निनयति मां जिन्व इति ॥ ४ ॥

---

1. $A_{2-3}$ प्रोक्ष्यामि
2. $A_{2-3}$ ॥ ३ ॥
3. $A_1$,$B_1$ देवेष्वाश्रावय
4. $A_{2-3}$ ॥ ४ ॥
5. In R sūtra 3 ends with निनयति.

यत्रास्मै ब्रह्मभागं परिहरति तत्र पुरा सँस्थायाः प्राश्नीयात् ॥ ५ ॥ यत् किंच यज्ञे मृन्मयं[1] भिद्येत तदभिमृशेत्

भूमिर्भूमिमगान्माता मातरमप्यगात् ।
भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम् ॥

इति ॥ ६ ॥ अन्तर्वेद्यन्वाहार्यमासन्नमभिमृशति ब्रह्मन् ब्रह्मासि ब्रह्मणे त्वाहुताद्य मा मा हिँसीरहुतो मह्यँ शिवो भव इति ॥ ७ ॥ यत्रैनमामन्त्रयते ब्रह्मन् प्रस्थास्यामः इति तत् प्रसौति हिं देव सवितरेतत्ते प्राह तत् [illegible] च सुव प्र च यज बृहस्पतिर्ब्रह्मा स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहि ॥ ओं प्रतिष्ठ इति ॥ ८ ॥ सोऽत्रैवास्त आ यज्ञस्य सँस्थानात् ॥ ९ ॥ सँस्थिते यज्ञे यथान्वेतमुपनिष्क्रम्याहवनीये समिधमादधाति नमः कृताय कर्मणेऽकृतस्य कर्मणे नमः स्वाहा इति ॥ १० ॥ आधायोपतिष्ठते

अपाड्[2] यज्ञं[2] जातवेदा अदब्धो अन्तरः पूर्वो अस्मिन् निषद्य ।
सन्वन् सनिँ सुविमुचा विमुञ्च धेह्यस्मासु द्रविणं जातवेदो यच्च भद्रम् ॥
प्र णो यच्छभिवस्यो[3] अस्मान् सं नः सृज सुमत्या वाजवत्या ॥

इति ॥ ११ ॥ एवंविहितमेवास्येष्टिपशुबन्धेषु ब्रह्मत्वं भवति ब्रह्मत्वं भवति ॥ १२ ॥ ॥१८[4]॥

॥ इति[5] तृतीयः प्रश्नः[5] ॥

---

1. Thus $A_1$
2. $A_1$,$B_1$ अपास्यज्ञं; $A_{2-5}$ अपास्य यज्ञं; $B_2$ अपास्त्वं जुं
3. Emended following ApSS III.20.10; $A_1$ यथास्येभिवस्या; $A_{2,3}$ यथांस्य-भिवस्यो; $A_{4,5}$ यथांस्यभिवस्यो; $B_1$ प्रणो यथास्यभिवस्यो; $B_2$ यस्मस्य हि वस्यो; $B_3$ प्रणो अच्छाभिस्यो
4. $A_{2-5}$ ॥५॥
5. $A_{2-5}$ द्वितीयः प्रश्नः ॥ $B_{1,3}$ हरिः ओम्

## अथ चतुर्थः प्रश्नः

याजमानं[1] व्याख्यास्यामः ॥ १ ॥ पर्वणि यजमानः केशश्मश्रु[2] वापयते ॥ २ ॥ अग्निहोत्रं हुत्वा

देवा गातुविदो गातुं यज्ञाय विन्दत ।
मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यताम् ॥

इत्यध्वर्युर्जपित्वा प्रातरग्नीनन्वादधाति ॥ ३ ॥ ममाग्ने वर्चो विहवेष्वस्तु इति पूर्वमग्निं गृह्णाति[3] ॥ ४ ॥ तूष्णीमपरौ[4] ॥ ५ ॥ द्वितीयया गार्हपत्यं तृतीययान्वाहार्यपचनम् ॥ ६ ॥ तिसृभिस्तिसृभिर्वैकैकम्[5] ॥ ७ ॥ उत्तमां तु जपेदाहवनीये वादध्यात् ॥ ८ ॥ व्याहृतीभिरग्न्यन्वाधानमेके समामनन्ति ॥ ९ ॥ याजमानमेके ॥ १० ॥ अग्नीनन्वाधीयमानान्[6] यजमान उपतिष्ठते

अग्निं गृह्णामि सुरथं यो मयोभूर्य उद्यन्तमारोहति सूर्यमह्ने ।
आदित्यं ज्योतिषां ज्योतिरुत्तमँ श्वो यज्ञाय रमतां देवताभ्यः ॥
वसून् रुद्रानादित्यानिन्द्रेण सह देवताः ।
ताः पूर्वः परिगृह्णामि स्व आयतने मनीषया ॥
इमामूर्जं पञ्चदशीं ये प्रविष्टास्तान् देवान् परिगृह्णामि पूर्वः ।
अग्निर्हव्यवाडिह तानावहतु पौर्णमासँ हविरिदमेषां मयि ॥
आमावास्यँ हविरिदमेषां मयि ॥

इति यथालिङ्गमाहवनीयम् ॥ ११ ॥ ॥१॥

अन्तराग्नी पशवो देवसँसदमागमन् ।
तान् पूर्वः परिगृह्णामि स्व आयतने मनीषया ॥

इत्यन्तराग्नी तिष्ठन् जपति ॥ १ ॥

इह प्रजा विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः ।

---

1. $A_{2-3}$ ॐ याज°; $A_1$,$B_1$ ओम् यज°
2. $B_{2,3}$ °श्मश्रू
3. Rudradatta on ĀpŚS I.1.2 quotes sūtras 4 and 5 verbatim. Mahādeva on SatS I.2 (p. 69): अन्वादधातीत्यस्य स्थाने गृह्णातिप्रयोगो भरद्वाजादिसूत्रेषु दृश्यते। A little later (p.70) he says अत एव भरद्वाजः ममाग्न इति पूर्वमग्निं गृह्णीयात्तूष्णीमितराविति ह्याह।
4. Thus $B_{2,3}$; $A$,$B_1$,R °मितरौ. cf. VI.14.7.
5. $A_{2-5}$ °भिरेके°
6. Emended. $A_1$ अग्न्यन्वधीयमाना; $A_{2-5}$,R अग्न्यन्वाधीयमानानि; $B_1$ अग्न्यन्वाधीयमानान्; $B_2$ अनान्वाधीयमानान्; $B_3$ अन्वाधीयमानात्

तां पूर्वः परिगृह्णामि स्व आयतने मनीषया ॥
इह पशवो विश्वरूपा रमन्तामग्निं गृहपतिमभिसंवसानाः ।
तान् पूर्वः परिगृह्णामि स्व आयतने मनीषया ॥

इति गार्हपत्यम् ॥ २ ॥

अयं पितृणामग्निरवाड्ढव्या[1] पितृभ्य आ ।
तं पूर्वः परिगृह्णाम्यविषं नः पितुं करत् ॥

इत्यन्वाहार्यपचनम् ॥ ३ ॥

अजस्रं त्वां सभापाला विजयमागँ समिन्धताम् ।
अग्ने दीदाय मे सभ्य विजित्यै शरदः शतम् ॥

इति सभ्यम् ॥ ४ ॥

अन्नमावसथीयमभिहराणि[2] शरदः शतम् ।
आवसथे श्रियं मन्त्रमहिर्बुध्नियो[3] नियच्छतु ॥

इत्यावसथीयम् ॥ ५ ॥

इदमहमग्निज्येष्ठेभ्यो वसुभ्यो यज्ञं प्रब्रवीमि ॥
इदमहमिन्द्रज्येष्ठेभ्यो रुद्रेभ्यो यज्ञं प्रब्रवीमि ॥
इदमहं वरुणज्येष्ठेभ्य आदित्येभ्यो यज्ञं प्रब्रवीमि ॥

इति[4] सर्वान् ॥ ६ ॥ ॥२॥

य एवैषोऽग्निहोत्राय[5] प्रणीतस्तं गृह्णीयादित्याश्मरथ्यः । अन्यं प्रणीयेत्यालेखनः ॥ १ ॥ अशनमग्न्यन्वाधानं[6] व्रतोपायनमित्येवमनुपूर्वाण्येके समामनन्ति । अग्न्यन्वाधानमशनं व्रतोपायनमित्येके । व्रतोपायनमशनमग्न्यन्वाधानमित्येके ॥ २ ॥ पुरा बर्हिष आहर्तोर्जायापती सर्पिर्मिश्रमश्नीयातां यदन्यन्माषेभ्यो मांसाच्च ॥ ३ ॥ पुरा वत्सानामपाकर्तोरित्यपरम् ॥ ४ ॥ ततो यजमानः केशश्मश्रु[7] वापयते ॥ ५ ॥

1. B₂ °ह्डव्यानि
2. B₁,₂ °हराणि
3. B₂ °भ्यो
4. Thus B₂,₃; A,B₁R इति च
5. Rudradatta on ĀpŚS I.1.2 almost exactly quotes this sūtra except that it adds अग्निः after एवैषः. Mahādeva on SatS I.2 (p. 68): भारद्वाजेनोच्यते ■ एषोऽग्निहोत्रार्थोऽग्निस्तं गृह्णीयात् इति। Vāñcheśvara on SatS (6b): य एवैषोऽग्निरग्निहोत्राय प्रणीतस्तं गृह्णीयादित्याश्मरथ्य इति भारद्वाजसूत्रमाश्मरथ्यमतनिरसनार्थम्।
6. B₂ °मग्न्या°
7. B₂,₃ °श्मश्रू

अपरेणाहवनीयमतिक्रम्य दक्षिणत उदगावृत्त उपविश्याप आचामति पयस्वतीरोषधयः इत्येतया ॥ ६ ॥ तत आदित्यमुपतिष्ठते सम्राडसि व्रतपा असि व्रतपतिरसि व्रतमारभे। तत्ते प्रब्रवीमि[1] तच्छकेयं तेन शकेयं तेन राध्यासम् इति ॥ ७ ॥ यदि निम्रुक्ते सूर्ये व्रतमुपेयादाहवनीयमेवैतेन मन्त्रेणोपतिष्ठते[2] ॥ ८ ॥ बर्हिषा पूर्णमासे व्रतमुपैति वत्सैरमावास्यायामिति विज्ञायते ॥ ९ ॥ ॥३॥

दक्षिणतस्तिष्ठन्नाहवनीयमभिमन्त्रयते अग्ने व्रतपते व्रतं चरिष्यामि इति। स एष[3] ब्राह्मणस्यैव स्यान्नेतरयोर्वर्णयोः ॥ १ ॥ वायो व्रतपते इति वायुमुपतिष्ठते। आदित्य व्रतपते इत्यादित्यम्। व्रतानां व्रतपते इत्याहवनीयम् ॥ २ ॥ अन्ततो[4] देवता उपतिष्ठते देवा देवेषु पराक्रमध्वं प्रथमा द्वितीयेषु द्वितीयास्तृतीयेषु। त्रिरेकादशा इह मावत। इदं शकेयं यदिदं करोमि। आत्मा करोत्वात्मने। इदं करिष्ये भेषजमिदं मे विश्वभेषजा। अश्विना प्रावतं युवम् इति ॥ ३ ॥ व्रतमुपयन्[5] समुद्रं मनसा ध्यायति ॥ ४ ॥ स एतद् व्रतं चरति—न मांसमश्नाति न स्त्रियमुपैति नोपर्यास्ते [6]जुगुप्सतेऽनृताद्-नाश्नानेतां रात्रिमुपवसत्यपो वाश्नात्यारण्यं[7] वा। काममारण्यस्याश्नीयात् ॥ ५ ॥ आ मार्गादा मधुन आ शाशतिकादित्येकेषाम् ॥ ६ ॥ आरण्यायोपवसन्नपो वाश्नीयान्न वा किंचन ॥ ७ ॥ आमावास्यां रात्रिं जागर्ति ॥ ८ ॥ अपि वा यथा शक्नुयात् तथा कुर्यात् ॥ ९ ॥ उपरि त्वेव न शयीत ॥ १० ॥ काममुपरि शयीत ॥ ११ ॥ व्रतचारी त्वेव स्यात् ॥ १२ ॥ ॥४॥

आहवनीयागारे गार्हपत्यागारे वा संविशति ॥ १ ॥ श्वो भूतेऽपरेणा-हवनीयमतिक्रम्यापरेण ब्रह्मसदनं यजमान आहवनीयमभिमुख[8] उपविशति ॥ २ ॥ सोऽत्रैवासीनः कर्माणि क्रियमाणान्यभिमन्त्रयते ॥ ३ ॥ अग्नीन्[9] परिस्तीर्यमाणान-भिमन्त्रयते[9]

---

1. $B_{2,3}$ प्रवीमि
2. $A_{3-5}$ मंत्रयतेऽग्ने व्रतपते
3. $A_2$ एष
4. $B_3$ ततो
5. $A_{1,2}$ °मुपनयन्; $A_{3-5}$,$B_1$ °मुपनयन
6. $A_{2-5}$ जुगुप्सेता°
7. $A_2$ श्नात्या°
8. $B_1$ आहवनीयमभिमुखमुप°; Mahādeva on SatS VI.1 (p.509): आहवनीयाभि-मुख इति भरद्वाजादयः।
9. A,$B_1$ omitted

उभावग्नी उपस्तृणते देवता उपवसन्तु मे ।
अहं ग्राम्यानुपवसामि मह्यं गोपतये पशून् ॥

इति ॥ ४ ॥ प्रणीताः प्रणीयमाना अभिमन्त्रयते भूश्च कश्च वाक् चर्क्[1] च गौश्च धट्[2] च[2] खं[3] च[3] धूश्च[4] नूश्च[5] पूश्च[6] ॥

एकाक्षराः पूर्दशगा विराजो या इदं विश्वं भुवनं व्यानशुः ।
ता नो देवीस्तरसा संविदानाः स्वस्ति यज्ञं नयत प्रजानतीः ॥
ब्रह्मपूताः स्थ ॥ को वो युनक्ति स वो युनक्तु विश्वेभ्यः कामेभ्यो देवयज्यायै ॥
याः पुरस्तात् प्रस्रवन्त्युपरिष्टात् सर्वतश्च याः ।
ताभी रश्मिपवित्राभिः श्रद्धां यज्ञमारभे ॥

इति ॥ ५ ॥ ॥५॥

हविर्निरुप्यमाणमभिमन्त्रयते[7] अग्निँ होतारमिह तँ हुवे इति ॥ १ ॥ तदुदित्वा वाचं यच्छत्या हविष्कृतः ॥ २ ॥ सर्वं विहारमभिमन्त्रयते कस्त्वा युनक्ति स त्वा युनक्तु इति ॥ ३ ॥ वेदिँ संमृज्यमानामभिमन्त्रयते

चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका भुवनस्य मध्ये ।
मर्मृज्यमाना महते सौभगाय मह्यं धुक्ष्व यजमानाय कामान् ॥

इति ॥ ४ ॥ स्तम्बयजुर्ह्रियमाणमभिमन्त्रयते[8]

यो मा हृदा मनसा यश्च वाचा यो ब्रह्मणा कर्मणा द्वेष्टि देवाः ।
यः श्रुतेन हृदयेनेष्णता च तस्येन्द्र वज्रेण शिरश्छिनद्मि ॥

इति ॥ ५ ॥ उत्करमभिगृह्यमाणमभिमन्त्रयते

इदं तस्मै हर्म्यं करोमि यो वो देवाश्चरति ब्रह्मचर्यम् ।
मेधावी दिक्षु मनसा तपस्व्यन्तर्दूतश्चरति मानुषीषु ॥

इति ॥ ६ ॥ परिग्राहं पूर्वं[9] चोत्तरं चाभिमन्त्रयते यज्ञस्य त्वा प्रमयाभिमया[10] प्रतिमयोन्मया परिगृह्णामि ॥

---

1. $A_1$,$B_1$ omitted
2. $A_1$ चपद् च; $B_1$ पपद्रसु; $B_2$ वलंश्च
3. $A_1$ खश्च
4. $B_{2,3}$ धूंश्च
5. $A_1$ रूश्च; $B_1$ रुंश्च
6. $A_1$,$B_{2,3}$ पूंश्च; $B_1$ पुंश्च
7. Thus $B_{2,3}$; A °मंत्रयेत; $B_1$ मंतये
8. Thus $B_{2,3}$; $A$,$B_1$ °मंत्रयेत
9. Rudradatta on ĀpŚS IV.5.4 : पूर्वंचेति भारद्वाजवचनाच्च ।
10. $A_{1-3}$ प्रमया

बृहस्पते परि गृह्राण वेदिँ स्वगा वो देवाः सदनानि सन्तु ।
तस्यां बर्हिः प्रथताँ साध्वन्तरहिँस्रा णः पृथिवी देव्यस्तु ॥
इति ॥ ७ ॥ ॥६॥

स्वचमुद्धन्यमानामभिमन्त्रयते[1]
यदुद्घ्नन्तो[2] जिहिँसिम[3] पृथिवीमोषधीरपः ।
अध्वर्यवः स्फ्यकृतः स्फ्येनान्तरिक्षं मोरु पातु तस्मात् ॥
यदुद्घ्नन्तो[4] जिहिँसिम क्रूरमस्या वेदिं चकृमा मनसा देवयन्तः ।
मा तेन हेड उपगाम भूम्याः शिवा नो विश्वैर्भुवनेभिरस्तु ॥
इति ॥ १ ॥ कृतामनुमन्त्रयते[5]
भूमिर्भूत्वा महिमानं पुपोष ततो देवी वर्धयते पयाँसि ।
यज्ञिया यज्ञं वि च यन्ति शं चौषधीराप इह शक्करीथ ॥
इति ॥ २ ॥ प्रोक्षणीरासाद्यमाना अभिमन्त्रयते[6]
ईडेन्यक्रतूरहमपो[7] देवीरुपब्रुवे[8] ।
दिवा नक्तं च सश्रुषीरपस्वरीः ॥
इति ॥ ३ ॥ बर्हिरुपसाद्यमानमभिमन्त्रयते[9]
अशिश्रेम बर्हिरन्तः पृथिव्याँ सँरोहयन्त ओषधीर्विवृक्णाः ।
यासां मूलमुदवधीः स्फ्येन शिवा नस्ताः सुहवा भवन्तु ॥
इति ॥ ४ ॥ आज्यं प्रोक्षणीश्चोत्पूयमाना अभिमन्त्रयते
अद्भिराज्यमाज्येनापः सम्यक् पुनीत सवितुः पवित्रैः ।
ता देवीः शक्वरीः शाक्वरेणेमं यज्ञमवत संविदानाः ॥
इति ॥ ५ ॥ व्याख्यातमाज्यावेक्षणमाज्यग्रहा इति ॥ ६ ॥ ॥७॥

अन्तर्वेदि बर्हिरासाद्यमानमभिमन्त्रयते
सुमनसो यजमानाय सन्त्वोषधीराप इह शक्करीथ ।

1. $B_3$ °मनु°
2. $A_1$ यदूद्धंतो; $A_{2-5}$,$B_{2,3}$ यदुद्धंतो; $B_1$ यदत्थंतो
3. $A_1$,$B_{1,2}$ जिहिंसीः
4. $A_1$ यदूद्धंत; $A_{2-5}$,$B_3$ यदुद्धंतो; $B_1$ यदुत्थंते; $B_2$ उद्धंते
5. $B_2$ कृतां वेदिमनु°
6. $A_{2-3}$,R अनु°
7. $A_1$,$B_1$ °क्रतुं°; $B_{2,3}$ °क्तु°
8. $A_1$ °ध्रुवे; $B_1$ °भूवे
9. $B_3$ °मनुमन्त्रयते

वृष्टिद्यावा पर्जन्य एना विरोहयतु हिरण्यवर्णाः शतवल्शा[1] अदब्धाः ॥

इति ॥ १ ॥ बर्हिः स्तीर्यमाणमभिमन्त्रयते

ऊर्णाम्रदु प्रथमानँ स्योनं देवेभ्यो जुष्टँ सदनाय बर्हिः ।
सुवर्गे लोके यजमानँ हि धेहि मां नाकस्य पृष्ठे परमे व्योमन् ॥

इति ॥ २ ॥ वेदिँ सँस्तीर्यमाणामभिमन्त्रयते

चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते ।
सा स्तीर्यमाणा महते सौभगाय सा मे धुक्ष्व यजमानाय कामान् ॥

शिवा च मे शग्मा चैधि । स्योना च मे सुषदा चैधि । ऊर्जस्वती च मे पयस्वती चैधि ॥ इषमूर्जं मे पिन्वस्व । ब्रह्म तेजो मे पिन्वस्व । क्षत्रमोजो मे पिन्वस्व । विशं पुष्टिं मे पिन्वस्व । आयुरन्नाद्यं मे पिन्वस्व । प्रजां पशून् मे पिन्वस्व । लोकं मे पिन्वस्व इति ॥ ३ ॥ ॥८॥

परिधीन् परिधीयमानानभिमन्त्रयते ध्रुवोऽसि ध्रुवोऽहँ सजातेषु भूयासम् इत्येतैः प्रतिमन्त्रम् ।

अस्मिन्[2] यज्ञ उप भूय[3] इन्नु मेऽविक्षोभाय परिधीन् दधामि ।
धर्ता धरुणो धरीयानग्निर्द्वेषाँसि निरितो नुदातै ॥

इति च सर्वान् ॥ १ ॥ आहवनीयमभिमन्त्रयते[4]

युनज्मि त्वा ब्रह्मणा दैव्येन हव्यायास्मै वोढवे जातवेदः ।
इन्धानास्त्वा सुप्रजसः सुवीरा ज्योग् जीवेम बलिहृतो वयं ते ॥
यन्मे अग्ने अस्य यज्ञस्य रिष्याद्यद्वा स्कन्दादाज्यस्योत विष्णो ।
तेन हन्मि सपत्नं दुर्मरायुमैनं दधामि निर्ऋत्या उपस्थे ॥
तेजिष्ठा ते तपना या च रोचना प्रत्योषन्तीस्तन्वो यास्ते अग्ने ।
ताभिर्वर्माण्यभितो व्ययस्व[5] मा त्वा दभन्[6] यज्ञहनः पिशाचाः ॥

इति[7] ॥ २ ॥ विधृती निधीयमाने[8] अभिमन्त्रयते

---

1. Thus $B_3$; $B_1$ °पल्शा; $B_2$ °वन्शा
2. $B_2$ अन्यस्मिन्; Rudradatta on ĀpSS IV.6.3: अस्मिन् यज्ञ इति सर्वानिति भारद्वाजवचनात्। Vāñcheśvara on SatS (11a): सर्वान् परिधीनिति भारद्वाजः।
3. $B_2$ हूय
4. $B_3$ °मनुमन्त्रयते
5. $B_2$ व्यधस्व; $B_3$ धेयस्व
6. $A_1$,$B_3$ दहत्; $B_1$ दहन्; $B_2$ दविहन्
7. $B_{2,3}$ इति च
8. $A_1$,$B_1$ नीयमाने

विच्छिनद्मि विधृतीभ्यां सपत्नान् जातान् भ्रातृव्यान् ये च जनिष्यमाणाः ।
विशो यन्त्राभ्यां विधमाम्येनानहँ स्वानामुत्तमोऽसानि देवाः ॥
विशो यन्त्रे नुदमाने अरातिं विश्वं पाप्मानममतिं[1] दुर्मरायुम् ।
सीदन्ती देवी सुकृतस्य लोके प्रजामस्मभ्यं[2] द्रविणं च धत्तम् ॥

धृती स्थो विधृती स्वधृती प्राणान् मयि धारयतं प्रजां मयि धारयतं पशून् मयि धारयतम् इति ॥ ३ ॥ प्रस्तरँ साद्यमानमभिमन्त्रयते[3]

अयं प्रस्तर उभयस्य धर्ता धर्ता प्रयाजानामुतानूयाजानाम् ।
स दाधार समिधो विश्वरूपास्तस्मिन् स्रुचो अध्यासादयामि ॥

इति ॥ ४ ॥ ॥९॥

स्रुचः साद्यमाना अभिमन्त्रयते

आरोह पथो जुहु देवयानान् यत्रर्षयः प्रथमजा ये पुराणाः ।
हिरण्यपक्षाजिरा संभृताङ्गा वहासि मा सुकृतां यत्र लोकाः ॥
जुहूरसि घृताची गायत्रीयाम्नी[4] कविभिर्जुष्टाणा ।
अव्ययमाना यज्ञमनुयच्छस्व सुनीती[5] यज्ञं नयास्मुप देवानाग्नेयेन शर्मणा दैव्येन ॥

इति जुहूम् ॥ १ ॥

अवाहं बाध उपभृता सपत्नान् जातान् भ्रातृव्यान् ये च जनिष्यमाणाः ।
दोहै[6] यज्ञँ सुदुघामिव धेनुमहमुत्तरो भूयासमधरे मत्सपत्नाः ॥
सुभृदस्युपभृद् घृताची त्रैष्टुभेन छन्दसा विश्ववेदः ।
अव्यथमाना[7] यज्ञमनुयच्छस्व[7] सुनीती[8] यज्ञं नयास्मुप देवानैन्द्रेण शर्मणा दैव्येन ॥

इत्युपभृतम् ॥ २ ॥

यो मा वाचा मनसा दुर्मरायुर्हृदारातीयादभिदासदग्ने ।
इदमस्य चित्तमधरं ध्रुवाया अहमुत्तरो भूयासमधरे मत्सपत्नाः ॥
ध्रुवासि धरणी धनस्य पूर्णा जागतेन छन्दसा विश्ववेदः[9] ।

---

1. $B_3$ °नमरातिं
2. Thus $A_{1-3}$,$B_{1,3}$; $A_{4,5}$ प्रजास्मभ्यं; $B_2$ अस्मभ्यं; R प्रजा अस्मभ्यं
3. $B_3$ आसाद्य°
4. $B_1$ गायत्रयामणि; $B_3$ गायत्र्याम्णी
5. Thus $B_3$; $A_1$,$B_{1,2}$ सुनीति
6. Thus $A_1$; $A_{2-5}$,$B_{2,3}$,R दोहं; $B_1$ देहं
7. $B_3$ अव्यथमानामनुयच्छस्व
8. Thus $B_3$; $A_{1,2,4}$ °ति; $B_1$ सुरिति
9. $B_3$ °दा

अव्यथमाना यज्ञमनुयच्छस्व सुनीती[1] यज्ञं नयास्युप देवान् वैश्वदेवेन शर्मणा दैव्येन॥

इति ध्रुवाम् ॥ ३ ॥ ॥१०॥

स्योनो मे सीद सुषदः पृथिव्यां प्रथयि प्रजया पशुभिः सुवर्गे लोके ।
दिवि सीद पृथिव्यामन्तरिक्षेऽहमुत्तरो भूयासमधरे मत्सपत्नाः ॥
अयँ स्रुवो अभिजिहर्ति होमान् शतक्षरश्छन्दसानुष्टुभेन[2] ।
सर्वा यज्ञस्य समनक्ति विष्ठा बार्हस्पत्येन शर्मणा दैव्येन ॥

इति स्रुवम् ॥ १ ॥

इयँ स्थाली घृतस्य पूर्णाच्छिन्नपयाः शतधार उत्सः ।
मारुतेन शर्मणा दैव्येन ॥

इत्याज्यस्थालीम् ॥ २ ॥ पुरोडाशावज्यमानावभिमन्त्रयते

तृप्तिरसि गायत्रं छन्दस्तर्पय मा तेजसा ब्रह्मवर्चसेन ॥
तृप्तिरसि त्रैष्टुभं छन्दस्तर्पय मौजसा वीर्येण ॥
तृप्तिरसि जागतं छन्दस्तर्पय मा प्रजया पशुभिः ॥

इति ॥ ३ ॥ अन्तर्वेदि हवीँष्यासन्नान्यभिमृशति

यज्ञोऽसि सर्वतः श्रितः सर्वतो मां भूतं भविष्यच्छ्रयताम् ।
शतं मे सन्त्वाशिषः सहस्रं मे सन्तु सूनृता इरावतीः पशुमतीः ॥

इत्याग्नेयं पुरोडाशम् ।

प्रजापतिरसि सर्वतः श्रितः सर्वतो मां भूतं भविष्यच्छ्रयताम् ।
शतं मे सन्त्वाशिषः सहस्रं मे सन्तु सूनृता इरावतीः पशुमतीः ॥

इत्यग्नीषोमीयम् ।

यो नः कनीय इह कामयाता अस्मिन् यज्ञे यजमानाय मह्यम् ।
अप तमिन्द्राग्नी भुवनानुदेतामहं प्रजां वीरवतीं विदेय ॥

इत्यैन्द्राग्नम् ॥ ४ ॥ ॥११॥

इदमिन्द्रियममृतं वीर्यमनेनेन्द्राय[3] पशवोऽचिकित्सन् ।
तेन देवा अवतोप मामिहेषमूर्जं यशः सह ओजः सनेयँ शृतं मयि श्रयताम् ॥

इति[4] शृतम्[4] ॥ १ ॥

---

1. $A_{1-4}$,B सुनीति
2. $B_2$ चतुरक्षर°
3. $B_2$ सुवीर्यम°
4. $A_1$,$B_1$ omitted

यत् पृथिवीमचरत्तत् प्रविष्टं येनासिञ्चद्बलमिन्द्रे प्रजापतिः ।
इदं तच्छुक्रं मधु वाजिनीवद्येनोपरिष्टादधिनोन्महेन्द्रम् ॥
दधि मां धिनोतु ॥

इति दधि ॥ २ ॥ सर्वाणि समस्तान्यभिमृशति ममाग्ने वर्चो विहवेष्वस्तु इत्येतेनानुवाकेन ।

अयं यज्ञः समसदद्धविष्मानृचा साम्ना यजुषा देवताभिः ।
तेन लोकान् सूर्यवतो जयेमेन्द्रस्य सख्यममृतत्वमश्याम् ॥

इति च[1] ॥ ३ ॥ सामिधेनीरनूच्यमाना अभिमन्त्रयते अङ्गिरसो मास्य यज्ञस्य प्रातरनुवाकैरवन्तु इति ॥ ४ ॥ यां यामाशिषं कामयते तामाशास्ते ॥ ५ ॥ यत्राभिजानाति समिद्धो अग्न आहुतः इति तदाहवनीयमभिमन्त्रयते

समिद्धो अग्निराहुत[2] स्वाहाकृतः पिपर्तु नः ।
स्वगा देवेभ्य इदं नमः ॥

इति ॥ ६ ॥ उपश्रुम्भो अग्ने[3] यजमानायैधि निशुम्भो अभिदासते इति[4] ॥ ७ ॥ स्रुवाघारमाघार्यमाणमभिमन्त्रयते[5] मनोऽसि प्राजापत्यम् इति ॥ ८ ॥ वागस्यैन्द्री सपत्नक्षयणी इति स्रुच्यम् ॥ ९ ॥ ॥१२॥

प्रवरयोः प्रव्रियमाणयोर्जपति देवाः पितरः पितरो देवा योऽहमस्मि स सन् यजे यस्यास्मि न तमन्तरेमि । स्वं म इष्टँ स्वं दत्तँ स्वं पूर्तँ स्वँ श्रान्तँ स्वँ हुतम् । तस्य मेऽग्निरुपद्रष्टा वायुरुपश्रोतादित्योऽनुख्याता द्यौः पिता पृथिवी माता प्रजापतिर्बन्धुः । य एवास्मि ॥ सन् यजे यस्यास्मि न तमन्तरेमि इति ॥ १ ॥ प्रयाजानामिष्टमिष्टमनुमन्त्रयते वसन्तमृतूनां प्रीणामि इत्येतैः प्रतिमन्त्रम् ॥ २ ॥

एको ममैका तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥
द्वौ मम द्वे तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥
त्रयो मम तिस्रस्तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥

---

1. Rudradatta on ApŚS IV.8.4 and Vāñcheśvara on SatS (12b): तथा च भारद्वाजः सर्वाणि समस्तान्यभिमृशति ममाग्ने वर्चो विहवेष्वित्यनुवाकेनायं यज्ञः समसदद्धविष्मानिति चेति। Mahādeva on SatS VI.2 (p. 514): तथैवोक्तमापस्तम्बभरद्वाजाभ्यामपि सर्वाणि हवींषीति।
2. $A_{2-3}$ अग्नि आहुतः; $B_1$ अग्न आहुत; $B_3$ अग्न आहुतः
3. $B_1$ अग्न; $B_2$ अग्नय
4. $B_{2,3}$ इति च
5. $B_2$ स्रुवेणाघार°

चत्वारो मम चतस्रस्तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥
पञ्च मम न तस्य किंचन योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥

**इति च ॥ ३ ॥ आज्यभागाविष्टावनुमन्त्रयते** अग्निना यज्ञश्चक्षुष्माँस्तस्याहं देवयज्यया चक्षुष्मान् भूयासम् इत्याग्नेयम् ॥ ४ ॥ ॥१३॥

सोमेन यज्ञश्चक्षुष्माँस्तस्याहं देवयज्यया चक्षुष्मान् भूयासम् **इति सौम्यम्** ॥ १ ॥ **समस्तानुमन्त्रणमेके समामनन्ति** अग्नीषोमयोरहं देवयज्यया चक्षुष्मान् भूयासम् **इति** ॥ २ ॥ **आग्नेयस्य पुरोडाशस्य हविराहुतिमनुमन्त्रयते** अग्नेरहं देवयज्ययान्नादो भूयासम् इति ॥ ३ ॥ दब्धिरस्यदब्धो भूयासममुं दभेयम् इत्युपाँशुयाजस्य[1] । **यं द्वेष्टि तस्य नाम गृह्णाति** ॥ ४ ॥ अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम् इत्यग्नीषोमीयस्य ॥ ५ ॥ इन्द्राग्नियोरहं देवयज्ययेन्द्रियाव्यन्नादो भूयासम् इत्यैन्द्राग्नस्य ॥ ६ ॥ इन्द्रस्याहं देवयज्ययेन्द्रियावी भूयासम् इति **सांनाय्ययोः** ॥ ७ ॥ महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयम् **इति यदि महेन्द्रयाजी भवति** ॥ ८ ॥ अग्नेः स्विष्टकृतोऽहं देवयज्ययायुष्मान् यज्ञेन प्रतिष्ठां गमेयम् इति **स्विष्टकृतः** । अग्निर्मा दुरिष्टात् पातु इति च[2] ॥ ९ ॥ इन्द्रस्य वैमृधस्याहं देवयज्ययासपत्नो भूयासम् इति[3] वैमृधस्य[3] ॥ १० ॥ ॥१४॥

**इडामाह्रियमाणामभिमन्त्रयते** सुरूपवर्षवर्ण एहि **इति प्रतिपद्य** उपहूत उपहवं तेऽशीय **इत्यन्तेन** ॥ १ ॥ **उपाँशूपहवे सप्त** देवगवीर्जपति भूयस्येहि श्रेयस्येहि वसीयस्येहि चित्त एहि दधिप एहीड एहि सूनृत एहि **इति** ॥ २ ॥ **उच्चैरुपहवे सप्त** मनुष्यगवीः चिदसि मनासि धस्वी रन्ती रमतिः सूनुः सूनरा[4] देवीर्देवैरभि[5] मा निवर्तध्वम् । स्योनाः स्योनेन घृतेन मा समुक्षत ।

न म इदमुपदम्भिषगृषिर्ब्रह्मा[6] यद्ददे समुद्रादुदचन्निव स्रुचा ।
वाग्ग्ने[7] विप्रस्य तिष्ठति शृङ्गेभिर्दशभिर्दिशन्[8] ॥

---

1. $B_2$ °याजस्तु; $B_3$ °याज्यस्य
2. *Subodhinī* on BaudhSS III.18: याजमान इत्यथानुमन्त्रणं भारद्वाजोऽप्याह अग्नेः स्विष्टकृतोऽहं देवयज्ययायुष्मान् यज्ञेन प्रतिष्ठां गमेयमिति। *Subodhinī* on BaudhSS III.18 quotes at another place this entire sūtra verbatim.
3. Thus $B_{2,3}$; A,R इतीन्द्रवैमृधस्य; In $B_{2,3}$ sūtras 9 and 10 are in a reverse order. Vāñcheśvara on SatS ( 14a ) cites इतीन्द्रस्य वैमृधस्य.
4. A $B_{1,2}$ सूनरी; $B_3$ सूना
5. Thus $B_{1,3}$; $B_2$ देवीर्देवोरभि
6. $B_3$ °र्षिर्ब्रह्मा
7. $A_1$,$B_1$ वगाग्ने; $A_{2,3}$,$B_2$ वगग्ने; $A_{4,5}$ वचग्ने
8. Thus $A_{2-5}$; $A_1$,$B_1$ शृंगेभिर्दशसन्; $B_3$ °र्दशन्

इति च ॥ ३ ॥ यर्हि होतेडामुपह्वयेत तर्हि यजमानो होतारमीक्षमाणो वायुं मनसा ध्यायेत् वायुरिडाया वत्सः सा मे वायुना वत्सेन श्रद्धां तपः स्वर्गं लोकं[1] धुक्ष्व इति ॥ ४ ॥ उपहूयमानायां जपति[2] सा मे सत्याशीः इति प्रतिपद्य जुष्टिं[3] ते गमेयम् इत्यन्तेन ॥ ५ ॥ उपहूतामनुमन्त्रयते इडाया अहं देवयज्यया पुष्टिमान् पशुमान् भूयासम् इति ॥ ६ ॥ भक्षायाह्रियमाणामभिमन्त्रयते[4]

इडा धेनुः सहवत्सा न आगादूर्जं दुहाना पयसा प्रपीना ।
सा नो अन्नेन हविषोत गोभिरिडाम्यस्माँ आगात् ॥

इति ॥ ७ ॥ ॥१५॥

व्याख्याता मार्जनी ॥ १ ॥ बर्हिषदं पुरोडाशमभिमृशति अग्न पिन्वस्व ददतो मे मा क्षायि कुर्वतो मे मोप दसत् । दिशां क्लृप्तिरसि । दिशो मे कल्पन्तां कल्पन्तां मे दिशो दैवीश्च मानुषीश्च । अहोरात्रे मे कल्पेताम् । अर्धमासा मे कल्पन्ताम् । मासा मे कल्पन्ताम् । ऋतवो मे कल्पन्ताम् । संवत्सरो मे कल्पताम् । क्लृप्तिरसि कल्पतां मे ॥

आशानां त्वाशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः ।
इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम् ॥

भजतां भागी भागं मा भागो भक्त निरभागं भजामः । अपस्पिन्वौषधीर्जिन्व । द्विपात् पाहि चतुष्पादव । दिवो वृष्टिमेरय ॥

ब्राह्मणानामिदँ हविः सोम्यानाँ सोमपीथिनाम् ।
निर्भक्तोऽब्राह्मणो नेहाब्राह्मणस्यास्ति ॥

इति ॥ २ ॥ अन्तर्वेद्यन्वाहार्यमासन्नमभिमृशति

इयँ स्थाल्यमृतस्य पूर्णा सहस्रधार उत्सो अक्षीयमाणः ।
स दाधार पृथिवीमन्तरिक्षं दिवं च तेनौदनेनातितराणि मृत्युम् ॥

इति । प्रजापतेर्भागोऽसि इति चानुवाकशेषेण[5] ॥ ३ ॥ एतेनैव ब्रह्माभिमृशति ॥ ४ ॥ ॥१६॥

---

1. $A_1$ स्वर्गं; $B_1$ स्वर्गं लुक्षं; R स्वर्गलोकं
2. Thus $B_{2,3}$; $A_{2-5}$ उपहूयमाना...जपति; $A_1$,$B_1$ उपहूयमानायो जेमानं महिमानं गमेयमिति यदि महेंद्रयाजी भवत्यस्य रिवष्टकृतोऽहं देवयज्यया...जपति
3. $B_2$ जुष्टो नोसि जुष्टिं; $B_3$ सि जुष्टि
4. $A_{2,3}$ भक्षायाह्रियमाणामभिमृशति; $A_{4,5}$ भक्षायाह्रियमा; $B_{1,3}$ भक्षयाह्रिय°; the remaining portion of this section and the whole of the next section are omitted in $A_{2-5}$.
5. Thus $A_1$; $B_1$ missing; $B_2$ चानुवाकशेषेणैवैकेनव; $B_3$ ऋचा अनु°

अनूयाजसमिधमाधीयमानामभिमन्त्रयते एषा ते अग्ने समित् तया वर्धस्व चा च[1] प्यायस्व। वर्धतां च ते यज्ञपतिरा च प्यायताम्। वर्धिषीमहि च वयमा च प्यासिषीमहि[2] इति ॥ १ ॥ आहितायामाहवनीयम्

यं ते अग्न आवृश्चाम्यहं वा क्षिपितश्चरन्।
प्रजां च तस्य मूलं च नीचैर्देवा निवृश्चत ॥
अग्ने यो नोऽभिदासति समानो यश्च निष्ट्यः।
इध्मस्येव प्रक्षायतो मा तस्योच्छेषि किंचन ॥
यो मां द्वेष्टि जातवेदो यं चाहं द्वेष्मि यश्च माम्।
सर्वांस्तानग्ने संदह यांश्चाहं द्वेष्मि ये च माम् ॥

इति ॥ २ ॥ इध्मसंनहनं हुतमनुमन्त्रयते

वेदिर्बर्हिः शृतं[3] हविरिध्मः[4] परिधयः स्रुचः।
आज्यं यज्ञ ऋचो यजुर्याज्याश्च वषट्काराः।
सं मे संनतयो नमन्तामिध्मसंनहने हुते ॥

इति ॥ ३ ॥ अनूयाजानामिष्टमिष्टमनुमन्त्रयते बर्हिषोऽहं देवयज्यया प्रजावान् भूयासम् इत्येतैः प्रतिमन्त्रम् ॥ ४ ॥ स्रुचौ व्यूह्यमाने[5] वाजवतीभ्यामभिमन्त्रयते[6] वाजस्य मा प्रसवेन इति द्वाभ्याम् ॥ ५ ॥ परिधीनज्यमानानभिमन्त्रयते[7] वसून् देवान् यज्ञेनापिप्रेम्। रुद्रान् देवान् यज्ञेनापिप्रेम्। आदित्यान् देवान् यज्ञेनापिप्रेम् इति ॥ ६ ॥ ॥१७॥

प्रस्तरमज्यमानमभिमन्त्रयते[8]

समक्तो बर्हिर्हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः।
समिन्द्रेण विश्वेभिर्देवेभिरक्तो दिव्यं नभो गच्छतु यत् स्वाहा ॥

इति ॥ १ ॥ यत्राभिजानाति अग्निरिदं हविरजुषत इति तन्निगदानिगदां[9] देवतामनुमन्त्रयते अग्नेरहमुज्जितिमनूज्जेषम् इत्येतैर्मन्त्रैर्यथादेवतम् ॥ २ ॥ यर्हि होता

1. $A_1 B_{1,2}$ omitted
2. Thus $B_{2,3}$; $A_1$ प्याधिषीमहि; $A_{2,3}$ प्याशिषीमहि; $A_{4,5}$ प्याशिषामहि; $B_1$ प्यासिषिमहि
3. $B_2$ शृतं
4. $B_2$ °रिध्मं
5. Thus $A_1, B_{1,3}$; $A_{2,3,5}, B_2$ व्यूह्मानें; $A_4$ व्यूह्यमाने
6. $B_2$ °मतु°
7. $B_2$ °नाज्य°
8. $B_{1,2}$ °माज्य°
9. Thus $B_3$; $B_1$ वाग्नि°; R तां नि°

यजमानस्य नाम गृह्णीयात् तर्हि ब्रूयात् एमा अग्मन्नाशिषो दोहकामाः इति ॥ ३ ॥
पुरस्तादपात्तं तृणमनुप्रह्रियमाणमनुमन्त्रयते

दिवः खीलोऽवततः पृथिव्या अध्युत्थितः ।
तेना सहस्रकाण्डेन द्विषन्तँ शोचयामसि ।
द्विषन्मे बहु शोचत्वोषधे मो अहँ शुचम् ॥

इति ॥ ४ ॥ परिधिषु प्रह्रियमाणेष्वाहवनीयमभिमन्त्रयते[1] वि ते मुञ्चामि रशना वि रश्मीन् इति ॥ ५ ॥ शंयुवाकमभिमन्त्रयते[2] विष्णोः शंयोरहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयम् इति ॥ ६ ॥ संस्रावभागानिष्टाननुमन्त्रयते इषो यज्ञो भृगुभिरविर्दा वसुभिस्तस्य त इष्टस्य वीतस्य द्रविणेहागमेः ... भिराशीर्दा वसुभिराशीर्वानथर्वभिः[3] । अङ्गिरसो मास्य यज्ञस्य[4] प्रातरनुवाकैरहौषुः[5] । तस्य मेष्टस्य वीतस्य द्रविणेहागमः । वसुर्यज्ञो वसुमान् यज्ञस्तस्य मा यज्ञस्य[4] वसोर्वसुमतो वस्वागच्छत्वदो म[6] आगम्यात् इति । यत् कामयते तस्य नाम गृह्णाति ॥ ७ ॥ ॥१८॥

अन्तर्वेदि वेदं निधायाभिमृशति वेदोऽसि वित्तिरसि विदेय इत्येतैर्मन्त्रैः ॥ १ ॥ विदेय इत्यतोऽनन्तरं यद्यद् भ्रातृव्यस्याभिध्यायेत् तस्य नाम गृह्णीयात् ॥ २ ॥ पत्नीसंयाजानामिष्टमिष्टमनुमन्त्रयते । सोमस्याहं देवयज्यया इति प्रथमम् । त्वष्टुरहं देवयज्यया इति द्वितीयम् ॥ ३ ॥ राकाया अहं देवयज्यया प्रजावान् भूयासम् इति राकाम् । सिनीवाल्या अहं देवयज्यया पशुमान् भूयासम् इति सिनीवालीम् । कुह्वा अहं देवयज्यया पुष्टिमान् पशुमान्[7] भूयासम् इति कुहूम् । एता एव तिस्रः[8] पत्न्यनुमन्त्रयते मन्त्राँश्च संनमयति[9] ॥ ४ ॥ उत्तमौ पत्नीसंयाजाविष्टावनुमन्त्रयते देवानां पत्नीरग्निर्गृहपतिर्यज्ञस्य मिथुनं तयोरहं देवयज्यया मिथुनेन प्र भूयासम् इति[10] ॥ ५ ॥
आज्येडामनुमन्त्रयते

इडास्मानु वस्तां घृतेन यस्याः पदे पुनते देवयन्तः ।
वैश्वानरी शक्वरी वावृधानोप यज्ञमस्थित वैश्वदेवी ॥

---

1. $B_2$ प्रह्रियमाणमनुमंत्रयते; R ह्रियमाणे°
2. $B_2$ °मनुमंत्र°
3. $B_1$ °राशीर्णे व°
4. $A_{2-5}$ omitted
5. Thus $A_1$; $B_1$ °रवौषुः; $B_2$ °रहोषः
6. $B_{2,3}$ म आगच्छत्वदो म
7. $A_{2-5}$ omitted
8. Thus $A_1$,B; $A_{2-3}$,R त्रिभिः
9. $A_{2-5}$ संनमति
10. *Subodhinī* on BaudhŚS III.20 quotes sūtras 3-5 verbatim.

इति ॥ ६ ॥ या सरस्वती विशोभगीना[1] तस्यास्ते भक्तिवानो[2] भूयास्म इति फलीकरणहोमे हुते मुखं विमृष्टे ॥ ७ ॥ हुते समिष्टयजुषि यजमानभागं प्राश्नाति सं यज्ञपतिराशिषा इति ॥ ८ ॥ यदि यजमानः प्रवसेत् प्रजापतेर्विभान्नाम लोकस्तस्मिँस्त्वा दधामि सह यजमानेन इति ध्रुवायां यजमानभागमवधाय समिष्टयजुषा सह जुहुयात् ॥ ९ ॥ ॥१९॥

पुरा पूर्णपात्राज्जपति यज्ञ शं च म उप च[3] यज्ञ शिवो मे संतिष्ठस्व स्विष्टो मे संतिष्ठस्वारिष्टो मे संतिष्ठस्व ॥ यज्ञ नमस्ते यज्ञ नमो नमश्च ते यज्ञ । शिवेन मे संतिष्ठस्व स्योनेन मे संतिष्ठस्व सुभूतेन मे संतिष्ठस्व ब्रह्मवर्चसेन मे संतिष्ठस्व यज्ञस्यर्द्धिमनु[4] संतिष्ठस्व । उप ते यज्ञ नम उप ते नम उप[5] ते नमः[5] इति ॥ १ ॥ अन्तर्वेदि प्रणीता आसन्ना अभिमृशति को वोऽयोक्षीत् स वो विमुञ्चतु इति ॥ २ ॥ अथास्य परिष्टात् संततामुदकधारां स्रावयति सदसि सन्मे भूयाः इति ॥ ३ ॥ अथैनां प्रतिदिशं व्युत्सिञ्चति[6] प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् इत्येतैर्मन्त्रैर्यथारूपम्[7] ॥ ४ ॥ अवशिष्टा अन्तर्वेदि निनयति

समुद्रं वः प्रहिणोमि स्वां योनिमपिगच्छत ।
अच्छिद्रः प्रजया भूयासं मा परासेचि मत्पयः ॥

इति ॥ ५ ॥ मुखं विमृष्टे

यदप्सु ते सरस्वति गोष्वश्वेषु यन्मधु ।
तेन मे वाजिनीवती मुखमङ्धि सरस्वति ॥

इति ॥ ६ ॥ दक्षिणे वेद्यन्ते दक्षिणेन पदा प्राङ् विष्णुक्रमान् क्रामति विष्णोः क्रमोऽसि इत्येतैस्त्रिभिर्मन्त्रैः । तिष्ठंश्चतुर्थं जपति ॥ ७ ॥ तत आदित्यमुपतिष्ठते अगन्म सुवः सुवरगन्म इति प्रतिपद्य सं ज्योतिषाभूवम् इत्यन्तेन ॥ ८ ॥ ॥२०॥

उदस्य मित्रमहः सपत्नान् मे अनीनशः ।
दिवैनान् विद्युता जहि निम्रोचन्नधरान् कृधि ॥

---

1. $A_1$ यशो मना; $A_{2-5}$ यशो भगीना; $B_1$ यशो भगिना; $B_3$ यशो भगिनीना
2. $B_3$ भक्षिवाचो
3. $B_2$ च मे
4. $B_3$ यज्ञस्य ऋद्धिमनु
5. $B_{2,3}$ omitted
6. $B_2$ अप्युत्सि°
7. $A_{1-5}, B_1$ °र्यथादेवरूपम्

उद्यन्नद्य वि नो भज पिता पुत्रेभ्यो यथा ।
दीर्घायुत्वस्य हेशिषे तस्य नो देहि सूर्य ॥
उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् ।
हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥
शुकेषु मे हरिमाणं रोपणाकासु दध्मसि ।
अथो हारिद्रवेषु मे हरिमाणं निदध्मसि ॥
उदगादयमादित्यो विश्वेन सहसा सह ।
द्विषन्तं मम रन्धयन् मो अहं द्विषतो रधम् ॥
यो नः शपादशपतो यश्च नः शपतः शपात् ।
उपांशु तस्मै निम्रुक् च सर्वं पापं समूहताम् ॥

इति च ॥ १ ॥ प्रदक्षिणमावर्तते ऐन्द्रीमावृतमन्वावर्ते पुण्या भवन्तु या लक्ष्मीः पराभवन्तु याः पापीः इति ॥ २ ॥ यद्यभिचरेत् इदमहममुष्यामुष्यायणस्य शुचा प्राणं[1] निवेष्टयामि इति दक्षिणस्य पदः पार्ष्ण्या निवेष्टयेत् ॥ ३ ॥ अन्वाहार्यपचनमभिमन्त्रयते

अग्ने वहे स्वदितं नस्तनये पितुं पच ।
शं तोकाय तनुवे स्योनः ॥

इति ॥ ४ ॥ तेजोऽसि इत्यभिपर्यावृत्याहवनीयमभिमन्त्रयते समहं प्रजया सं मया प्रजा इति ॥ ५ ॥ समिद्धो अग्ने मे दीदिहि समेद्धा ते अग्ने दीद्यासम् इत्युपसमिध्य वसुमान् यज्ञो वसीयान् भूयासम् इत्युपस्थाय गार्हपत्यमभिमन्त्रयते अग्न आयूँषि पवसे इति प्रतिपद्य[2] शतं हिमाः इत्यन्तेन ॥ ६ ॥ पुत्रस्य नाम गृह्णाति तामाशिषमा शासे तन्तवे ज्योतिष्मतीम् इत्यजातपुत्रः । तामाशिषमा शासेऽमुष्मै ज्योतिष्मतीम् इति जातपुत्रः ॥ ७ ॥ अथ[3] यदि बहुपुत्रः स्यात् सर्वेषां नामानि गृह्णीयात् ज्योतिषे तन्तवे त्वा इति ॥ ८ ॥ ॥२२॥

अन्तर्वेद्यासीनोऽतीमोक्षान्[4] जपति ये देवा यज्ञहनः इत्येतान् ॥ १ ॥ सर्वं विहारमभिमन्त्रयते कस्त्वा युनक्ति स त्वा वि मुञ्चतु इति ॥ २ ॥ अत्रैके यजमानभागस्य प्राशनं समामनन्ति ॥ ३ ॥ सांनाय्ययोरपि ब्राह्मणो यजमानः प्राश्नीयात् ।

---

1. Thus $A_1, B_{1,2}$; $A_{2-5}$, R प्राणान्
2. $A_{2-5}$ प्रपद्य
3. Thus $A_1, B_{1,2}$; $A_{2-5}$, R omitted
4. Thus $A_{2-5}$; $B_{1,2}$ °तिमोक्षं

इदँ हविः प्रजननं मे अस्तु दशवीरँ सर्वगणँ स्वस्तये ।
आत्मसनि प्रजासनि पशुसन्यभयसनि लोकसनि वृष्टिसनि[1] ॥
अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त ।
रायस्पोषमिषमूर्जमस्मासु दीधरत् ॥

इति भृतस्य । दधिक्राव्णो अकारिषम् इति दध्नः ॥ ४ ॥ ततो व्रतं विसृजते ॥ ५ ॥ दक्षिणतस्तिष्ठन्नाहवनीयमभिमन्त्रयते अग्ने व्रतपते व्रतमचारिषम् इति ॥ ६ ॥ स एष ब्राह्मणस्यैव स्यान्नेतरयोर्वर्णयोः ॥ ७ ॥ वायो व्रतपते इति वायुमुपतिष्ठते । आदित्य व्रतपते इत्यादित्यम् । व्रतानां व्रतपते इत्याहवनीयम् ॥ ८ ॥ यज्ञस्य पुनरालम्भं जपति यज्ञो बभूव स आ बभूव इति ॥ ९ ॥ प्राङुत्क्रम्य ब्रूयात् गोमाँ अग्ने इत्येताम् ॥ १० ॥ यथान्वेतमुपनिष्क्रामन्नाह ब्राह्मणाँस्तर्पयितवै इति ॥ ११ ॥ तत् खल्विदं याजमानं न प्रवसतो विद्यत इत्याश्मरथ्यः । अथालेखनः । एवंविहितमेवास्य प्रवसतो याजमानं भवति । एतावन्नाना । यानि सँस्पृश्य कर्माण्यध्वर्युस्तानि कुर्यात् ॥ १२ ॥ यजमानः[2] काले तां दिशमभिमुखो मन्त्रान् जपेत्[3] । प्राङ्मुखस्त्वेव विष्णुक्रमान् गोमतीमिति ब्रूयाद् गोमतीमिति[4] ब्रूयात्[4] ॥ १३ ॥ ॥२२॥

॥ इति[5] चतुर्थः प्रश्नः[5] ॥

---

1. $A_1$,$B_2$ omitted
2. Thus $A_{2-5}$; $A_1$,$B_1$ यजमानं काले; $B_2$ याजमानमकाले; $B_3$ यजमानः कालो; R याजमानकाले
3. cf. VI.4.7.
4. Repetition only in $A_1$,$B_1$
5. Thus $B_2$; $A_{2-5}$ प्रथमः; $B_{1,3}$ हरिः ओम्

## अथ पञ्चमः प्रश्नः

अग्नीनाधास्यमानो[1] योऽश्वत्थः शमीगर्भो भूमिं मूलेनास्पृष्टस्तस्यारणी आहरेत्[2]। अनास्पृष्ट इत्येकेषाम् ॥ १ ॥ यो अश्वत्थः शमीगर्भः इत्येतया ॥ २ ॥ उत्तरया वा ॥ ३ ॥ ब्राह्मणव्याख्याताः संभाराः सप्त पार्थिवाः सप्त वानस्पत्याः ॥ ४ ॥ तानाहरति वैश्वानरस्य रूपं पृथिव्यां परिस्रसा इत्येतैर्मन्त्रैर्यथारूपम् ॥ ५ ॥ यं त्वा समभरं[3] जातवेदः इत्येतया संभृतं संभृतं[4] यजमानोऽभिमृशति ॥ ६ ॥ कृत्तिकासु ब्राह्मण आदधीत यः कामयेत मुख्यो ब्रह्मवर्चसी स्यामिति ॥ ७ ॥ रोहिण्यामादधीत यः कामयेत सर्वान् रोहान् रोहयेयमिति ॥ ८ ॥ मृगशीर्ष आदधीत यः[5] कामयेत[5] श्रीमान् स्यामिति ॥ ९ ॥ यः पुरा भद्रः सन् पापीयान् स्यात् स पुनर्वस्वोरादधीत[6] ॥ १० ॥ यः[7] कामयेत दानकामा मे प्रजाः स्युरिति स पूर्वयोः फल्गुन्योरादधीत[7] ॥ ११ ॥ यः कामयेत भगी स्यामिति स उत्तरयोरादधीत ॥ १२ ॥ विपरीतमेके समामनन्ति ॥ १३ ॥ हस्त आदधीत यः कामयेत प्र[8] मे दीयेतेति[8] ॥ १४ ॥ यो भ्रातृव्यवान् स्यात् स चित्रायामादधीत[9] ॥ १५ ॥ चित्रायाँ राजन्य आदधीतेत्येकेषाम् ॥ १६ ॥ विशाखयोरादधीत[10] प्रजाकामोऽनुराधेष्वृद्धिकामः प्रोष्ठपदेषु प्रतिष्ठाकाम इति विज्ञायते ॥ १७ ॥ सूर्यनक्षत्र एव स्यादित्येकेषाम्[11] ॥ १८ ॥ ॥१॥

वसन्ते ब्राह्मण आदधीत ॥ १ ॥ ग्रीष्मे हेमन्ते वा राजन्यः ॥ २ ॥ शरदि

---

1. $A_{2-5}$ ॐ अग्नीना°; R अग्नीनाधास्यामः
2. Rudradatta on ĀpŚS V.1.2: यो अश्वत्थः शमीगर्भो भूमिं मूलेन स्पृष्ट इति भारद्वाजवचनाच्च। Mahādeva on SatS III.2 (p. 286): भारद्वाजस्तु यो अश्वत्थः शमीगर्भो भूमिं मूलेन सेवत इति, and later on (p. 294): तथाहरेदित्येवाह भरद्वाजोऽपि।
3. $A_{2-5}$ समभरन्; $B_1$ संभरं; $B_2$ समभरश्चात°
4. Thus $B_{2,3}$; $A_1B_1$,R संभारं
5. $A_{2-5}$ omitted
6. Thus $A_1,B_{1,2}$; $A_{2-5}$,R पुनर्वस्वोः; $B_3$ पुनर्वस्वोरग्निमादधीत
7. $A_{2-5}$,R पूर्वयोः फल्गुन्योर्यः कामयेत दानकामा मे प्रजाः स्युरिति
8. Thus $A_{2-5}$; $A_1$ प्रति मे दीयेतेति; $B_2$ प्र मे दीयतेति; $B_3$ प्र मो दीयेतेति
9. $B_2$ चित्रायामग्निमा°
10. $B_2$ विशाखयोः
11. Cited verbatim by Vāñcheśvara (20b) on SatS.

वैश्यः[1] ॥ ३ ॥ वर्षासु रथकारः ॥ ४ ॥ शिशिरः सार्ववर्णिकः ॥ ५ ॥ अथ यदि सोमेन यक्ष्यमाणः स्यान्नर्तुं सूर्क्षेत्[2] नक्षत्रम् । यस्मिन्नेव कस्मिँश्चिदृतावादधीत[3] ॥ ६ ॥ अमावास्यायां चैव[4] पौर्णमास्यामादधीत ॥ ७ ॥ या[5] पूर्वाभ्यां फल्गुनीभ्यां पौर्णमासी स्यान्न तस्यामादधीत ॥ ८ ॥ विद्यते चतुर्थस्य वर्णस्याग्न्याधेयमित्येकम् । न विद्यत इत्यपरम् ॥ ९ ॥ न[6] जीवपितुरग्न्याधेयं विद्यत इत्येकम् । विद्यत[7] इत्यपरम् ॥ १० ॥ उदवसायाग्नीनादधीत शालीनः । न यायावर आद्रियेत[8] ॥ ११ ॥ प्राचीनप्रवणं देवयजनमध्यवस्यति अपेत वीत इति ॥ १२ ॥ तस्मिन्नुदीची[9] शालां मीत्वाग्रेण मध्यमं वंशं गार्हपत्यायतनं करोति ॥ १३ ॥ अग्रेण गार्हपत्यायतनमाहवनीयाय ॥ १४ ॥ अष्टासु प्रक्रमेषु ब्राह्मणोऽग्निमादधीत । एकादशसु राजन्यः । द्वादशसु वैश्यः ॥ १५ ॥ चतुर्विंशत्यामाधेय इति विज्ञायते[9] ॥ १६ ॥ अपरिमित इत्येकेषाम् ॥ १७ ॥ चक्षुर्निमित[10] इत्येकेषाम्[10] ॥ १८ ॥ दक्षिणतः पुरस्ताद् वितृतीयदेशे नेदीयसि गार्हपत्यायतनाद् दक्षिणाग्नेरायतनं करोति ॥ १९ ॥ अग्रेणाहवनीयायतनं[11] सभ्यं[12] मिन्वन्ति[13] ॥ २० ॥ अग्रेण सभ्यमावसथम्[14] ॥ २१ ॥ ततो यजमानः केशश्मश्रु[15] वापयते ॥ २२ ॥ क्षौमे वसानौ जायापती अग्निमादधीयाताम्[16]

---

1. Thus $B_{1,3}$; A omitted
2. $A_1$,$B_2$ सूर्क्षेत्; $B_3$ पृक्षेत्; Rudradatta on ĀpŚS V.3.20: भारद्वाजश्चाह अथातः श्रद्धानस्यादधानस्य नर्तुं पृच्छेन्न नक्षत्रमिति । Mahādeva on SatS III.2 (p. 296): अत्र भरद्वाजः अथातः श्रद्धानस्यर्तुं सूर्क्षेन्न नक्षत्रमिति ।
3. $A_1$ कस्मिंश्चित्ता°; $B_1$ कस्मिश्चिता°; $B_2$ कस्मिंश्चर्तौ°
4. Thus $B_{1,3}$; $A_1$ चैव; $B_2$ वै°; *Subodhinī* on BaudhŚS II.12 quotes sūtras 6 and 7 verbatim.
5. Thus $B_3$; $A_1$,$B_1$ याः; $A_{2-5}$ यः; $B_2$ वा; Rudradatta on ĀpŚS V.3.16 quotes this sūtra verbatim. Rāmāgnicit on ĀpŚS VIII.4.13: तथा भगवता भरद्वाजेनाप्युक्तमाधाने या पौर्णमासी पूर्वाभ्यां फल्गुनीभ्यां युक्ता न तस्यामादधीतेति ।
6. Thus $B_{1,3}$; A,$B_2$,R omitted; Mahādeva on SatS III.1 (p. 279): तथा जीवपितुर्भरद्वाजेनाधानादि निषिद्धं तत्प्रतिप्रसवश्च ।
7. A,R न विद्यत
8. Thus $A_1$,$B_1$; $A_{2-5}$ आद्रियेत; $B_2$,R आद्रीयेत; $B_3$ आद्रियेत
9. A,$B_1$ omitted
10. $B_2$ omitted
11. A,$B_1$ अग्रेणायतनं
12. $A_{1,2}$ सभायां; $A_{3-5}$,$B_1$ सभायां; $B_2$ सभ्या; $B_3$ सभां
13. A,$B_1$ मिन्वंति; $B_2$ क्रिन्वन्ति; $B_3$ मित्वा
14. $A_{1-3}$,$B_1$ सभामा°; $A_{4,5}$ सभायामा°; $B_3$ सभ्यामा°
15. $A_1$ °श्मश्रोर्; $B_1$ °श्मश्रू
16. $A_2$,$B_2$ अग्नीमा°

॥ २३ ॥ ते दक्षिणाकालेऽध्वर्यवे दद्यः ॥ २४ ॥ पुरस्ताद् ब्राह्मौदनिकात्[1] परिदधीयातामित्येकम् । पुरस्तात् संभारनिवपनादित्यपरम् ॥ २५ ॥ यस्मिन् नक्षत्रेऽग्निमाधास्यमानः स्यात् तस्य पुरस्तात् संवत्सरे द्वादशाहे चतुरहे त्र्यहे द्व्यहे वैकाहे वा ॥ २६ ॥ ॥२॥

अधिवृक्षसूर्ये औपासनादग्निमाहृत्यापरेण गार्हपत्यायतनं ब्राह्मौदनिकमादधाति[2] ॥ १ ॥ निशायां चर्मणि पात्रे वा ब्रह्मौदनं चतुःशरावं[3] तूष्णीं निर्वपति ॥ २ ॥ अपि वा देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां ब्रह्मणे प्राणाय जुष्टं निर्वपामि इति प्रथमम् ॥ ३ ॥ ब्रह्मणेऽपानाय इति द्वितीयम् ॥ ४ ॥ ब्रह्मणे व्यानाय इति तृतीयम् ॥ ५ ॥ ब्रह्मणे इति चतुर्थम् । निरुप्य क्षीरे श्रपयति ॥ ६ ॥ चतुर्षु वोदपात्रेषु ॥ ७ ॥ न निर्णेनेक्ति नावसिञ्चतीत्येकेषाम् ॥ ८ ॥ जीवतण्डुलमिव श्रपयित्वोद्धृत्य जुहोति प्र वेधसे कवये इति ॥ ९ ॥ अथैनं चतुर्धा व्युद्धृत्य सर्पिषोपसिच्यानभ्युच्छिन्दन्निव चतुर्भ्य आर्षेयेभ्य[4] उपहरति ॥ १० ॥ तेभ्यः प्राशितवद्भ्यः समानं वरं ददाति ॥ ११ ॥ ब्रह्मौदनशेषं[5] आज्यमानीय[5] चित्रियस्याश्वत्थस्य[6] समिधस्तिस्र आर्द्राः सपलाशाः स्तिभिकवतीः[7] प्रादेशमात्रीर्ब्रह्मौदने विधुत्यादधाति ॥ १२ ॥ समिधाग्निं दुवस्यत इति गायत्रीभिर्ब्राह्मणस्य त्रिष्टुभी[8] राजन्यस्य जगतीभिर्वैश्यस्य ॥ १३ ॥ स एतद् व्रतं चरेत् ॥ १४ ॥ आग्न्याधेयान्न माँसमश्नीयान्न स्त्रियमुपेयात् ॥ १५ ॥ नास्याग्निं गृहाद्धरेयुर्नान्यत आहरेयुः ॥ १६ ॥ नैषोऽग्निरनुगच्छेत्[9] ॥ १७ ॥ न प्रयायात् ॥ १८ ॥ यद्यनु वा गच्छेत् प्रयायादेवमेव ब्रह्मौदनं पक्त्वैवँ समिध आधाय[10] भरणशेषँ[11] समाप्याग्नीनादधीत ॥ १९ ॥ यद्येनँ संवत्सरे नोपनमेदेवमेव कुर्यात् ॥ २० ॥ यस्तँ श्वोऽग्निमाधास्यन् स्यात् स एतां रात्रिं व्रतं चरति ॥ २१ ॥ न माँसमश्नाति न स्त्रियमुपैति

---

1. R ब्रह्मौ°; Rudradatta on ĀpŚS V.4.10 and Vāñcheśvara (23a) on SatS cite this sūtra verbatim.
2. $B_3$,R ब्रह्मौ°
3. $B_2$ चतुरः
4. $B_{2,3}$ आर्षेयेभ्य कर्तिरभ्य
5. $A_1$ ब्रह्मौदनं शेष आज्य°; $B_2$ ब्रह्मौदन आज्यशेषमानीय; $B_3$ ब्रह्मदनमानीय
6. $A_1$,$B_1$ चित्र्यस्या°; $B_2$ चित्रीयस्या°; $B_3$ चित्र्या°; R चित्रियाश्वत्थस्य
7. $B_1$ स्तिघ्नभिः कवतीः; $B_2$ त्रिभिक°; $B_3$ त्रिभिः कतिः
8. $A_1$ तृष्टुभ्भी; $A_2$ त्रिष्टुक्भि; $A_{3-5}$ त्रिष्टुक्भी; $B_1$ त्रिष्टुभि; $B_2$ तृष्टुद्भी; $B_3$ त्रिष्टुद्भी
9. Rudradatta on ĀpŚS V.7.10 quotes this sūtra verbatim.
10. $B_{1,2}$,R आदाय
11. $B_{2,3}$ हरण°

नोपर्यास्ते । जुगुप्सेतानृतात् ॥ २२ ॥ अध्वर्युरेव व्रतं चरेदित्येकम् । सर्व[1] इत्यपरम् ॥ २३ ॥ ॥३॥

गार्हपत्यायतने कल्माषमजं बध्नाति प्रजा अग्ने संवासय इत्येतया ॥ १ ॥ वीणातूणवैरेवाँ रात्रिं यजमानं जागरयन्ति पुण्यैश्च नीथैः[2] ॥ २ ॥ शल्कैस्ताँ[3] रात्रिमग्निमिन्धीत[4] शल्कैरग्निमिन्धानः इत्येतया ॥ ३ ॥ तस्मिन्नुपव्युपमरणी[4] निष्टपेत् जातवेदो भुवनस्य रेतः[5] इति द्वाभ्याम् ॥ ४ ॥ अनुगमयत्येतमग्निम्[6] ॥ ५ ॥ यजमानायारणी प्रयच्छति अग्नौ रक्षाँसि सेधसि इति ॥ ६ ॥ ते[7] यजमानः प्रतीक्षते मही विश्पत्नी सदने ऋतस्य इति ॥ ७ ॥ आरोहतं दशतम् इत्येतया प्रतिगृह्योत्तराभ्यामभिमन्त्रयते ॥ ८ ॥ ततो वाचं यच्छति अनृतात् सत्यमुपैमि[8] इति[9] ॥ ९ ॥ वाग्यत आस्त आमेर्मन्थनात् ॥ १० ॥ तत आत्मन्यग्निं गृह्णाते[9] अध्वर्युर्यजमानश्च मयि गृह्णाम्यग्रे अग्निम् इति द्वाभ्याम् ॥ ११ ॥ अग्न्यायतनान्युद्धन्ति[10] उद्धन्यमानमस्या अमेध्यम् इति ॥ १२ ॥ उद्धत्यावोक्षति शं नो देवीरभिष्टये इत्येतया ॥ १३ ॥ शुष्केषूपवातेषु संभारान् निवपति ॥ १४ ॥ द्वैधं विभज्यार्धान् पूर्वेष्वधानपरयोः ॥ १५ ॥ अग्नेर्भस्मास्यग्नेः पुरीषमसि इति गार्हपत्यायतने सिकता निवपति ॥ १६ ॥ एवमन्वाहार्यपचनायतन एवमाहवनीयायतन एवं सभ्यावसथ्ययोः ॥ १७ ॥ एवमनुपूर्वाण्येवैष्वत ऊर्ध्वं कर्माणि क्रियन्ते ॥ १८ ॥ ॥४॥

एकैकशः पार्थिवान् निवपति ॥ १ ॥ संज्ञानमसि कामधरणम् इत्यूषान् ॥ २ ॥ निवपन् यददश्चन्द्रमसि कृष्णं तदिहास्तु इति मनसा ध्यायति ॥ ३ ॥ उदेसमे इत्याखूत्करम्[11] ॥ ४ ॥ यत् पृथिव्या अनामृतम् इति गार्हपत्यायतने वल्मीकवपां

1. *Subodhinī* on BaudhŚS II.15 quotes this sūtra verbatim. Rudradatta on ĀpŚS V.7.16 quotes this sūtra with सर्वलिङ्ग for सर्व.
2. $A_2$ corrected गीतैः; Vāñcheśvara also reads गीतैः when he cites this sūtra in his commentary (26b) on SatS. He has again cited this sūtra in his commentary on Praśna VI (23a).
3. A,$B_1$ omitted
4. R अग्निम°
5. $B_2$ अयं ते योनिर्ऋत्वियः for रेतः
6. Thus all MSS; R गमयते°; Cited by Rudradatta on ĀpŚS V.8.5 as कल्पान्तर.
7. R omitted
8. $B_{1,2}$ °पुरैति
9. $A_{1-3}$,$B_1$ गृह्णीते
10. Thus $A_1$,$B_{1,2}$; $A_{2-3}$,$B_3$,R omitted
11. $B_2$ आखुकरीषं; $B_3$ °त्पुरीषं

निवपति ॥ ५ ॥ यदन्तरिक्षस्यानामृतम् इत्यन्वाहार्यपचनायतने ॥ ६ ॥ यद् दिवोऽनामृतम् इतीतरेषु ॥ ७ ॥ उत् समुद्रात् इति सूदम् ॥ ८ ॥ इयत्यग्र आसीः[1] इति वराहविहतम् ॥ ९ ॥ अदो देवी इति शर्कराः ॥ १० ॥ शर्करा[2] निवपन् यं द्विष्यात् तं ध्यायेत् ॥ ११ ॥ उत्तरेण संभारान् सौवर्णान् हिरण्यशकलानुपास्यति यास्ते शिवास्तनुवो जातवेदः इति ॥ १२ ॥ एकैकमाधायाधाय[3] रजतं द्वेष्यायातिप्रयच्छति[4] ॥ १३ ॥ यदि[4] द्वेष्यं नाधिगच्छेदतिप्रविध्येत् ॥ १४ ॥ एवँ संसृज्य वानस्पत्यान् निवपति पुष्करपर्णमश्वत्थमुदुम्बरं पलाशँ शमीं विकङ्कतमशनिहतस्य वृक्षस्य काष्ठम् इतः प्रथमं जज्ञे अग्निः इत्येतया ॥ १५ ॥ सर्वान् संभारान् संप्रयौति सं या वः प्रियास्तनुवः ॥ सं वः[5] सृजामि[5] हृदयानि इति द्वाभ्याम् ॥ १६ ॥ ॥५॥

ब्राह्मौदनिकस्य[6] भस्मापोदूह्य[7] दशहोत्रारणी समवधायोपतिष्ठत्यथैऽग्निं मन्थति सहामेऽग्निना जायस्व इति ॥ १ ॥ मथ्यमाने चतुर्होतॄन् यजमानं वाचयति ॥ २ ॥ जाते वरं ददाति ॥ ३ ॥ जातमभिप्राणिति प्रजापतेस्त्वा प्राणेनाभिप्राणिमि इति ॥ ४ ॥ अथैनँ हस्ताभ्यां परिगृह्णाति अजीजनन्नमृतं मर्त्यासः इति ॥ ५ ॥ ततः[8] प्राञ्चमुद्धृत्यानुदित आदित्ये रथन्तरे गीयमान आसीनः संभारेषु गार्हपत्यमादधाति ॥ ६ ॥ भृगूणां त्वा व्रतपते व्रतेनादधामि इति भार्गवस्यादध्यात् । अङ्गिरसां त्वा व्रतपते व्रतेनादधामि इति यो ब्राह्मण आङ्गिरसः स्यात् । आदित्यानां त्वा देवानां व्रतपते व्रतेनादधामि इत्यन्यासां ब्राह्मणीनां प्रजानाम् । वरुणस्य त्वा राज्ञो व्रतपते व्रतेनादधामि इति राज्ञः । इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनादधामि इति राजन्यस्य । मनोस्त्वा ग्रामण्यो व्रतपते व्रतेनादधामि इति वैश्यस्य । ऋभूणां त्वा देवानां व्रतपते व्रतेनादधामि इति रथकारस्य ॥ ७ ॥ संभारेष्वेव सर्वानग्नीनादधाति ॥ ८ ॥ ॥६॥

यथर्ष्याधानेनाधाय व्याहृतीभ्यामादधाति भूर्भुवः इति ॥ १ ॥ ततः सर्पराज्ञीभ्यां भूमिर्भूम्ना इत्येतया च द्वितीयया च ॥ २ ॥ एताभ्यामेवाहितं[9]

---

1. $B_{1,2}$ आसीद्; $B_3$ आसीदर्
2. A °रान्; $B_1$ शर्करामिपन्
3. $A_{2-3}$,$B_3$ °कमाधाय
4. $A_{2-3}$ omitted
5. A,$B_1$ प्रिया; $B_2$ सृजा
6. Rudradatta on ĀpŚS V.10.7 : तथा ब्राह्मौदनिकस्येत्येव भारद्वाजः ।
7. $B_3$ भस्मापोह्य
8. $B_3$ तं
9. Thus $A_1$,B; B °मेवं विहितं

यजमान उपतिष्ठते ॥ ३ ॥ ततो घर्मशिरसा घर्मः शिरः इति ॥ ४ ॥ एतेनैवाहितं यजमान उपतिष्ठते ॥ ५ ॥ तत एताभिरन्तत आदधाति ॥ ६ ॥ ऋतँ स्तृणामि पुरीषम् ॥ सुगार्हपत्यः इति चैताभ्याम् ॥ ७ ॥ अहं त्वदस्मि इत्याहितं यजमान उपतिष्ठते ॥ ८ ॥ ततोऽश्वस्य दक्षिणे कर्णेऽग्नितनूर्यजमानं वाचयति

या वाजिन्नग्नेः पवमाना पशुषु प्रिया तनूस्तामावह ॥
या वाजिन्नग्नेः पावकाप्सु प्रिया तनूस्तामावह ॥
या वाजिन्नग्नेः सूर्ये शुचिः प्रिया तनूस्तामावह ॥

इति ॥ ९ ॥ गार्हपत्य इध्ममादीप्याहवनीयमुद्यच्छते ओजसे बलाय त्वोद्यच्छे इति ॥ १० ॥ उद्ध्रियमाणे वामदेव्यं गायति ॥ ११ ॥ उपरीवाग्निमुद्गृह्णीयादुद्धरन् ॥ १२ ॥ नास्यदग्रमतिहरेत्[1] ॥ १३ ॥ उद्यतमिध्ममुपयतं[2][3] धारयन्ति[4] ॥ १४ ॥ अथान्वाहार्यपचनं[5] यतः कुतश्चाहृत्योर्ध्वज्ञुरादधाति ॥ १५ ॥ अरणीभ्यां वा मथित्वा ॥ १६ ॥ यथप्याधानेनाधाय व्याहृत्यादधाति भुवः इति ॥ १७ ॥ ततः सर्पराज्ञीभ्यां भूमिर्भूम्ना इत्येतया च तृतीयया च ॥ १८ ॥ एताभ्यामेवाहितं[6] यजमान उपतिष्ठते ॥ १९ ॥ ततो घर्मशिरसा वातः प्राणः इति ॥ २० ॥ एतेनैवाहितं[7] यजमान उपतिष्ठते ॥ २१ ॥ ॥७॥

ततोऽश्वप्रथमाः प्राञ्चोऽभिप्रव्रजन्ति प्राचीमनु प्रदिशं प्रेहि विद्वान् इत्येतया। दिवः पृथिव्याः पर्यन्तरिक्षात् इत्येताभिश्चतसृभिः ॥ १ ॥ जानुदघ्नेऽग्रे हरत्यथ नाभिदघ्नेऽथास्यदघ्ने ॥ २ ॥ नाग्निं चादित्यं च व्यवेयात् ॥ ३ ॥ पूर्वमग्निं[8] हरति पश्चादन्वेति ॥ ४ ॥ दक्षिणतो ब्रह्मा रथं वर्तयति रथचक्रं वा बृहस्पते परि दीया रथेन इति ॥ ५ ॥ एतां वाप्रतिरथस्यर्चं ब्रह्मा जपतीत्येकेषाम् ॥ ६ ॥ तथा[9] रथं वर्तयति यावच्चक्रं त्रिः परिवर्तते ॥ ७ ॥ यः सपत्नवान् भ्रातृव्यवान् स्यात् तस्य पुनश्चक्रं त्रिः परिवर्तयेत् ॥ ८ ॥ समयाध्ये[10] वरं ददाति ॥ ९ ॥ समयाध्ये

1. $A_{1-3}$,$B_1$ °मिहिरेत्; $B_2$ °मभिहरेत्; $A_{4,5}$,$B_3$ °मतिहरेत्
2. A,$B_1$ मुतमि°; $B_{2,3}$ उद्यत इध्म°
3. Thus $A_1$,$B_{2,3}$; $A_{2-5}$ °मुपयंतं; $B_1$ °मुद्यततं; R °मुपयमनं
4. Thus $B_{2,3}$; A,R धारयति
5. Here ends sūtra 15 in R.
6. Thus $A_1$,$B_1$; $A_{2-5}$,R °मेवं विहितं
7. Thus $B_3$; $A_{1-3}$ एतैवाहितं; $A_{4,5}$ एतेनैवाहितं; $B_2$ एतेनैवाभिहितं
8. $A_{2-5}$ तदग्निं°; $B_1$ यदग्निं°
9. R तया
10. R समया

हिरण्यं न्यस्यातिक्रामति नाकोऽसि ब्रध्नः संक्रमणः प्रतिष्ठा यजमानस्य इति ॥ १० ॥ उत्तरेण संभारान् दक्षिणेन पदा प्राश्वमश्वमाक्रमयति अभ्यस्थात् इति ॥ ११ ॥ एतस्मिन्नेव पदे प्रदक्षिणमावर्त्योत्तरया प्रत्यश्वमाक्रमयति ॥ १२ ॥ पार्श्वत आक्रमयेद्यथाहितस्याग्नेरङ्गाराः पदमभ्यववर्तेरन् ॥ १३ ॥ यद्यश्वो न स्याद् बलीवर्द एवैतत् कर्म कुर्यात् ॥ १४ ॥ अजस्य पद आधेय इति विज्ञायते ॥ १५ ॥ कमण्डलुपद इत्येकेषाम् ॥ १६ ॥ अश्वमुपसंगृह्य पुरस्तात्प्रत्यङ्मुखः प्रह्वस्तिष्ठन्[1] बृहति गीयमाने ॥ १७ ॥ ॥८॥

अर्धोदिते सूर्य आहवनीयमादधाति ॥ १ ॥ सर्वोदिते ब्रह्मवर्चसकामस्यादध्यात् ॥ २ ॥ यथर्प्याधानेनाधाय व्याहृतीभिरादधाति[2] भूर्भुवः सुवः इति ॥ ३ ॥ ततः सर्पराज्ञीभ्यां भूमिर्भूम्ना इत्येतया च चतुर्थ्या च ॥ ४ ॥ एताभ्यामेवाहितं यजमान उपतिष्ठते ॥ ५ ॥ ततो घर्मशिरसा अर्कश्चक्षुः इति ॥ ६ ॥ एतेनैवाहितं यजमान उपतिष्ठते ॥ ७ ॥ प्राणं त्वामृत आदधामि इति च द्वाभ्याम् ॥ ८ ॥ अन्तराधायोपतिष्ठते आनशे व्यानशे इति ॥ ९ ॥ निहिते वारवन्तीयश्यैते गायति ॥ १० ॥ नाहितमग्निमनभिहुतमुपस्पृशेत् । आज्येन चौषधीभिश्च शमयितव्य इति विज्ञायते ॥ ११ ॥

या ते अग्ने पशुषु[3] पवमाना[3] प्रिया तनूर्या पृथिव्यां याग्नौ
या रथंतरे या गायत्रे छन्दसीदं ते तामवरुन्धे ।
तस्यै ते स्वाहा ॥
या ते अग्नेऽप्सु पावका[4] प्रिया तनूर्यान्तरिक्षे या वायौ
या वामदेव्ये या त्रैष्टुभे छन्दसीदं ते तामवरुन्धे ।
तस्यै ते स्वाहा ॥
या ते अग्ने सूर्ये शुचिः प्रिया तनूर्या दिवि यादित्ये
या बृहति या जागते छन्दसीदं ते तामवरुन्धे ।
तस्यै ते स्वाहा ॥

इति ॥ १२ ॥ ॥९॥

आज्येन चौषधीभिश्च शमयित्वाहवनीयात् सभ्यावसथ्यौ यथर्प्याधानेना-

1. Rudradatta on ĀpŚS V.15.5: प्रह्वस्तिष्ठन्निति तु भारद्वाजः ।
2. $A_{2-3}$ व्याहृति°
3. Thus $A_{2-3}$; $A_1$ पवमानाय पशुषु; E पवमाना पशुषु
4. $A_1B_2$ पावकाप्सु

दधाति ॥ १ ॥ अरणीभ्यां वा मथित्वा ॥ २ ॥ सभायाँ सभ्यमावसथ[1] आवसथीयम्[1] ॥ ३ ॥ दक्षिणाग्नौ सभ्यावसथ्ययोरिति विज्ञायते ॥ ४ ॥ यज्ञायज्ञियं गायेदित्येकम् । सर्वेष्वित्यपरम् ॥ ५ ॥ ब्रह्माग्न्याधेये सामानि गायेदिति विज्ञायते ॥ ६ ॥ नाग्न्याधेये सामानि गायेदित्येकेषाम् ॥ ७ ॥ आग्निपवमानीभिस्तिसृभिस्तिस्र[2] आश्वत्थीः समिध आदधाति अग्न आयूँषि पवसे इत्येताभिस्तिसृभिः[3] ॥ ८ ॥ शमीमय्यस्तिस्रः समिधो घृतान्वक्ता आदधाति समुद्रादूर्मिः इत्येताभिस्तिसृभिः[3] ॥ ९ ॥ प्रेद्धो अग्ने दीदिहि पुरो नः इत्यौदुम्बरीम् । विधेम ते परमे जन्मन्नग्ने इति वैकङ्कतीम् । ताँ सवितुर्वरेण्यस्य चित्राम् इति शमीमयीम् ॥ १० ॥ सर्वेष्वेकैकाम् ॥ ११ ॥ प्रातरग्निहोत्रस्यावृता[4] तूष्णीमग्निहोत्रं जुहोति ॥ १२ ॥ अरण्येऽनुवाक्याभिर्घोराभिस्तनूभिर्यजमान आहवनीयमुपतिष्ठते यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छ इति ब्रूयाद्यं द्विष्यात् ॥ १३ ॥ ॥१०॥

तिरः पवित्रमाज्यं निरुप्योत्पूय स्रुवं च जुहूं च निष्टप्य संमृज्य चतुर्गृहीतेन स्रुचं पूरयित्वा द्वादशगृहीतेन वा पूर्णाहुतिं जुहोति । सप्त ते अग्ने समिधः सप्त जिह्वाः इत्येतामनुद्रुत्य स्वाहाकारेण जुहोति[5] ॥ १ ॥ हुतायां पूर्णाहुतौ वरं ददाति ॥ २ ॥ एवमेवात ऊर्ध्वं दर्विहोमेषु निर्वपत्युत्पुनाति निष्टपति संमार्ष्ट्यन्ततः स्वाहाकारं दधाति[6] ॥ ३ ॥ यान् प्रतिनिगद्य जुहोत्येते दर्विहोमा भवन्ति याँश्च जुहोतीति चोदयेत् ॥ ४ ॥ ततो यजमान आहवनीयमुपतिष्ठते ये ते अग्ने शिवे तनुवौ विराट् च स्वराट् च इत्यनुवाकशेषेण ॥ ५ ॥ तत एतामाहुतिम् ये अग्नयो दिवो ये पृथिव्याः इति ॥ ६ ॥ भास्वतो विराजक्रमैरुपतिष्ठते अथर्व पितुं मे गोपाय इत्यन्वाहार्यपचनम् । नर्य प्रजां मे गोपाय इति गार्हपत्यम् । शँस्य पशून् मे गोपाय इत्याहवनीयम् । सप्रथ सभां मे गोपाय इति सभ्यम् । अहे बुध्निय मन्त्रं मे गोपाय इत्यावसथीयम् । पञ्चधाग्नीन् इति च सर्वान् ॥ ७ ॥ ॥११॥

आग्नेयस्य तन्त्रं प्रक्रमयति ॥ १ ॥ समानमा निर्वपणात् ॥ २ ॥ आग्नेय-

---

1. Thus $B_{2,3}$; $A_1$, $B_1$ °मावस्य आव°; $A_{2-3}$, R °मावसथ्यमाव°
2. $A_{1-3}$ एताभिः for तिसृभिः
3. R reads तिसृभिः at the beginning of the next sutra.
4. Rudradatta on ĀpŚS V.17.6 : प्रातरग्निहोत्रस्यावृतेत्येव सत्याषाढभारद्वाजौ ।
5. Vāñcheśvara (48b) on SatS : सप्त ते अग्ने समिधः सप्त जिह्वा इति तूष्णीमग्निहोत्रं जुहोतीति भारद्वाजः ।
6. $A_1$ दधाति; $B_2$ ददाति

मष्टाकपालं निर्वपति ॥ ३ ॥ निरुप्तं हविरुपसन्नमप्रोक्षितं भवत्यथ[1] सभ्यावसथ्य-योर्मध्येऽधिदेवनमुद्धत्यावोक्ष्याक्षान् न्युप्याक्षेषु हिरण्यं निधाय व्यूह्य समूह्य जुहोति निषसाद धृतव्रतः इत्येतया ॥ ४ ॥ शतं यजमानायाक्षान् प्रयच्छन्नाह व्रीहिभ्यो गां दीव्यताहिँसन्तः पर्वाणि[2] विशसत इति ॥ ५ ॥ तद्यजमानः कृतं विजित्योत्तिष्ठति ॥ ६ ॥ गामस्य तदहः सभायां दीव्येयुः ॥ ७ ॥ तस्याः परूँषि न हिँस्युः ॥ ८ ॥ ताँ सभासद्भ्य उपहरेत् ॥ ९ ॥ तया[3] यद्[3] गृह्णीयात् तदुभयमन्नँ सँस्कृत्य ब्राह्मणान् भोजयेत् ॥ १० ॥ आवसथे मध्ये परिषदो हिरण्यं निधायाभिजुहोति प्र नूनं ब्रह्मणस्पतिः इत्येतया ॥ ११ ॥ ततो यजमानोऽग्नीनुपतिष्ठते कल्पेतां द्यावा-पृथिवी ॥ येऽग्नयः समनसः इति द्वाभ्याम् ॥ १२ ॥ समानमा दक्षिणाकालात् ॥ १३ ॥ वर्धमाना दक्षिणा देयेति विज्ञायते ॥ १४ ॥ अग्नीधेऽग्र उपबर्हणँ सार्वसूत्रं ददाति ॥ १५ ॥ अजं[4] चार्धं ब्रह्मणे ॥ १६ ॥ धेनुं होत्रे ॥ १७ ॥ अनड्वाहमध्वर्यवे ॥ १८ ॥ मिथुनौ गावौ वासो रथमिति सर्वेभ्यः ॥ १९ ॥ षड् वा द्वादश वा चतुर्विँशतिर्वाग्न्याधेये[5] दक्षिणा भवन्ति ॥ २० ॥ सहादिष्ट-दक्षिणाभिः संचर्क्षीतेत्येकम्[6] ॥ २१ ॥ ॥१३॥

अन्यत्रादिष्टदक्षिणाभ्य इत्यपरम् ॥ १ ॥ [7]यद्यनाढ्योऽग्नीनादधीताप्येकां गां दक्षिणां दद्यात् ॥ २ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ३ ॥ सायमग्निहोत्रँ होष्यन् दशहोतारं मनसानुद्रुत्याहवनीये सग्रहं जुहोति ॥ ४ ॥ द्वादशाहमजस्रेष्वग्निहोत्रं जुहोति[7] ॥ ५ ॥ व्रतचारी भवति ॥ ६ ॥ द्वादश रात्रीः स्वयं जुहुयादन्यो वा ॥ ७ ॥ न प्रवसेत् ॥ ८ ॥ अहतं वासो वसीत ॥ ९ ॥ स्वयं त्रयोदशीं जुहुयात् ॥ १० ॥ यां प्रथमामग्निहोत्राय गां[8] दुहन्ति साग्निहोत्रस्य[9] दक्षिणा ॥ ११ ॥ अग्निहोत्रमेताभिर्व्याहृताभिरुपसादयेत् भूर्भुवः सुवः इति ॥ १२ ॥ संवत्सरे पर्यागत एताभिरेव सादयेत् ॥ १३ ॥ प्रथम एव संवत्सर इत्याश्मरथ्यः । संवत्सरे संवत्सर

1. In R sūtra 4 ends with भवति.
2. A पर्वणि
3. Thus $B_2$; $A_1$,$B_1$ तयद्; $A_{2-3}$ तद्यद; $B_3$ तया यत्
4. Thus $B_{2,3}$; $A_1$,$B_1$ अजां
5. Thus all MSS; R °र्वाग्न्याधेय°
6. Thus all MSS; R °त्येके
7-7. $A$,$B_1$ omit sūtras 2-5.
8. Thus $B_3$; $A$,$B_2$,R omitted
9. Thus $B_2$; A,R साहोरात्रस्य

इत्यालेखनः ॥ १४ ॥ द्वादशसु व्युष्टासु तनुहवींषि[1] निर्वपति[1] ॥ १५ ॥ अग्नये पवमानाय पुरोडाशमष्टाकपालम् । त्रिंशन्मानं हिरण्यं दक्षिणा ॥ १६ ॥ सिद्धमिष्टिः संतिष्ठते ॥ १७ ॥ ततोऽग्नये पावकायाग्नये शुचये । त्रिंशन्मानचत्वारिंशन्माने हिरण्ये[2] दक्षिणा ॥ १८ ॥ सिद्धमिष्टिः संतिष्ठते ॥ १९ ॥ काममेव श्वो भूते तनुहवींषि निर्वपेत् ॥ २० ॥ काममर्धमासे[3] मास्यृतौ[3] संवत्सरे । सद्य इत्येकेषाम् ॥ २१ ॥ समानतन्त्राणि चाग्नेयेन स्युः ॥ २२ ॥ विज्ञायते न सोमेन यक्ष्यमाणः ॥ २३ ॥ ॥१३॥

पुरा संवत्सरात् तनुहवींषि निर्वपेत्[4] ॥ १ ॥ अपि वाग्नये पवमानायाग्नये पावकायाग्नये शुचय आज्याहुतीर्हुत्वा सोमदेवताभ्यो वा[5] निर्वपेत् ॥ २ ॥ उपरिष्टात् तनुहविर्भ्योऽग्नीषोमीयमेकादशकपालमनुनिर्वपत्यैन्द्राग्नमेकादशकपालमदित्यै[6] घृते चरुम् ॥ ३ ॥ अग्नीषोमीयो ब्राह्मणस्यैव स्यान्नेतरयोर्वर्णयोः ॥ ४ ॥ समानमा फलीकरणात् ॥ ५ ॥ फलीकृतानां तण्डुलानां विभागमन्त्रेण चरव्यानपोद्धरति ॥ ६ ॥ सहेतरान्[7] पिनष्टि ॥ ७ ॥ समानमा कपालोपधानात् ॥ ८ ॥ ऐन्द्राग्नस्य कपालान्युपधाय प्रथमेन कपालमन्त्रेण चरुस्थालीमुपदधाति ॥ ९ ॥ ध्रुवोऽसि इति मन्त्रं संनमति । ध्रुवासि इति वा ॥ १० ॥ पिष्टानामावृता तण्डुलान् संवपत्युत्पुनाति ॥ ११ ॥ यजुषाज्यमुत्पूय चरुस्थाल्यामानयति ॥ १२ ॥ यथाधिकरणं[8] मन्त्रं[9] नमति[10] ॥ १३ ॥ अधिश्रयणमन्त्रेण चरव्यानावपति ॥ १४ ॥ स्थाल्यैव चरुमासादयति ॥ १५ ॥ एष एवात ऊर्ध्वं चरूणां कल्पो भवत्यन्यत्राज्यग्रहणात्[11] ॥ १६ ॥ सप्तदश सामिधेन्यो भवन्ति ॥ १७ ॥ समानमा हविषां प्रदानात् ॥ १८ ॥ ॥१४॥

आदित्यैं हुतमनुमन्त्रयते अदित्या अहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयम्

---

1. Thus $B_{2,3}$; $A_1$ तनुहवीं निर्वपेत्; $A_{2-5}$,R तनुहविर्भिर्वपति; $B_1$ तनुहविर्निर्वपति; Vāñcheśvara (41a) on SatS ; द्वादशसु व्युष्टास्विति बोधायनभारद्वाजौ ।
2. $A_{2-5}$ omitted
3. $A_1$ काममर्धमास्तौ; $A_2$ काममर्धमासे मासस्वर्तौ; $A_{3-5}$ काममर्धमासे मास्यर्तौ; $B_{1,2}$ काममर्धमासे मासर्तौ; $B_3$ काममयासे मासर्तौ
4. V.13.23; 14.1 *cited verbatim by Vāñcheśvara (41a) on SatS.*
5. Emended; $A_1$,$B_1$ यवा; $A_{2-5}$,R यवान्
6. $A_1$,$B_2$ °मदित्यै च
7. Thus $B_{2,3}$; $A_1$ समेतरान्; $A_{2-5}$,R समेतरान्; $B_1$ समेदवरान्
8. $A_1$,$B_1$ °करण; $A_2$ °धिकार; $A_{3-5}$ यथाधिकर; $B_2$ यथाकरणं
9. $B_2$ मन्त्रान्
10. $A_1$ नामति; $B_{2,3}$ नवति
11. Thus $A_1$; $A_{2-5}$,R °न्यत्राग्रयणात्; $A_1$,$B_{1,2}$ °न्यत्राज्यग्रयणात्; $B_3$ °न्यत्राज्यग्रपणात्

इति ॥ १ ॥ एवमेव[1] सर्वानादित्याननुमन्त्रयते ॥ २ ॥ आदित्यस्य हविरुच्छिष्टं चतुर्धाकरणकाले सर्वं ब्रह्मणे परिहरति ॥ ३ ॥ तं चत्वार आर्षेया ऋत्विजः प्राश्नन्ति ॥ ४ ॥ तेभ्यः प्राशितवद्भ्यो धेनुं वरं ददाति ॥ ५ ॥ उपांशुदेवता आग्न्याधेयिका इष्टयो भवन्तीत्येकेषाम् ॥ ६ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ७ ॥ दर्शपूर्णमासावारप्स्यमाणः[2] सारस्वतौ होमौ पुरस्ताज्जुहुयात् पूर्णा पश्चात् ॥ यत्ते देवा अदधुः इति द्वाभ्याम् ॥ ८ ॥ अन्वारम्भणीयामिष्टिं निर्वपति ॥ ९ ॥ आग्नावैष्णवमेकादशकपालँ सरस्वत्यै चरुँ सरस्वते द्वादशकपालम् ॥ १० ॥ अग्नये भगिने पुरोडाशमष्टाकपालं चतुर्थं निर्वपेद् भगकामः ॥ ११ ॥ समानमा हविषां प्रदानात् ॥ १२ ॥ सारस्वतँ हुतमनुमन्त्रयते सरस्वत्या[3] अहं देवयज्यया वाचमन्नाद्यं पुषेयम् इति ॥ १३ ॥ एवमेव सर्वान् सरस्वतीदेवताननुमन्त्रयते[4] ॥ १४ ॥ तस्य पुरस्तात् स्विष्टकृतो जयान् जुहोति चित्तं च[8] चित्तिश्च इति द्वादश । प्रजापतिर्जया-निन्द्राय वृष्णे प्रायच्छत् इति त्रयोदशीं जुहुयात् ॥ १५ ॥ ॥१५॥

अग्ने वरुद इति चतुर्दशीं ब्रह्मवर्चसकामस्य ॥ १ ॥ चित्रं तस्य जनतायां भवति । शबलमिव स्वस्यात्मन्[5] जायते ॥ २ ॥ मिथुनौ गावौ दक्षिणा ॥ ३ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ४ ॥ दर्शपूर्णमासावारभमाणश्चतुर्होतारं मनसानुद्रुत्याहवनीये सग्रहं जुहोति ॥ ५ ॥ दर्शपूर्णमासावारभते ॥ ६ ॥ पौर्णमासीं पूर्वम्[6] ॥ ७ ॥ अमा-वास्यायामादधानस्यैतदविकृतम् ॥ ८ ॥ पौर्णमास्यां तु पूर्वस्मिन् पर्वणि सेष्टि सान्वा-रम्भणीयँ सद्योऽपसृज्य ॥ ९ ॥ श्वो भूते पौर्णमासेन यजते ॥ १० ॥ अथैतान्याहि-ताग्निव्रतानि भवन्ति ॥ ११ ॥ नानृतं वदेत् ॥ १२ ॥ नास्य ब्राह्मणोऽनाश्वान् गृहे वसेत् ॥ १३ ॥ सूर्योढमतिथिं वसत्यै नापरुन्ध्यात् ॥ १४ ॥ न सायमहुतेऽग्निहोत्रेऽ-श्नीयात्[7] ॥ १५ ॥ न प्रातरहुते ॥ १६ ॥ न नक्तमन्यदन्नाद्याद् दद्यात् ॥ १७ ॥ नक्तमन्नं ददन्नुदर्यात ॥ १८ ॥ नर्जीपपक्वस्याश्नीयात् ॥ १९ ॥ क्षिप्तं दारु नादध्यात् ॥ २० ॥ अन्तर्नाव्यापस्तासां नाश्नीयात् ॥ २१ ॥ स्वकृत इरिणे नावस्येत् ॥ २२ ॥ रजतँ हिरण्यं बर्हिषि न दद्यात् ॥ २३ ॥ तूष्णीं हिंकृत्य स्त्रियमुपेयात्[8] ॥ २४ ॥ ॥१६॥

1. $A_{2-5}$,$B_1$ एव
2. Thus $B_{1,3}$; $A_1$ °वारभमाणः; $A_{2-5}$,$B_2$,R °वारप्स्यमानः
3. $A_{2-5}$ omitted
4. $A_{2-5}$ omitted
5. $A_1$ स्वस्यात्म; $B_{1,2}$ स्वस्यात्मं; $B_3$ अस्यात्मन्
6. $B_3$,R पूर्वाम्
7. Thus all MSS; R omits अग्निहोत्रे.
8. $B_{2,3}$ repeat this sūtra.

पुनराधेयं व्याख्यास्यामः ॥ १ ॥ तस्याग्न्याधेयेन कल्पो व्याख्यातः ॥ २ ॥ विकाराननुक्रमिष्यामः[1] ॥ ३ ॥ योऽग्न्याधेयेन नर्ध्नोति स पुनराधेयमाधत्त इति विज्ञायते ॥ ४ ॥ ज्यान्यां[2] पुत्रमर्त्यायां यदैवाहिताग्निरङ्गेन विधुरतामियादथादधीतेत्येकेषाम् ॥ ५ ॥ प्रजाकामः पुनरादधीत पशुकामः पुनरादधीतान्नाद्यकामः पुनरादधीत प्रतिष्ठाकामः पुनरादधीतेति विज्ञायते ॥ ६ ॥ यावज्जीवं पुनराधेयस्य[3] कालो नात्येतीत्याश्मरथ्यः । संवत्सरमित्यालेखनः ॥ ७ ॥ आग्नेयमष्टाकपालं[4] निर्वपेद् वैश्वानरं द्वादशकपालमग्निमुद्वासयिष्यन्[5] ॥ ८ ॥ तस्य पुरस्तात् स्विष्टकृत एता आहुतीर्जुहोति

या ते अग्ने उत्सीदतः पवमाना पशुषु प्रिया तनूस्तया सह पृथिवीमाविश ।
रथन्तरेण साम्ना गायत्रेण छन्दसा स्वाहा ॥ ९ ॥ ॥१७॥

या ते अग्न उत्सीदतः पावकाप्सु प्रिया तनूस्तया सहान्तरिक्षमाविश ।
वामदेव्येन साम्ना त्रैष्टुभेन छन्दसा ।
ततो न इषमूर्जमाकृधि गृहमेधं च वर्धय स्वाहा ॥
या ते अग्न उत्सीदतः सूर्ये शुचिः प्रिया तनूस्तया सह दिवमाविश ।
बृहता साम्ना जागतेन छन्दसा । ततो नो वृष्ट्यावधि[6] स्वाहा ॥
यास्ते अग्ने विभक्तीरिन्द्रः सूकर आभरत् ।
तासु शोचिषु सीदेह भरन् वैश्वानरस्य यत् स्वाहा ॥
यास्ते अग्ने कामदुघा विभक्तीरनुसंभृताः ।
ताभिर्नः कामान् धुक्ष्वेह प्रजां पुष्टिमथो धनं स्वाहा ॥
ये[7] ते अग्ने वानस्पत्याः संभाराः संभृताः सह तेभिर्गच्छ[8]
वनस्पतीन् स्वां योनिं यथायथं स्वाहा ॥
अगन्नग्निर्यथालोकमसदत्[9] सदने[9] स्वे ।

1. $A_{2-5}$ विकाराननु°
2. Thus $A_{3-5}$,$B_{2}$; $A_{1}$ ज्यांयान; $B_{1}$ ज्योन्यां; $B_{3}$ नान्यां
3. Thus $A_{1,2}$,B; $A_{3-5}$,R पुनराधेयः; Mahādeva on SatS III.6 (p. 329) quotes this sūtra verbatim except संवत्सर for संवत्सरम्.
4. $B_{2,3}$ °कपालं पुरस्तात्
5. Rudradatta on ĀpSS V.26.4: भारद्वाजेनापि वैश्वानरं द्वादशकपालं निर्वपेदिति ।
6. $A_{1-3}$,$B_{1}$ वृष्ट्याव; $A_{4,5}$ वृष्ट्यावधि; $B_{2,3}$ वृष्ट्यावन
7. Thus $A_{2}$ corrected; $B_{2}$ ए; others या
8. Thus all MSS; R तेभिरावच्छ
9. Thus $B_{2}$; $A_{1}$ °लोकं सदसन् सदने स्व; $A_{2,3}$ लोकर सदन् सने स्वे; $A_{4,5}$ लोकर सदत् स ने स्व; $B_{1}$ °लोकं सदासदने; $B_{3}$ लोकः सदसन् सदने स्व

अवीरहत्यं देवेषूशागां मनसा सह स्वाहा ॥

इति ॥ १ ॥ पौर्णमास्यां ज्वलतोऽग्नीनुद्वासयति ॥ २ ॥ संवत्सरमनसृष्टाग्निः स्यादित्येकम् । अपरिमितमित्यपरम्[1] ॥ ३ ॥ ॥१८॥

अथैतानि पुनराधेयनक्षत्राणि रोहिणी पुनर्वसू अनूराधा इति ॥ १ ॥ वर्षासु शरदि वादधीत ॥ २ ॥ मध्यंदिन आधेय इति विज्ञायते ॥ ३ ॥ सर्वान् मध्यंदिन आदधीतेत्येकम् । आहवनीयँ सभ्यावसथ्यावित्यपरम् ॥ ४ ॥ समानमा गार्हपत्यस्याधानात् ॥ ५ ॥ सर्वाभिः सर्पराज्ञीभिर्गार्हपत्यमादधाति ॥ ६ ॥ समानमाहवनीयस्योद्यमात् ॥ ७ ॥ उपोलवा[2] दर्भा भवन्ति परुक्णाः[3] संवत्सरप्रवाताः । तेषामिध्ममादीप्याहवनीयमुद्यच्छते ॥ ८ ॥ यत्त्वा क्रुद्धः परोवप इत्यन्वाहार्यपचनमादधाति ॥ ९ ॥ यत्ते मन्युपरोप्तस्य इत्याहवनीयम् ॥ १० ॥ मनो ज्योतिर्जुषताम् इत्याहितमाहितमुपतिष्ठते[4] ॥ ११ ॥ समानमा[5] तूष्णीमग्निहोत्रात् ॥ १२ ॥ सप्त ते अग्ने समिधः सप्त जिह्वाः इति तूष्णीमग्निहोत्रं जुहोति ॥ १३ ॥ समानमा निर्वपणात् ॥ १४ ॥ आग्नेयं पञ्चकपालं निर्वपति ॥ १५ ॥ स एषोऽष्टाकपालस्य स्थानं प्रत्येति ॥ १६ ॥ पञ्चदश सामिधेन्यो भवन्ति सप्तदश वा ॥ १७ ॥ यत् प्रागुत्तमादनूयाजात् तेनोपांशु प्रचरन्त्यन्यत्र स्विष्टकृतः ॥ १८ ॥ समानमा प्रयाजेभ्यः ॥ १९ ॥ चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्दधाति ॥ २० ॥ ॥१९॥

अग्नाग्नेऽग्नावग्नेऽग्निनाग्नेऽग्निमग्ने इति ॥ १ ॥ उपरिष्टाद् येयजामहाद् दध्यादित्येकम् । पुरस्तादामन्त्रणीयात् पदादित्यपरम्[6] ॥ २ ॥ यं कामयेतर्ध्नुयादिति तस्योपरिष्टात् प्रयाजानां विभक्तीर्दध्यात् पुरस्ताद्वषट्कारात् ॥ ३ ॥ स्वयँसंपन्न उत्तमः[7] प्रयाजः ॥ ४ ॥ समानमाज्यभागाभ्याम् ॥ ५ ॥ बुधन्वानाग्नेय आज्यभागो भवति अग्निँ स्तोमेन बोधय इति ॥ ६ ॥ पवमानवान् सौम्यः अग्न आयूँषि पवसे इति ॥ ७ ॥ जुषाणो अग्निः पवमान आज्यस्य हविषो वेतु इति यजति ॥ ८ ॥

---

1. $A_{1-3}$,$B_1$ °मित इत्य°; $A_{4,5}$ °मिता इत्य°; $B_2$ °मित्य°; $B_3$ मितिमित्य°
2. Thus $B_3$; A,$B_1$ उपोशला वा; $B_2$ उपोल्पा
3. Thus $B_{1,3}$; $A_1$ परुक्णात्; $B_2$ वरुणा
4. Rudradatta on ĀpŚS V.27.13: तत्र आहितमाहितमुपतिष्ठत इति भारद्वाजः। Dhūrtasvāmin on ĀpŚS V.27.12: बृहस्पतिवत्योपस्थानमाहितस्याग्नेः शमने कृते भरद्वाजमतादुपदेशस्तन्त्रेणोपस्थानम्।
5. Thus $A_1$,$B_2$; $A_{2-5}$,$B_1$,R समानमनु; $B_3$ समानं
6. Thus $B_2$; $B_3$ पादान् omitted; R पादा°. The latter half of this sūtra is cited verbatim by Vāñcheśvara (49a) on SatS.
7. A,$B_1$ उत्तं

अग्निर्मूर्धा इति सौम्यस्य[1] लोके कुर्यात् प्रजाकामः पशुकामो वा ॥ ९ ॥ अग्ने तमद्य इति पङ्क्त्यो याज्यानुवाक्या भवन्ति । द्वे हविषो द्वे स्विष्टकृतः ॥ १० ॥ पुनरूर्जा॥ सह रय्या इत्यभितः पुरोडाशमाहुती[2] जुहोति ॥ ११ ॥ समानमा दक्षिणाकालात् ॥ १२ ॥ उभयीर्दक्षिणा ददात्याग्न्याधेयिकीः पौनराधेयिकीश्च ॥ १३ ॥ ता इमाः पुनराधेयदक्षिणाः ॥ १४ ॥ ॥२०॥

पुनर्निष्कृतो रथः पुनरुत्स्यूतं वासः पुनरुत्सृष्टोऽनड्वान् शतमानँ हिरण्यमिति ॥ १ ॥ समानमानूयाजेभ्यः ॥ २ ॥ द्वयोरनूयाजयोर्द्वे विभक्ती दधाति देवे अग्नौ देवो अग्निः इति ॥ ३ ॥ व्याख्यातो विभक्तिलोकः ॥ ४ ॥ स्वयँसंपन्न उत्तमोऽनूयाजः ॥ ५ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ६ ॥ आग्निवारुणमेकादशकपाल-मनुनिर्वपति ॥ ७ ॥ स एषोऽग्नीषोमीयस्य स्थानं प्रत्येति ॥ ८ ॥ सर्वेषां[3] वानु-निर्वाप्याणाम्[3] ॥ ९ ॥ संतिष्ठते पुनराधेयम्[4] ॥ १० ॥ य ऊर्ध्वं पुनराधेयादग्नि-मादधीत स एतान् होमान् जुहुयात् लेकः सलेकः सुलेकः इति[5] ॥ ११ ॥ त इम आग्न्याधेयिकानां दर्विहोमानाँ[6] स्थानं प्रतियन्ति ॥ १२ ॥ यदरण्योः समारूढो नश्येत् पुनराधेयं कुर्वीतेत्याश्मरथ्यः । अग्न्याधेयमित्यालेखनः ॥ १३ ॥ यस्यो-भावनुगतावभि वोदियादभि वास्तमियात् पुनराधेयमेव कुर्वीत[7] ॥ १४ ॥ ॥२१॥

॥ इति[8] पञ्चमः प्रश्नः[8] ॥

---

1. $A_1$ omitted; B सोमस्य
2. Thus $A_{2,3}$,$B_{2,3}$; $A_{1,4,5}$,$B_1$,R °माहुतीर
3. A,$B_1$ सर्वेषामनु°
4. A,$B_1$ °धेये
5. Partially cited by Vāñcheśvara (49b) on SatS.
6. Thus $B_{2,3}$; $A_{1,3-5}$,$B_1$,R दर्श°; $A_2$ दर्शा°
7. $B_3$ repeats पुनराधेयमेव कुर्वीत ।
8. $A_1$ omitted; $A_{2-5}$ द्वितीयः; $B_1$ श्रौः ॥ ५ ॥; $B_2$ इत्यग्न्याधानः पंचमः प्रश्नः; $B_3$ इतिः ओम्

## अथ षष्ठः प्रश्नः

अग्न्युपस्थानं[1] व्याख्यास्यामः ॥ १ ॥ आधानवेलायां[2] पत्नी च यजमानश्च व्रतचारिणौ भवत आ होमात् ॥ २ ॥ उन्नीयमाने यजमानोऽनुचङ्क्रम्यत आ होमात् ॥ ३ ॥ उन्नीयमाने स्थेयमित्येकेषाम्[3] ॥ ४ ॥ विद्युदसि विद्य मे पाप्मानमृतात् सत्यमुपैमि[4] श्रद्धा मयि इति होष्यन्नप उपस्पृशेत् ॥ ५ ॥ वृष्टिरसि वृश्च मे पाप्मानमृतात्[4] सत्यमुपागामप्सु श्रद्धा इति हुत्वा[5] ॥ ६ ॥ एवमेव[6] सर्वेषु यज्ञक्रतुषु यक्ष्यमाणश्चेष्ट्वा चाप उपस्पृशति ॥ ७ ॥ उत्तरामाहुतिमनूत्थाय कक्षातिर्यङ्ङिवाहवनीयमुपतिष्ठते उपप्रयन्तो अध्वरम् इत्येताभिः षड्भिः ॥ ८ ॥ ममाग्ने वर्चो विहवेष्वस्तु इति चैताभिश्चतसृभिरपरपक्षे[6] ॥ ९ ॥ अथ पूर्वपक्षे उभा वामिन्द्राग्नी आहुवध्यै इत्येतामपोह्येतराभिरुपस्थाय अन्यं[7] दिवो मातरिश्वा जभार[8] इत्येतयान्तत उपतिष्ठते ॥ १० ॥ संवत्सरे संवत्सर आग्निपावमानीभिर्गार्हपत्यमुपतिष्ठते[9] ॥ ११ ॥ अग्न आयूंषि पवसे इत्येताभिः षड्भिराहवनीयमुपतिष्ठते ॥ १२ ॥ ॥१॥

आयुर्दा अग्नेऽस्यायुर्मे देहि इति प्रतिपद्य चित्रावसो स्वस्ति ते पारमशीय इति सायमुपतिष्ठते । अर्वाग्वसो स्वस्ति ते पारमशीय इति प्रातः प्रातरवनेकेन[10] ॥ १ ॥ त्रिश्चित्रावसुनोपतिष्ठते त्रिरर्वाग्वसुना ॥ २ ॥ आहवनीये समिध आदधाति अग्नेः समिदस्यभिशस्त्या मा पाहि इति प्रथमाम् । सोमस्य समिदसि परस्पा म एधि इति द्वितीयाम् । यमस्य समिदसि मृत्योर्मा पाहि इति तृतीयाम् । इन्धानास्त्वा शतँ हिमाः इति चतुर्थीमाधायोपतिष्ठते सं त्वमग्ने सूर्यस्य वर्चसागथाः इत्यनुवाकशेषेण ॥ ३ ॥ मुखं विमृष्टे

---

1. A ॐ अग्न्यु°; $B_1$ हरिः ओं; $B_2$ अथ षष्ठः प्रश्नः
2. $B_{2,3}$ उपसमा°
3. Thus $A_1$,$B_{1,3}$; $A_{2-5}$,R °मित्येके
4-4. R omitted
5. Thus $A_2$,$B_{2,3}$; $A_{1,3}$ सुक्के°; $A_{4,5}$ सुत्के°; $B_1$ सुत्त्वे°
6. Rudradatta on ĀpŚS VI.16.7: तथा चतसृभिरुपतिष्ठेतेत्येव सत्याषाढभारद्वाजौ ।
7. R अन्ये
8. $B_2$ जहार; R जगार; see : TS II.3.14.2
9. Thus $A_2$,$B_{1,3}$; $B_2$,R आग्निपव°; *Subodhinī* on BaudhŚS III.8 quotes this sūtra verbatim.
10. Rudradatta on ĀpŚS VI.16.11: तथा अर्वाग्वसो स्वस्ति ते पारमशीयेति प्रातः प्रातरवनेक इत्येव भारद्वाजः ।

वयँ सोम व्रते तव मनस्तनूषु बिभ्रतः । प्रजावन्तो अशीमहि ॥

इति ॥ ४ ॥ गोष्ठमुपतिष्ठते सं पश्यामि प्रजा अहम् इति प्रतिपद्य वर्हीमे भूयास्त इत्यन्तेन ॥ ५ ॥ अन्तराग्नी तिष्ठन् जपतीत्येकेषाम् ॥ ६ ॥ सँहितासि विश्वरूपीः इति वत्समभिमृश्य गार्हपत्यमुपतिष्ठते उप त्वाग्ने दिवेदिवे इत्येताभिः षड्भिः ॥ ७ ॥ ॥२॥

गोष्ठमुपतिष्ठते ऊर्जा वः पश्याम्यूर्जा मा पश्यत इति प्रतिपद्य मयि वो रायः श्रयन्ताम् इत्यन्तेन ॥ १ ॥ वत्समभिमृशतीत्येकेषाम् ॥ २ ॥ आहवनीयमुपतिष्ठते तत् सवितुर्वरेण्यम् इति प्रतिपद्य भेत्तारं भङ्गुरावतः इत्यन्तेन ॥ ३ ॥ गार्हपत्यमुपतिष्ठते अग्ने गृहपते इति प्रतिपद्य शतँ हिमाः इत्यन्तेन ॥ ४ ॥ पुत्रस्य नाम गृह्णाति ॥ ५ ॥ व्याख्यातो जातपुत्रकल्पश्चाजातपुत्रकल्पश्च[1] ॥ ६ ॥ तत आह अच्छिन्नो दैव्यस्तन्तुर्मा मनुष्यश्छेदि । दिव्याद्धाम्नो मा छित्सि मा मानुषात् इति ॥ ७ ॥ अग्नीनुपसमिध्य ज्योतिषे तन्तवे त्वा इत्यन्तराग्नी उपविशति ॥ ८ ॥ एवमेव सायमग्न्युपस्थानेनोपविष्ठते ॥ ९ ॥ प्रातरवनेकेन प्रातः ॥ १० ॥ अधिश्रित उन्नीयमाने वा हस्तावनेनिजीत या अवनेजनप्रवादा[2] ऋचः ॥ ११ ॥ अवशिष्टाभिराहवनीयमुपतिष्ठते ॥ १२ ॥ पुरस्तादग्नीषोमीयाया विहव्यस्य चतस्र उत्तरा ऋचो जपेदाग्नेयस्य च द्वे याज्यानुवाक्ये ॥ १३ ॥ व्याहृतीभिरग्न्युपस्थानमेके समामनन्ति ॥ १४ ॥ ॥३॥

भर्तुं वः शकेयम् इत्येके ॥ १ ॥ भर्तुं वः शकेयम् । श्रद्धा मे मा व्यगात् इत्येके ॥ २ ॥ वात्सप्रेणेत्येके ॥ ३ ॥ माहित्रेण तृचेनेत्येके

महि त्रीणामवोऽस्तु[3] द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥

न हि तेषाममा चन नाध्वसु वारणेष्वा[4] । ईशे रिपुरघशँसः ॥

ते हि[5] पुत्रासो अदितेश्छर्दिर्यच्छन्त्यजस्रम् । प्र दाशुषे वार्याणि ॥

इति ॥ ४ ॥ एवंविहितमेवास्य प्रवसतोऽग्न्युपस्थानं भवति ॥ ५ ॥ एतावन्नाना ।

1. Thus $B_3$; $A_1$,$B_2$ जातपुत्रकल्पश्च; $A_{2-3}$,$B_1$,R जातपुत्रकल्पः; see: BhārŚS IV.21,7,8.
2. Thus $B_1$; $A_1$ अवनेनिज्य°; $A_{2,3}$,$B_1$ अवनेनिज°; $A_{4-5}$ अवनेति°; $B_3$ अवनेदन°.
3. $A_{1-5}$ °मवो अस्तु
4. $A_1$ वारुणेष्ट्वा; $A_{2-5}$,$B_1$ वारुणेष्वा; $B_2$ वारणेष्ट्वा; $B_3$ वारणेष्वा
5. A,$B_{1,2}$ हि; $B_3$ न

यानि सँस्पर्श्य कर्माण्यध्वर्युस्तानि कुर्यात्[1] ॥ ६ ॥ यजमानः काले तां दिशमभिमुखो मन्त्रान् जपेत् ॥ ७ ॥ अग्नीन् समाधेहि इत्याह प्रवसथमेष्यन् ॥ ८ ॥ भास्वतो विराजक्रमैरुपतिष्ठते यथाग्न्याधेये ॥ ९ ॥ आहवनीये[2] समिधमादधाति मम नाम प्रथमं जातवेदः इत्येतया ॥ १० ॥ अन्तराग्नी तिष्ठन् जपति

इमान् मे मित्रावरुणा गृहान् गोपायतं युवम् ।
अविनष्टानविहुतान्[3] पूषैनानभिरक्षत्वास्माकं पुनरागमात् ॥

इति ॥ ११ ॥ ॥४॥

वाग्यतोऽभिप्रव्रजति[4]
मा प्र गाम पथो वयं मा यज्ञादिन्द्र सोमिनः ।
मान्तः स्थुर्नो[5] अरातयः ॥
उदस्याँ उत्तरान्नयाग्ने घृतेनाहुत ।
रायस्पोषेण सँसृज प्रजया च बहून् कृधि ॥

इति ॥ १ ॥ सकाशेऽग्नीनां वाचं यच्छत्यसकाशे विसृजते ॥ २ ॥ व्रतचारी प्रवसति ॥ ३ ॥ ऋतुं[6] प्रत्युपतिष्ठते ॥ ४ ॥ यद्यनुपस्थिताग्निः प्रवसेत् तत्रैव सन्नुपतिष्ठेत

इहैव सन् तत्र सतो वो अग्नयः प्राणेन वाचा मनसा बिभर्मि ।
तिरो मा सन्तमायुर्मा प्रहासीत् ।
ज्योतिषा वो वैश्वानरेणोपतिष्ठे ॥

इति ॥ ५ ॥ समिधः कृत्वाग्नीनभ्यैति

विश्वदानीमाभरन्तोऽनातुरेण मनसा ।
अग्ने मा ते प्रतिवेशा रिषाम ॥
नमस्ते अस्तु मीढुषे नमस्त उपसद्वने ।

---

1. [illegible]
2. Thus $B_{2,3}$; A,R omitted; in R sūtra 10 begins with यथाग्न्याधेये in sūtra 9.
3. $A_1$ °विहृतान्; $A_{2-3}$,$B_{1,3}$ °विहृतान्; $B_2$ °विभतान्
4. $B_1$ °तिप्रव्रजति
5. Thus $A_{4,5}$,$B_2$; $A_1$ स्थूर्णो; $A_2$ स्थुर्णो; $B_1$ स्थूणो; $B_3$ तामस्थूर्णो
6. Thus $B_2$; A,$B_3$ ऋतं; $B_1$ ऋतौ

अग्ने शुम्भस्व तन्वः सं मा रय्या सृज ॥

इति ॥ ६ ॥ असकाशेऽग्नीनां वाचं यच्छति[1] सकाशे विसृजते ॥ ७ ॥ अग्नीन् समाधेहि इत्याह प्रवसथादेत्य ॥ ८ ॥ भास्वतो विराजक्रमैरुपतिष्ठते[2] यथाग्न्याधेये ॥ ९ ॥ अजूगुपः इति मन्त्रं[3] संनमति ॥ १० ॥ ॥५॥

इमान् मे मित्रावरुणा गृहानजूगुपतं युवम् ।

अविनष्टानविहुतान्[4] पूषैनानभ्यरक्षीदास्माकं पुनरागमात् ॥

इति ॥ १ ॥ आहवनीये समिध आदधाति अग्नेः समिदसि इति तिस्रः ॥ २ ॥ आधायोपतिष्ठते मम नाम तव च जातवेदः इत्येताभिश्चतसृभिः ॥ ३ ॥ प्रोषुष[5] आहुतिं जुहोति मनो ज्योतिर्जुषताम् इत्येतया ॥ ४ ॥ नार्वाग् दशम्यै जुहुयात् ॥ ५ ॥ अथ यत्र नवावराण्या रात्रीरुषित्वा सगृहः प्रयायात् तत् सर्वं समवधाय सर्वाण्यन्यानि शकटानि युक्तानि भवन्ति ॥ ६ ॥ अथाग्निष्ठस्य दक्षिणो युक्तो भवति सव्योऽयुक्तः ॥ ७ ॥ अथ वास्तोष्पतीयं[6] जुहोति ॥ ८ ॥ वास्तोष्पते प्रति जानीह्यस्मान् इत्येतामनुद्रुत्योत्तरया जुहोति ॥ ९ ॥ न हुत[7] आदधाति ॥ १० ॥ अवक्षाणानि संप्रक्षाप्य पृथगरणीष्वग्नीन् समारोपयते यावन्तो नित्या धार्यन्ते अयं ते योनिर्ऋत्वियः इत्येकैकम् ॥ ११ ॥ अपि वा या ते अग्ने यज्ञिया तनूस्तयेह्यारोह इत्यात्मन् समारोपयते ॥ १२ ॥ मथिष्यन्[8] जपति उपावरोह जातवेदः इत्येताम् ॥ १३ ॥ यद्यनोवाहः[9] स्यात् पूर्वं तं[10] प्रवहेयुरथ वोद्धरेयुः[11] ॥ १४ ॥ यद्वीयेत[12] तत्र त्वेवानुहरेयुरिति विज्ञायते न त्वेवानुहरेयुरिति[11] विज्ञायते ॥ १५ ॥ ॥६[13]॥

अग्निहोत्रं[14] व्याख्यास्यामः ॥ १ ॥ उद्धराहवनीयम् इत्येव सायं यजमानः

1. Thus $B_{2,3}$; $A_{1,2}$,$B_1$ यच्छत; $A_{3-5}$ यच्छते
2. In R sūtra 9 ends here.
3. $B_{2,3}$ मन्त्रान्
4. A,B °विहृतान्
5. Thus B; $A_1$ प्रोश्य; $A_{2-5}$ पोषुषं; Rudradatta on ĀpSS VI.26.7 भारद्वाजश्चाह प्रोषित आहुतिं जुहोतीति ।
6. $A_1$ omitted; $B_1$ °ष्पतीया
7. $B_{2,3}$ आहुत; cf. TS III.4.10.4.
8. $A_1$ मंथिष्यं; $A_{2,3}$,$B_{1,3}$ मन्थिष्यन्; $A_{4,5}$,R मथिष्यन्; $B_2$ मंढिष्यं
9. Thus $B_2$; $B_3$ °वाहाह; $A_{2-5}$,R °वाहः
10. $B_{2,3}$ तत्
11. $A_1$ वोद्धरेयुरिति
12. $A_2$ यदीयेतैव; $B_1$ यद्धियेतद्धियतैव; $B_2$ यद्धियेत
13. $A_{2-5}$ ॥ ६ ॥ इति तृतीयः प्रश्नः; $B_2$ ॥ ६ ॥ इत्यग्न्युपस्थानं समाप्तम् । अथाग्निहोत्रम्
14. $A_{4,5}$ अथ अग्नि°; $B_2$ अथाग्निहोत्रम्

संप्रेष्यति। उद्धराहवनीयम् इति प्रातः ॥ २ ॥ धृष्टिरसि ब्रह्म यच्छ इत्युपवेषमादायाध्वर्युर्ब्रह्मचारी क्षीरहोता वा गार्हपत्यमभिमन्त्रयते सुगार्हपत्यः इत्येतया[1] ॥ ३ ॥ अथैनमुद्बोधयति

उद्बुध्यस्वाग्ने प्रति जागृह्येनमिष्टापूर्ते सँसृजेथामयं च।
अस्मिन् सधस्थे अध्युत्तरस्मिन् विश्वे देवा यजमानश्च सीदत ॥

इति ॥ ४ ॥ पुरा छायासंभेदाद् गार्हपत्याज्ज्वलन्तमाहवनीयमुद्धरति वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाध्वर्युणा मनसा ब्रह्मणा श्रोत्रेणाग्नीधैतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरामि इति ॥ ५ ॥ उद्ध्रियमाणे[2] यजमानो[3] जपति

भूर्भुवः सुवरोमुद्ध्रियमाण[4] उद्धर पाप्मनो मा यदविद्वान् यच्च विद्वाँश्चकार।
अह्ना यदेनः कृतमस्ति पापँ सर्वस्मान्मोद्धृतो मुञ्च तस्मात् ॥

इति सायम्।

रात्रिया यदेनः कृतमस्ति पापँ सर्वस्मान्मोद्धृतो मुञ्च तस्मात्।

इति प्रातः ॥ ६ ॥ आहवनीयायतनेऽग्निं[5] प्रतिष्ठापयति

अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै।
तयानन्तं[6] काममहं जयानि प्रजापतिर्यं प्रथमो जिगाय ॥ अग्निमग्नौ स्वाहा ॥

इति सायम्। सूर्यमग्नौ स्वाहा इति प्रातः ॥ ७ ॥ ॥८[7]॥

स्वयं यजमान एधानाहृत्याग्निषु महत इध्मानभ्यादधाति[8] यदग्ने यानि कानि च इत्येताभिः पञ्चभिः प्रतिमन्त्रम् ॥ १ ॥ आहवनीये वर्षिष्ठम् ॥ २ ॥ नित्यो गार्हपत्यो[9] धार्यते[10] ॥ ३ ॥ सायं प्रातराहवनीयमुद्धरेयुः ॥ ४ ॥ अपि वा सायमुद्धृत एव स्यादा प्रातरग्निहोत्रात्[11] ॥ ५ ॥ नित्यो गतश्रिय आहवनीयो

---

1. $B_{2,3}$ इति
2. Thus $B_{2,3}$; $A_3$,$B_1$ उध्रियमाणो; $A_{2-5}$ उध्रीय°
3. $A_{4,5}$ यजमाने
4. Thus $B_2$; $A_1$,$B_1$ °मुध्रियमाणात; $A_{2-5}$ °मुध्रीय°
5. $A_1$,$B_1$ आहवनीयायतनेस्यमृताहुति°; $B_2$ °यतनेष्वग्निं
6. $A_1$,$B_{1,2}$ तयाहं
7. $A_{1-5}$ ॥ ७ ॥ ॥ १ ॥
8. Rudradatta on ĀpSS VI.2.3: भारद्वाजोऽप्याह यजमान एधानाहृत्याग्निषु महत इध्मानादधातीति। Vāncheśvara (28a) on SatS (Praśna VI) cites इध्मानादधाति.
9. $B_3$ °र्ये
10. Emended; MSS धारयेत्
11. Rudradatta on ĀpSS VI.2.11 *cites this sūtra verbatim.*

धार्येते[1] ॥ ६ ॥ आयुष्कामस्य वा ॥ ७ ॥ अहरहरन्वाहार्यपचनमाहरेयुर्मन्थेयुर्वा[2] ॥ ८ ॥ नित्यो वा धार्येते[3] ॥ ९ ॥ नित्यौ सभ्यावसथ्यौ[4] ॥ १० ॥ अग्नीन् परिसमूहति । अग्ने सम्राट् शुन्धस्व इत्याहवनीयम् । अग्ने वहे शुन्धस्व इत्यन्वाहार्यपचनम् । अग्ने गृहपते शुन्धस्व इति गार्हपत्यम् ॥ ११ ॥ एवमेव हुत्वा परिसमूहति ॥ १२ ॥ अग्नीन् परिस्तृणाति । गार्हपत्यमग्रेऽथान्वाहार्यपचनमथाहवनीयम् ॥ १३ ॥ अग्निहोत्रपात्राणि[5] प्रक्षाल्य द्वन्द्वं प्रयुनक्त्युत्तरेण गार्हपत्यम् । खादिरँ स्रुवं वैकङ्कतीमग्निहोत्रहवणीमुपवेषमार्यकृतामग्निहोत्रस्थालीमूर्ध्वकपालामचक्रवर्ताम्[6] ॥ १४ ॥ अस्तमित आदित्येऽभिधाय दक्षिणतोऽग्निहोत्र्या वत्समुपसृजति[7] ॥ १५ ॥ अथैनां प्राचीं वोदीचीं वावर्त्य स्थाल्या दोहनेन च दुहन्ति ॥ १६ ॥ न शूद्रो दुह्यादित्येकम् । काममेव न[8] शूद्रो[8] दुह्यादित्यपरम् ॥ १७ ॥ अग्निहोत्रं त्वेव न शूद्रो दुह्यात् । तद्धि पवित्रं नात्येतीति विज्ञायते ॥ १८ ॥ ॥८[9]॥

पूर्वौ दुह्याज्ज्येष्ठस्य ज्यैष्ठिनेयस्य यो वा पुरोधाकामो यो वा गतश्रीः स्यात् । अपरौ दुह्यात् कनिष्ठस्य कानिष्ठिनेयस्य यो वा बुभूषेद् यो वानुजावरः स्यात् ॥ १ ॥ पूर्वौ पूर्वे[10] दुह्याज्ज्येष्ठस्य ज्यैष्ठिनेयस्य । अपरौ पूर्वे[11] दुह्यात् कनिष्ठस्य कानिष्ठिनेयस्येत्येकेषाम् ॥ २ ॥ यथाकामी नित्ये[12] दोहनकल्पे ॥ ३ ॥ न संमृशति[13]

---

1. Emended; MSS धारयेत्; Rudradatta on ĀpŚS VI.2.12: सत्याषाढ भारद्वाजौ त्वाहतुः नित्यं गतश्रियो धार्येत आयुष्कामस्य वेति ।
2. $B_2$ °रेभेयु°
3. Emended; $A, B_{2,3}$ धारयेत्
4. Dhūrtasvāmin on ĀpŚS VI.2.12: नित्यधारणं सभ्यावसथ्ययोरिति भरद्वाजमतिः हिरण्यकेशिमतिश्च । Rudradatta on ĀpŚS VI.2.16: सत्याषाढभारद्वाजाभ्यां तु धार्येष्वेवानुक्रान्तौ यथा नित्यौ सभ्यावसथ्याविति । Dhūrtasvāmin on ĀpŚS XXIV.2.22: आपस्तम्बमते सर्वेषां धारणमेव भारद्वाजस्य हिरण्यकेशिनश्च ।
5. Rudradatta on ĀpŚS IX.10.1: सत्याषाढभारद्वाजौ तु परिस्तरणानन्तरमाहतुः अग्निहोत्रपात्राणि प्रयुनक्तीति । Mahādeva on SatŚ XV.3.13: वैखानसभारद्वाजौ तु परिस्तरणानन्तरमाहतुः अग्निहोत्रपात्राणि प्रयुनक्तीति ।
6. $A_{2-5}$ °कपालां चक्र°; $B_1$ °कपालामचक्रवर्त्ता; $B_2$ °कपालां चक्रवृत्तां
7. $B_3$ वत्समुपाव°
8. $B_2$ शूद्रो न
9. $A_{2-5}$ ॥ ८ ॥ ॥ २ ॥
10. $B_2$ पूर्वौ; $B_3$ पूर्वे
11. Thus $B_{2,3}$; A,R omitted
12. Thus $A, B_1$; $B_{2,3}$ नित्येन; R reads sūtra 3 and 4 as one sūtra: यथाकामी नित्येन दोहनकल्पेन संमृशति ।
13. $A_1$ संमृशति; $A_{4,5}$ संस्मृशति; $B_1$ समस्पृशति

॥ ४ ॥ दुग्ध्वाहरति ॥ ५ ॥ अपरेणाहवनीयं दक्षिणातिक्रम्योपविशति[1] यजमानो यजमानायतने। पत्नी पत्नीलोके ॥ ६ ॥ तदानीमस्तमित आदित्ये नक्षत्रं दृष्ट्वा प्रदोषे वा सायमग्निहोत्रं जुहोति ॥ ७ ॥ व्युष्टायामुषसि वा प्रातरग्निहोत्रम्। उपोदयमुदिते[2] समयाविषिते वा। यर्हि वाक् प्रवदेत् तर्हि होतव्यमित्येकेषाम्[3] ॥ ८ ॥ यदुदिते जुहोत्यग्निष्टोमं तेनावरुन्द्धे। यन्मध्यंदिन उक्थ्यं तेन। यदपराह्णे षोडशिनं तेन। यत् पूर्वरात्रे जुहोति पूर्वं[4] तेन रात्रिपर्यायमाप्नोति[5]। यन्मध्यरात्रे मध्यमं तेन। यदपररात्रे जघन्यं तेन रात्रिपर्यायमाप्नोतीति[6] विज्ञायते ॥ ९ ॥ स न मन्येत सर्वेष्वेतेषु कालेषु होतव्यमिति। आपदि हुतमित्येव प्रतीयात् ॥ १० ॥ अग्नीन् परिषिञ्चति। गार्हपत्यमग्रेऽथान्वाहार्यपचनमथाहवनीयम् ॥ ११ ॥ ॥९[7]॥

ऋतं त्वा सत्येन परिषिञ्चामि इति सायम्। सत्यं त्वर्तेन परिषिञ्चामि इति प्रातः ॥ १ ॥ अथैकेषाम्। ऋतसत्याभ्यां त्वा परिषिञ्चामि इति सायम्। सत्यर्ताभ्यां त्वा परिषिञ्चामि इति प्रातः ॥ २ ॥ एवमेव हुत्वा परिषिञ्चति ॥ ३ ॥ गार्हपत्यात् प्रक्रम्य संततां प्राचीमुदधारां स्रावयत्याहवनीयात् यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै नयामि[8] संतत्यै[8] त्वा यज्ञस्य इति ॥ ४ ॥ धृष्टिरसि ब्रह्म यच्छ इत्युपवेषमादाय गार्हपत्यादुदीचोऽङ्गारान् निरूहति भूतकृतः स्थापोढं जन्यं भयम् इति ॥ ५ ॥ व्यन्तान्[9] कृत्वा तेष्वग्निहोत्रमधिश्रयति

इडायाः पदं घृतवचराचरं जातवेदो हविरिदं जुषस्व।
ये ग्राम्याः पशवो विश्वरूपास्तेषां सप्तानामिह रन्तिरस्तु॥

इति ॥ ६ ॥ अथैनं तृणेनाभिज्वलयन्नवेक्षते उद्रथः स्योदहं प्रजया पशुभिरिन्द्रियेण भूयासम् इति ॥ ७ ॥ यदा समुदन्तं भवत्यग्नरधिश्रितं[10] वाथ[11] स्रुवेणाद्भिः प्रजनयति हरस्ते मा विनैषम् इति ॥ ८ ॥ अप्रतिषेक्यं स्यात् तेजस्कामस्य ब्रह्मवर्चस-

1. $B_{2,3}$ अतिक्रम्यो°
2. $B_{2,3}$ उपोदयादु°
3. $B_2$ °मित्येकेषामेकेषां; $B_{1,3}$ मित्येकेषाम् अथैकेषाम्
4. $B_{2,3}$ प्रथमं
5. $B_{2,3}$ °मवाप्नोति
6. $B_{2,3}$ °मवाप्नो°
7. $A_{3-5}$ ॥ ९ ॥ ३ ॥
8. Thus $A_{2-5}$; $A_1$,$B_1$ omitted; $B_{2,3}$ स्तृणामि संतत्यै
9. $B_3$ व्यक्तान्
10. $A_1$ °त्यग्नारथ°; $A_2$ °त्यधरधि°; $A_{4,5}$ °त्यनधि°; $B_1$ °त्यग्नारधि°; $B_2$ °त्यनधि°; $B_3$ °त्यमिरधि°
11. Thus $A_{2,3}$; $A_1$ वाथं; $A_{4,5}$ वाय; $B_1$ वाथा; $B_2$ पाथ; $B_3$ पाथ

कामस्याथाभिचरतस्तितीर्षमाणस्याथो यः कामयेत वीरो म आजायेतेति ॥ ९ ॥ तथैव तृणेनाभिज्वाल्य त्रिः पर्यग्नि करोति अन्तरितं रक्षोऽन्तरिता अरातयः इति ॥ १० ॥ श्रपयित्वा कर्षन्निवोदगुद्वासयति घर्मोऽसि रायस्पोषवनिरिद्योर्जं दृंह इति ॥ ११ ॥ सुभूतकृतः स्थ प्रत्यूढं जन्यं भयम् इति गार्हपत्येऽङ्गारानपिसृज्य सावित्रेण स्रुवमग्निहोत्रहवणीं चादाय गार्हपत्ये निष्टपति प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः इति ॥ १२ ॥ निष्टप्य संमृशति अरिष्टो यजमानः पत्नी च इति ॥ १३ ॥ ॥१०[1]॥

यजमानमामन्त्रयते ओमुन्नेष्यामि हव्यं देवेभ्यः पाप्मनो यजमानम् इति सायम्। ओमुन्नयामि हव्यं देवेभ्यः पाप्मनो यजमानम् इति प्रातः ॥ १ ॥ हविर्देवानामसि मृत्योर्मेऽभयं स्वस्ति मेऽस्त्वभयं मेऽस्तु इत्युपांशूक्त्वा यजमानः ओमुन्नय हव्यं देवेभ्यः[2] पाप्मनो माम् इत्युच्चैः प्रतिगृणाति[3] ॥ २ ॥ यदि यजमानो नानुब्रूयात् स्वयमेवाध्वर्युः प्रतिगृणीयात्[4] ॥ ३ ॥ चतुरः स्रुवान् पूर्णानुन्नयत्यनूचो वा। अग्नये च त्वा पृथिव्यै चोन्नयामि इति प्रथमं स्रुवमुन्नयति। अद्भ्यश्च त्वौषधीभ्यश्चोन्नयामि इति द्वितीयम्। वाताय च त्वान्तरिक्षाय चोन्नयामि इति तृतीयम्। सूर्याय च त्वा दिवे चोन्नयामि इति चतुर्थम् ॥ ४ ॥ आ होतोर्न चाभिमीलयेत्[5] ॥ ५ ॥ हुत्वा महदभिवीक्षेत ॥ ६ ॥ उन्नीतमग्निहोत्रं दशहोत्राभिमृश्य स्रुवं च स्थालीं च संमृशति सजूर्देवैः सायंयावभिः सायंयावानो मा देवाः स्वस्ति संपारयन्तु इति सायम्। सजूर्देवैः प्रातर्यावभिः प्रातर्यावाणो मा देवाः स्वस्ति संपारयन्तु इति प्रातः ॥ ७ ॥ यत्रोन्नयेत् तत् सादयेत् प्रतरां वा पशून् मे यच्छ इति ॥ ८ ॥ प्रादेशमात्रीं पालाशीं समिधमादाय[6] समयाग्निं गार्हपत्यस्याहरति ॥ ९ ॥ उद्द्रवन् दशहोतारं व्याचष्टे ॥ १० ॥ ॥११[7]॥

उपरीव हरति उर्वन्तरिक्षं वीहि इति ॥ १ ॥ स्वाहाग्नये वैश्वानराय इति मध्यदेशे नियच्छति ॥ २ ॥ वाताय त्वा इत्युदगृह्यापरेणाहवनीयं बर्हिष्युपसादयति आयुर्मे यच्छ इति ॥ ३ ॥ मध्येऽग्नेः समिधमादधाति एषा ते अग्ने समित् तया वर्धस्व

1. $A_{2-3}$ ॥ १० ॥ ॥ ४ ॥
2. $B_2$ देवेभ्योन्यः
3. Thus $A_{2-3}$; $A_1$,B °गृह्णाति
4. Thus $A_{2-3}$; $A_1$,B गृह्णीयात्
5. Thus $A_{2-3}$,$B_1$; $A_1$ होनार्धचा°; $B_2$ होनाचा°; $B_3$ होमाद्दोषा°
6. A °माधाय
7. ॥ ११ ॥ ॥ ५ ॥

चा च प्यायस्व। वर्धतां च ते यज्ञपतिरा च प्यायताँ[1] स्वाहा इति ॥ ४ ॥ आदीप्तायाँ समिधि[2] जुहोति अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा इति सायम्। सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा इति प्रातः ॥ ५ ॥ अपि वा अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहा इति सायम्। सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहा इति प्रातः ॥ ६ ॥ इषे त्वा इत्यवाचीनँ सायं लेपमवमार्ष्टि। ऊर्जे त्वा इत्यूर्ध्वं प्रातः ॥ ७ ॥ वर्चो मे यच्छ इत्युपसाद्य बर्हिषि लेपं निमार्ष्टि ओषधीभ्यस्त्वौषधीर्जिन्व इति ॥ ८ ॥ गार्हपत्यं प्रतीक्षते अग्ने गृहपते मा मा संताप्सीरात्मनामृतमधिपि प्रजा ज्योतिः इति ॥ ९ ॥ अतिहाय पूर्वामाहुतिं तूष्णीमुत्तराँ समिधि[3] जुहोति। प्रजापतये स्वाहा इति वा[4] ॥ १० ॥ बहु हुत्वा भूयो निमार्ष्टि[5] ॥ ११ ॥ ॥१२[6]॥

भूयो भक्षायावशिनष्टि ॥ १ ॥ रुद्र मृडानार्भव मृड धूर्त नमस्ते अस्तु मा मा हिँसीः इति त्रिः[7] स्रुचाग्निमतिमार्जयति ॥ २ ॥ उदगुद्दिशति ॥ ३ ॥ तथैव लेपमवमृज्य प्रजां मे यच्छ इत्युपसाद्य प्राचीनावीती दक्षिणतः स्थण्डिले लेपं निमार्ष्टि पितृभ्यस्त्वा पितॄन् जिन्व इति ॥ ४ ॥ अप उपस्पृश्य द्विरङ्गुल्या प्राश्नात्यशब्दं कुर्वन् पूषासि इति प्रथमम् ॥ ५ ॥ अप आचम्य गर्भेभ्यस्त्वा गर्भान् जिन्व इति द्वितीयम् ॥ ६[8] ॥ न दतो गमयति ॥ ७ ॥ बर्हिषोपयम्योदङ् पर्यावृत्य प्राचीनदण्डयोदीचीनदण्डया वा स्रुचाचामति आग्नेयं रेतः प्रजननं मे अस्तु इति सायम्। सौर्यँ रेतः प्रजननं मे अस्तु इति प्रातः ॥ ८ ॥ उपनिष्क्रम्याग्निहोत्रहवर्णीं मार्जयित्वा बर्हिषि लेपं निमार्ष्टि ॥ ९ ॥ अद्भिः स्रुचं पूरयित्वा प्राङ् निनयति सर्पेभ्यस्त्वा सर्पान् जिन्व इति प्रथमम्। सर्पान् पिपीलिकान्[9] जिन्व इति द्वितीयम्। सर्पेतरजनान् जिन्व इति तृतीयम् ॥ १० ॥ प्रदक्षिणमावर्तते ॥ ११ ॥ न बर्हिरनु-

---

1. A,B प्यायतां च
2. $B_2$ समिधं
3. $B_2$ समिधं
4. $A_{2-5}$ omitted
5. Thus B; $A_1$ भूयो निमार्ष्टि; $A_{2-5}$,R तुमार्ष्टि
6. $A_{1-5}$ ॥ १२ ॥ ॥ ६ ॥
7. Thus $B_1$; $A_1$ त्रि; $A_2$,$B_{2,3}$ omitted
8. R separates sūtras 4–6 differently: sūtra 4 ends with निमार्ष्टि and sūtra 5 with पूषासि इति. Mahādeva on SatS III.7 (p. 354): अत एव भरद्वाजः प्रथमं द्वितीयमित्याद्येव क्रियाया विशेषणमेवाह।
9. $A_1$ पिपीका; $A_{2,3}$ पिपीलिका; $A_{4,5}$ पीलिकान्; $B_2$ पिपीलिकां

प्रहरत्याहवनीये[1] ॥ १२ ॥ अग्निहोत्रहवणीं निष्टपति प्रत्युष्टँ रक्षः प्रत्युष्टा अरातयः इति ॥ १३ ॥ तस्याँ हस्तमवदधाति ॥ १४ ॥ हस्तं वा प्रताप्याग्निहोत्रहवण्योदगुदिशति सर्पसर्पिभ्यस्त्वा सर्पसर्पान् जिन्व इति ॥ १५ ॥　॥१३[2]॥

अद्भिः स्रुचं पूरयित्वापरेणाहवनीयं निनयति पृथिव्यां त्वाग्नौ वैश्वानरेऽमृतं जुहोमि स्वाहा इति ॥ १ ॥ एवमेवापरेण गार्हपत्यं निनयति ॥ २ ॥ पत्न्या अप्यञ्जलावानयति गृहेभ्यस्त्वा गृहान् जिन्व इति विग्राहं कनीयोऽग्रेऽथ भूयः ॥ ३ ॥ यदि पत्नी नाञ्जुयात् पृथिव्यामेव द्विर्निनयेत्[3] ॥ ४ ॥ एतस्मादेवाग्निहोत्रशेषाद्[4] द्विश्चतुर्वा स्रुवेण गार्हपत्ये जुहोति अग्ने गृहपते परिषद्य जुषस्व स्वाहा इति ॥ ५ ॥ अन्नपतेऽन्नस्य नो देहि इत्यन्वाहार्यपचने ॥ ६ ॥ नापरयोर्होमो विद्यत इत्यपरम् ॥ ७ ॥ हुत्वोपसमिन्द्धे दीदिहि दीदिदासि दीदाय इत्येकैकम् ॥ ८ ॥ व्याख्यातं परिसमूहनं परिषेचनमिति ॥ ९ ॥ द्वयोः पयसा पशुकामस्याग्निहोत्रं जुहुयात् ॥ १० ॥ पूर्वमधिश्रित्योत्तरमानयेत् ॥ ११ ॥ आज्येन जुहुयात् तेजस्कामस्य[5] पयसा पशुकामस्य ॥ १२ ॥ पयो नित्यवदेके समामनन्ति[6] ॥ १३ ॥ दध्नेन्द्रियकामस्य यवाग्वा ग्रामकामस्य तण्डुलैरोजस्कामस्य[7] माँसेन यशस्कामस्य सोमेन ब्रह्मवर्चसकामस्य ॥ १४ ॥ घृतेन ब्रह्मवर्चसकामो द्वादशरात्रं जुहुयात् ॥ १५ ॥ आज्येन जुह्वत[8] एष एव[9] कल्पः । एतावन्नाना । अपां[10] प्रत्यसनकाले[10] दर्भतरुणाभ्यां प्रत्यस्येत् ॥ १६ ॥ अथ यदि दध्ना[7] तण्डुलैः सोमेन वा जुहुयाद्[11] यदन्यदधि-

1. Mahādeva on SatS III.7 (p. 353) refers to sūtras 9, 9 and 12 : भरद्वाजेन तु बर्हिर्दीपयन्मेधुसत्वा बर्हिरिति है . . . . . . . . . .
R has transferred the wo· . . . . . .
2. $A_{2,3}$ ॥ १३ ॥ ॥ ७ ॥
3. Mahādeva on SatS III.7 (p.354) : अत एव भरद्वाजो द्विः पृथिव्यामिति । Cited verbatim by Vāñcheśvara (59a) on SatS.
4. $B_{2,3}$ एतस्मादेव शेषात्; Rudradatta on ApSS VI.13.1 : तमेतस्मादेवाग्निहोत्रशेषादित्येव भारद्वाजः । Mahādeva on SatS III.7 (p. 355) : शेषाज्जुहोतीति भरद्वाजः । Partially cited by Vāñcheśvara (59b) on SatS.
5. *Subodhinī* on BaudhSS III.4 : आज्येन तेजस्कामः संवत्सरं जुहुयाद् द्वादशाहं वेति आपस्तम्बसत्याषाढभारद्वाजाः ।
6. *Subodhinī* on BaudhSS III.4 cites this sūtra verbatim.
7-7. $A_2$ omitted
8. Thus $B_{1,3}$; $A_1$,$B_1$ जुहुत
9. $B_{2,3}$ omitted
10. $A_1$ अपामप्रत्यस्त°; $A_{2,3}$ अपामप्रत्यस्त°; $B_1$ अपां प्रत्यस्त°; $B_{2,3}$ अपां प्रत्यस्त°
11. $B_2$ जुहुयादाज्येन जुहुयाद्; $B_3$ आज्येन वा जुहुयाद्

श्रयणात् प्रतिषेचनादिति[1] सर्वं[2] तत्[3] क्रियते ॥ १७ ॥ एवंविहितमग्निहोत्रं यावज्जीवं जुहुयाद् यावज्जीवं[3] जुहुयात्[3] ॥ १८ ॥ ॥१४[4]॥

आग्रयणं[5] व्याख्यास्यामः ॥ १ ॥ व्रीहीणामग्रपाकस्य यजते ॥ २ ॥ सप्तदश सामिधेन्यो भवन्ति ॥ ३ ॥ आमावास्यं तन्त्रं भवति ॥ ४ ॥ तत्रैषोऽत्यन्तप्रदेशः । सर्वेष्विष्टिपशुबन्धेषु[6] दार्शपौर्णमासिका[7] धर्मा अनुयन्ति ॥ ५ ॥ श्रयेणापि निवर्तन्ते सिद्धया प्रतिषेधेन प्रत्याम्नायेनेति ॥ ६ ॥ तद् यत्र प्राकृतस्य यज्ञाङ्गस्य[8] स्थाने वैकृतमामनेत् तत् तस्य धर्मान् लभेत । यथा शरमयं बर्हिर्बर्हिषः श्यामाका व्रीहीणाँ स्थालीकपालस्य चरुः पुरोडाशस्येति ॥ ७ ॥ तत्र यथार्थमूहो भवति ॥ ८ ॥ सामान्याद् विकारः । यथैकदेवता आग्नेयस्य । द्विदेवतो बहुदेवत इत्यग्नीषोमीयस्यैन्द्राग्नस्य वा ॥ ९ ॥ अन्यत्र प्रकृतिदेवताभ्यः । यथैन्द्रः पुरोडाशः सौम्यश्चरुरिति ॥ १० ॥ स्वयमेव स्थानं प्राकृत्यः[9] प्रतीयुः ॥ ११ ॥ अथ यत्र प्राकृत्यै देवताया अन्यद्धविरामनेद्[10] यथा वैष्णवं पुरोडाशँ हविरेव स्वधर्मं[11] स्यात् ॥ १२ ॥ यदीष्ट्या यदि पशुना यदि सोमेन यजेतामावास्यायां वैव[12] पौर्णमास्यां वा यजेत ॥ १३ ॥ तत्र सिद्धं द्वे पर्वे ॥ १४ ॥ पूर्वस्यां पर्वं निधायोत्तरस्यामिष्ट्या यजेत ॥ १५ ॥ अथैकपर्वे सँस्थाप्य पर्वं सद्यस्कालमिष्टिं निर्वपति ॥ १६ ॥ समानतन्त्रे[13] वा ॥ १७ ॥ ॥१५[14]॥

विकृतिश्च[15] दर्शपूर्णमासौ च ॥ १ ॥ दर्शपूर्णमासयोर्विकृतेश्च संनिपाते दर्शपूर्णमासौ बलीयांसौ[16] ॥ २ ॥ यानि त्विष्टिपशुबन्धानां प्रत्यक्षश्रुताम्नातानि

1. Thus $B_{2,3}$; R परिषेचनादि; *Subodhini* on BaudhSS III.4 cites this sūtra verbatim.
2. $A_{2-5}$,R तत्सर्वं
3. $B_3$ omitted
4. $A_{2-5}$ ॥ १४ ॥ ॥ ८ ॥ चतुर्थः प्रश्नः
5. $A_{4,5}$ ॐ आग्र°
6. Thus MSS; R सर्वेष्टि°
7. $A_2$,$B_1$ दर्शपौ°; $B_{2,3}$ दर्शपूर्ण°; Mahādeva on SatS III.8 (p. 390): विकृताव-नियमो दर्शपूर्णमासाविति च भरद्वाजादिभिरभिधानात् ।
8. $B_{2,3}$ यज्ञाङ्ग
9. Thus $A_1$,$B_1$; $A_2$ प्राकृत्या; R प्राकृत्याः
10. $A_{2-5}$ °मन्येत
11. $A_{2-5}$ स्वयं धर्मं
12. $B_2$ वै; $B_3$ वा
13. Thus $A_{3-5}$,$B_1$; $A_1$,$B_{2,3}$ °तन्त्रो; $A_2$ °तन्त्रे; Mahādeva on SatS III.8 (p. 374): स्वसूत्रे भरद्वाजेन समानतन्त्रा वा विकृतिर्दर्शपूर्णमासौ चेति ।
14. $A_{2-5}$ ॥ १५ ॥ ॥ १ ॥
15. $B_2$ विकृति; $B_3$ विकृतिः
16. Rudradatta on ApSS VI.29.4 adds तत्र after संनिपाते while citing this sūtra.

तत्र बलीयांसि ॥ ३ ॥ अग्नेर्विंशतिदारुमिध्मं करोति ॥ ४ ॥ तन्त्रेपोऽत्यन्तप्रदेशः । सामिधेनीविवृद्धौ काष्ठानि विवर्धयेरन् प्रतिहसमानासु[1] यथाप्रकृति ॥ ५ ॥ समानमा पात्राणां प्रयोजनात् ॥ ६ ॥ त्रीणि शूर्पाणि[2] प्रयुनक्ति ॥ ७ ॥ त्रीण्युलूखलान्यधिवर्तयति द्वे[3] दृषदौ ॥ ८ ॥ समानमा शूर्पस्यादानात् ॥ ९ ॥ वेषाय वः इति शूर्पाण्यादत्ते ॥ १० ॥ समानमा निर्वपणात् ॥ ११ ॥ आग्नेयमष्टाकपालं पुराणानां निरुप्यैन्द्राग्नमेकादशकपालं नवानां निर्वपति ॥ १२ ॥ द्वादशकपालमाग्नेन्द्रं[4] वा ॥ १३ ॥ वैश्वदेवं चरुम् । पयसि शृतो भवति ॥ १४ ॥ सौम्यं श्यामाकं चरुं द्यावापृथिव्यमेककपालम् ॥ १५ ॥ अपि वा नवान्येव निर्वपेत् । नाग्नेयम्[5] ॥ १६ ॥ तन्त्रं[6] प्रत्यभिमर्शनमन्त्रो भवति ॥ १७ ॥ आग्रयणं निरुप्यैता आहुतीर्जुहोति शतायुधाय शतवीर्याय इति पञ्च ॥ १८ ॥ समानमा कृष्णाजिनास्तरणात्[7] ॥ १९ ॥ एकस्मिन्[8] कृष्णाजिने त्रीण्युलूखलान्यधिवर्तयति द्वे दृषदौ ॥ २० ॥ समानमावपनात् ॥ २१ ॥ सर्वाणि हवींष्योप्य[9] हविष्कृतमाह्वयति ॥ २२ ॥ सर्वाण्यवहत्य[10] दृषदुपले समाहन्ति ॥ २३ ॥ अनुपूर्वं सर्वाणि हवींष्युद्वपति निष्पुनाति[11] विविनक्ति ॥ २४ ॥ अपि वैकस्मिन्नेवोलूखले पूर्वापरमवहन्यात् ॥ २५ ॥ तत्रावपनप्रभृतयो विवेचनान्ता मन्त्रा बीजंबीजमभ्यावर्तेरन्[12] ॥ २६ ॥ ॥१६[13]॥

आदित एव हविष्कृतमाह्वयति ॥ १ ॥ सर्वाण्यवहत्य वाचं विसृजते

1. $A_1$ प्रतिसमानासु; $B_1$ प्रतिध्रिसमानाम; $B_2$ प्रतिह्रसमानासु
2. Thus $B_{2,3}$; $A,B_1$ त्रीणि; R शूर्पाणि त्रीणि; Rudradatta on ĀpŚS VI.29.15: भारद्वाजस्त्वाह त्रीणि शूर्पाणि प्रयुनक्ति त्रीण्युलूखलानि द्वे दृषदाविति ।
3. $A_{2-4}$,$B_1$,R द्वेद्वे
4. $A,B_1$ °कपालं चाग्नेन्द्रं; $B_2$ °कपालमाग्नेयं; $B_3$ °कपालं वाग्नेयं
5. $B_2$ नाग्नेयस्य; Vāñcheśvara (77b) on SatS: भारद्वाजस्तु स्वतन्त्राग्रयणेऽप्याग्नेयं नास्तीत्याह ।
6. Thus $B_{2,3}$; $A_1$ तत्र; $A_{2-5}$ तेन; $B_1$ तन्त्रम; Rudradatta on ĀpŚS VI.29.8: भारद्वाजस्तु स्वतन्त्राग्रयणेऽप्याह अपि वा नवान्येव निर्वपेन्नाग्नेयमिति । In R sūtra 17 ends with तन्त्रम.
7. Thus $A_{2-5}$; $A_1$ °जिनास्त°; $B_2$ कृष्णाजिनस्या°; $B_3$ कृष्णाजिनस्य स्तरणात्
8. Rudradatta on ĀpŚS VI.29.16: तथा चैकस्मिन् कृष्णाजिने त्रीण्युलूखलान्यधिवर्तयतीति प्रकृत्य भारद्वाजः etc.
9. $B_{2,3}$ हवींषि उप्य; Rudradatta on ĀpŚS VI.29.16 cites sūtras 23–25 verbatim except पावयति for निष्पुनाति.
10. $B_{2,3}$ °हत्य; Rudradatta on ĀpŚS VI.29.16 cites this sūtra verbatim.
11. $A_1$ विनिष्पुनाति; $A_{2-5}$ विनिष्पुनाति; $B_1$ विनिष्पुनाति; $B_2$ निष्पुनाति; $B_3$ निष्पुनाति
12. Thus $A_{2-5}$; $A_1$ बीजामभ्या°; $B_2$ बीजमभ्या°; $B_3$ बीजमन्वा°; Rudradatta on ĀpŚS VI.29.16 cites sūtras 26 and 27 verbatim.
13. $A_{2-5}$ ॥ १६ ॥ ३ ॥

॥ २ ॥ सर्वेषामन्ततस्तुषानुपवपति[1] ॥ ३ ॥ आ तन्त्रीभावादेकैकं[2] बीजमपवर्जयेत्[3] ॥ ४ ॥ अपि वा समानजातीयेनानुसमीयात्[4] ॥ ५ ॥ एष एवात[5] ऊर्ध्वं नानाबीजानां कल्पो भवति ॥ ६ ॥ समानमा हविषामुद्वासनात् ॥ ७ ॥ एककपालमुद्वास्याज्येनाभिपूरयति ॥ ८ ॥ तस्य वैश्वदेविकेनैककपालेन कल्पो व्याख्यातः ॥ ९ ॥ एतावन्नाना । नाविःपृष्ठं करोति न मासनामभिरभिजुहोति ॥ १० ॥ समानमा हविषां प्रदानात् ॥ ११ ॥ वैश्वदेवं हुतमनुमन्त्रयते विश्वेषां देवानामहं देवयज्यया प्राणैः सायुज्यं गमेयम् इति[6] ॥ १२ ॥ द्यावापृथिव्यं हुतमनुमन्त्रयते द्यावापृथिव्योरहं देवयज्यया भूमानं प्रतिष्ठां[7] गमेयम् इति ॥ १३ ॥ एवमेव सर्वान् वैश्वदेवान् द्यावापृथिव्यानित्यनुमन्त्रयते ॥ १४ ॥ समानमा प्राशनात् ॥ १५ ॥ भद्रान् नः श्रेयः समनैष्ट देवाः इति व्रीहीणां प्राश्नाति ॥ १६ ॥

अग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः ।
शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः ॥

इति श्यामाकानाम् ॥ १७ ॥ सर्वे मन्त्रेण प्राश्नीयुरित्येकम् । यजमान एव यजमानभागमित्यपरम् ॥ १८ ॥ ये प्रागेकाष्टकाया वत्सा जायन्ते तेषां प्रथमजं दक्षिणां ददाति ॥ १९ ॥ सिद्धमिष्टिः संतिष्ठते ॥ २० ॥ ॥१७[8]॥

अथ[9] यदि नानातन्त्रं श्यामाकं कुर्याच्छ्यामाकेषु पक्वेषु सौम्यं श्यामाकं चरुं निर्वपेत् ॥ १ ॥ तस्यैष एव कल्पः ॥ २ ॥ एतावन्नाना । वासो दक्षिणां ददाति ॥ ३ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ४ ॥ यवानामग्रपाकस्य यजते[10] ॥ ५ ॥ तेषां व्रीहिभिरेव कल्पो व्याख्यातः ॥ ६ ॥ एतावन्नाना ।

---

1. *Rudradatta on ĀpŚS VI.29.17 cites this sūtra verbatim.*
2. $B_3$ तन्त्रि°; Rudradatta on ĀpŚS VI.29.15 : तथाह भारद्वाजः आ तन्त्रिभावादेक बीजमपवर्जयेदिति ।
3. $B_2$ °वर्तयेत्
4. $B_1$ °येनानुसमयाद् ; $B_{2-3}$ °येनसमियाद्
5. $A_{2-3}$ एवा
6. Mahādeva on SatS V.2 (p.466) : किंच भरद्वाजेनोक्तमाग्रयणेष्टावेव वैश्वदेवचरौ विश्वेषां देवानां °प्राणैरित्यादि । *and further referring to sūtras 12–14 :* तस्मिन्नेककपाले द्यावापृथिव्योरित्यादि । ततः पुनराहाथो एवात ऊर्ध्वं वैश्वदेवपृथिव्याना-मनुमन्त्रयेदिति ।
7. $B_3$ महिमानं
8. $A_{2-3}$ ॥ १७ ॥ ॥ २ ॥
9. $A_{2-3}$ omitted
10. Mahādeva on SatS III.8 (p. 387) probably refers indirectly to the Āgrayana sacrifice of paddy and of barley when he says : शरद्वसन्त-योराग्रयणमिति...भरद्वाजेन ।

एतमु त्यं मधुना संयुतं यवँ सरस्वत्या अधिमनावचर्कृषुः ।
इन्द्र आसीत् सीरपतिः शतक्रतुः कीनाशा आसन् मरुतः सुदानवः ॥

इति यवानां[1] प्राश्नाति ॥ ७ ॥ य ऊर्ध्वमेकाष्टकाया वत्सा जायन्ते तेषां प्रथमजं दक्षिणां ददाति ॥ ८ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ९ ॥ नवैर्वामावास्यां पौर्णमासीं वा यजेत[2] ॥ १० ॥ नवैर्वाग्निहोत्रं जुहुयात् ॥ ११ ॥ अग्निहोत्रीं वा[3] नवानादयित्वा[4] तस्याः पयसा सायं प्रातर्जुहुयात् ॥ १२ ॥ अपि वा गार्हपत्ये चतुःशरावमोदनं पक्त्वाग्रयणदेवताभ्यः स्विष्टकृच्चतुर्थीभ्यां[5] हुत्वा ब्राह्मणान् भोजयेत् ॥ १३ ॥ हरितयवशमीधान्यशाकानामनिष्टेऽपि यथाकामी ॥ १४ ॥ दानप्रसवानि मूलपलाशकानि[6] ॥ १५ ॥ व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेता यवेभ्यः । यवैरिष्ट्वा यवैरेव यजेता व्रीहिभ्यः । अपि वा व्रीहिभिरेव यजेत ॥ १६ ॥ एवमेव सस्येसस्ये[7] यावज्जीवं यजते[8] यावज्जीवं[9] यजते[9] ॥ १७ ॥ ॥ १८[10] ॥

॥ इति[11] षष्ठः प्रश्नः[11] ॥

---

1. $A_{2-5}$ नवानां
2. Referring to sūtras 10-13 Rāmāgnicit on ĀpŚS VI.30.19 says: इति च यवाग्रयणस्य वैकल्पिकत्वं भारद्वाजेनोक्तम् ।
3. Thus $B_{2,3}$; $A, B_1$ वै
4. Thus $B_2$; $A_1$ नानादयित्वा; $A_{2-5}, B_1$ नाना°; $B_3$ नवादयित्वा
5. $A, B_3$ °र्थीभ्यां; $B_1$ °र्थभ्यो
6. Thus $A_{2-5}, B_1$; $A_1, B_{2,3}$ मूलफलशाकानि; Mahādeva on SatS III.8 (p. 387) refers to sūtras 14–15: हरितयवानां श्यामाकधान्यस्यादनकालानामनुग्रहस्तु (भारद्वाजादिभिः) एवोक्तः । Rāmāgnicit on ĀpŚS VI.31.7: भारद्वाजप्रभृतिस्तु एतेषु किंचिद्दत्त्वा भक्षयेदिति ।
7. $A_{2-5}$ सस्ये
8. Thus all MSS; [illegible] यजेत; Mahādeva on SatS III.8 (p. 387): तथा च भारद्वाजोऽप्याह यावज्जीवं यजेतेति । Further in the same context Mahādeva says: वैश्वानरेणाग्रयणेन भारद्वाजेन च शरदि व्रीहिभिर्वसन्ते यवैर्वर्षासु श्यामाकैरिति कुल्याधान्यानामप्यत्रापि पाकदर्शनात् । As a matter of fact BharŚS has not directly mentioned the seasons.
9. $B_{1,3}$ omitted
10. $A_{2-5}$ ॥ १८ ॥ ॥ ४ ॥
11. $A_1$ omitted; $A_{2-5}$ पञ्चमः प्रश्नः; $B_1$ षष्ठः ॥ ६ खण्डः हरिः ॐ; $B_3$ adds समाप्तः; $B_2$ हरिः ओम् शुभं

## अथ सप्तमः प्रश्नः

पशुबन्धेन[1] यक्ष्यमाणः षड्ढोतारं मनसानुद्रुत्याहवनीये सग्रहं जुहोति ॥ १ ॥ स्रुवेण यूपाहुतिं जुहोति उरु विष्णो विक्रमस्व इत्येतया ॥ २ ॥ यत् स्थाल्यामाज्यं परिशिष्टं तच्च स्रुवं चाध्वर्युरादत्ते । यत् तक्षणशस्त्रं तत् तक्षा ॥ ३ ॥ यस्यां दिशि यूपमेक्षिष्यन्तो[2] भवन्ति तां दिशं यन्ति ॥ ४ ॥ त एते यूप्या वृक्षाः पलाशः[3] खदिरो रौहितक[4] इति ॥ ५ ॥ बैल्वं ब्रह्मवर्चसकामः कुर्वीत ॥ ६ ॥ स नित्यकामः[5] ॥ ७ ॥ अनक्षसङ्गं वृश्चेत् ॥ ८ ॥ यं कामयेताप्रतिष्ठितः स्यादि-त्यारोहं तस्मै वृश्चेत् । यं कामयेतापशुः स्यादित्यपर्णं तस्मै शुष्काग्रं वृश्चेत् । यं कामयेत पशुमान् स्यादिति बहुपर्णं तस्मै बहुशाखं वृश्चेत् । प्रतिष्ठितं वृश्चेत् प्रतिष्ठाकामस्येति विज्ञायते ॥ ९ ॥ यो दक्षिणावृत्त तं वृश्चेत् । य उदङ्ङावृत्त तम् । न घूर्णम् । य ऋजुरूर्ध्वशल्को यस्यर्जोः सत ईषदग्रमुपावनतं तं वृश्चेत् । यः प्राङ् वा प्रत्यङ् वोदङ् वोपावनतस्तम्[6] ॥ १० ॥ उपस्पृश्य जपति[7] अत्यन्या-नगाम् इति ॥ ११ ॥ स्रुवेणाज्यमादाय पर्यणक्ति देवस्त्वा सविता मध्वानक्तु इति ॥ १२ ॥ ओषधे त्रायस्वैनम् इत्योषधिमन्तर्दधाति ॥ १३ ॥ स्वधिते मैनँ हिँसीः इति परशुना हन्ति ॥ १४ ॥ यः प्रथमः शकलः परापतेत् तमपयम्य[8] जानुदघ्ने गुल्फदघ्ने वा वृश्चति ॥ १५ ॥ ॥१॥

अथैनं प्राञ्चं प्रवाहयत्युदञ्चं वा दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिँसीः इति ॥ १ ॥ वनस्पते शतवल्शो[9] वि रोह इत्याव्रश्चने जुहोति ॥ २ ॥ सहस्र-वल्शा[10] वि वयँ रुहेम इत्यात्मानं प्रत्यभिमृशति ॥ ३ ॥ अन्वग्रमद्गान्[11] कल्पयति यं त्वायँ स्वधितिस्तेतिजानः इति ॥ ४ ॥ एतेनैवाग्रतः परिवासयति ॥ ५ ॥ एका-

1. $A_{2-5}$ begin with ॐ
2. Thus $A,B_1$; $B_{2,3}$,R °क्षेश्यन्तो
3. $A_{2-5}$ पालाशः
4. Thus $B_3$; $B_2$ रोहितक
5. Thus $B_1$; $A,B_{2,3}$ नित्ये कामो
6. $A,B_1$ वोपनत°
7. Thus all MSS; R जपन्ति
8. Thus $B_3$; $B_1$ तमपयम्य; $B_2$,R तमुपयम्य
9. Thus $B_3$; $B_1$ °वल्शो; $B_2$ °वल्शो
10. $B_{1,2}$ °वल्शा
11. $A_1$ °मुद्रान्; $A_{4,5}$ °मद्रा; $B_3$ °मग्रान्; $B_2$ अग्रमग्रात्

रत्निप्रभृतीनि प्रमाणान्या त्रयस्त्रिँशदरत्नेर्भवन्ति[1] ॥ ६ ॥ त्र्यरत्निर्वैव चतुररत्निर्वा पालाशो निरूढपशुबन्धयूपोऽथेतरे सौम्यस्याध्वरस्येत्येकेषाम् ॥ ७ ॥ अथैनं नातिस्थूलं नात्यणुमग्रेऽणीयाँसमष्टाश्रिं करोति ॥ ८ ॥ मूलत उपरमतष्टं भवति ॥ ९ ॥ अग्रतश्चषालं[2] पृथमात्रमष्टाश्रि[3] मध्ये संनतम् ॥ १० ॥ यावदुत्तममङ्गुलिकाण्डं तावदूर्ध्वं चषालाद्यूपस्यातिरेचयति[4] । द्व्यङ्गुलमित्येकेषां त्र्यङ्गुलमित्येकेषाम् ॥ ११ ॥ अवतक्षणानाँ स्वरुं कृत्वाग्नावैष्णवमेकादशकपालं निर्वपति ॥ १२ ॥ सप्तदश सामिधेन्यो भवन्ति ॥ १३ ॥ सिद्धमिष्टिः संतिष्ठते ॥ १४ ॥ सैषाग्न्यन्वाधानस्य स्थानं प्रत्येति ॥ १५ ॥ न पश्चिष्टयामग्निं[5] गृह्णीयादित्यपरम् ॥ १६ ॥ तस्याँ सँस्थितायाँ[6] शालामाहृत्याग्रेणाहवनीयं वेदिं करोति ॥ १७ ॥ रथेषामात्री प्राची भवति युगमात्री पुरस्तादक्षमात्री पश्चात् ॥ १८ ॥ यत् प्रागुत्तरस्माद् परिग्राहाद् तत् कृत्वापरेण यूपावटदेशँ शम्ययोत्तरवेदिं परिमिमीते ॥ १९ ॥ ॥२॥

पुरस्तादुदीचीनकुम्बाँ शम्यां निधाय स्फ्येनाभ्यन्तरमुदीचीं लेखां लिखति वित्तायनी मेऽसि इति । एवं दक्षिणतः प्राचीम् तिक्तायनी मेऽसि इति । एवं पश्चादुदीचीम् अवतान्मा नाथितम् इति । एवमुत्तरतः प्राचीम् अवतान्मा व्यथितम् इति ॥ १ ॥ उत्तरस्माद्वेदँसादुदञ्चं प्रक्रमं प्रक्रम्य तथैव शम्यया तूष्णीं चात्वालं परिमिमीते ॥ २ ॥ सावित्रेणाभ्रिमादाय परिलिखति परिलिखितँ रक्षः परिलिखिता अरातयः इति ॥ ३ ॥ जानुदघ्नं खात्वा त्रिवितस्तं वा पुरीषँ हरति विदेरग्निः इति ॥ ४ ॥ उत्तरवेद्यां निवपति सिँहीरसि महिषीरसि इति ॥ ५ ॥ एवमेव द्वितीयँ हरत्येवं तृतीयम् । यो द्वितीयस्याम् इति द्वितीयँ हरति । यस्तृतीयस्याम् इति तृतीयम् ॥ ६ ॥ तूष्णीं चतुर्थं हृत्वा शम्यामात्रीं प्रथयति[7] उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम् इति ॥ ७ ॥ ध्रुवासि इति सँहत्याद्भिरवोक्षति[8] देवेभ्यः शुन्धस्व इति ॥ ८ ॥ यत्

1. Rudradatta on ĀpŚS VII.2.12: तत्रारत्निसंख्या यूपस्य सहोपरेणेति भारद्वाजसत्याषाढौ । SatS IV.1 (p. 359) refers to the length of the *yūpa* including the *upara*. BhārŚS does not mention this.
2. $A_{2-5}$ अग्रश्च°; *Subodhinī* on BaudhŚS IV.1 cites sūtras 8-11 verbatim. Subsequently it cites sūtra 9 again.
3. $B_2$ पृथ°
4. $B_3$ °तिरिक्तं
5. $B_1$ °मग्निं; Mahādeva on SatS IV 2 (p. 408) has cited this sūtra verbatim.
6. $A_1$,$B_1$ संस्थिता; $B_3$ संहितायां
7. Mahādeva on SatS IV.1 (p. 403): भारद्वाजेनाप्युक्तं शम्यामात्रीं प्रथयतीति ।
8. R सँहृत्या°

प्रोक्षणीनामुच्छिष्येत् तद्दक्षिणत उत्तरवेद्यामेकस्यां निःसार्योपनिनयेत् आपो रिप्रं निर्वहत इति ॥ ९ ॥ यं द्विष्यात् तं ध्यायेत् ॥ १० ॥ सिकताः प्रकिरति[1] देवेभ्यः शुम्भस्व इति ॥ ११ ॥ उत्तरवेद्या अन्तान् कल्पयति

विभ्राड् बृहत् पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविहुतम्[2] ।
वातजूतो यो अभिरक्षतु[3] त्मना प्रजाः पिपर्ति बहुधा विराजति ॥

इति ॥ १२ ॥ मध्य उत्तरवेदेः प्रादेशमात्रीं चतुःस्रक्तिमुत्तरनाभिं कृत्वा[4] ॥ १३-॥ ॥३॥

वेदिमुत्तरवेदिं च संमृशति

चतुःशिखण्डे युवती कनीने घृतप्रतीके भुवनस्य मध्ये ।
तयोर्देवा अधिसंवसन्त उत्तमे नाक इह मादयन्ताम् ॥

इति ॥ १ ॥ अथैनां प्रतिदिशं परिक्रामं[5] प्रोक्षति इन्द्रघोषस्त्वा वसुभिः पुरस्तात् पातु इत्येतैर्मन्त्रैर्यथारूपम्[6] ॥ २ ॥ त्वष्टा त्वा[7] रूपैरुपरिष्टात् पातु इत्युपरिष्टात् ॥ ३ ॥ यत् प्रोक्षणीनामुच्छिष्येतेति समानम् ॥ ४ ॥ पूर्वेद्युरग्निं प्रणयेदित्येकं प्रोक्षान्तां परिवसेदित्यपरम् ॥ ५ ॥ आहवनीय इध्ममादीप्य संप्रेष्यति अग्नये प्रणीयमानायानुब्रूहि इति ॥ ६ ॥ त्रिरनूक्तायां प्रथमायामिध्ममादाय सिकता उपयमनीः[8] कृत्वोद्यतहोमं जुहोति

यत् ते पावक चकृमा कच्चिदागः[9] पूर्वः सन्नपरो यद्भवासि ।
घृतेन त्वं तनुवो वर्धयस्व मा मा हिंसीरधिगतं पुरस्तात् स्वाहा ॥

इति ॥ ७ ॥ शेषे[10] हुत्वा प्राञ्चोऽभिप्रव्रजन्ति ॥ ८ ॥ उपर्यग्नौ धार्यमाणे पञ्चगृहीतेनाज्येन हिरण्यमन्तर्धायाक्ष्णयोत्तरवेदिं[11] व्याघारयति । सिंहीरसि सपत्नसाही

---

1. Thus $B_1$; $B_2$ प्रकिरंति
2. $A_1$ °विविहितं; $A_2$,B °हुतं
3. $B_3$ °रक्षति
4. *Subodhinī* on BaudhSS IV.2 cites sūtra 13 verbatim. Mahādeva on SatS IV.1 (p. 404): चतुरश्रामिति भरद्वाजादयः ।
5. Thus $A_1$,$B_{1,2}$; $A_{2-5}$,R परिक्रामन्
6. *Subodhinī* on BaudhSS IV.2–3 *cites sūtra 2 except the last word* verbatim.
7. Thus $B_3$; $A_1$,$B_{1,2}$ *omitted*
8. Mahādeva on SatS IV.2 (p. 405): सिकता उपयमनीः कृत्वेति भरद्वाजः ।
9. $B_{1,3}$ कच्चनागः ।
10. $B_1$ शेषेण
11. Thus all MSS; R omits अक्ष्णया.

स्वाहा इति दक्षिणेंऽसे। सिँहीरसि सुप्रजावनिः स्वाहा इत्युत्तरस्याँ श्रोण्याम्। सिँहीरसि रायस्पोषवनिः स्वाहा इत्युत्तरेंऽसे। सिँहीरस्यादित्यवनिः स्वाहा इति दक्षिणस्याँ श्रोण्याम्। सिँहीरस्यावह देवान् देवयते यजमानाय स्वाहा इति मध्ये ॥ ९ ॥ ॥४॥

भूतेभ्यस्त्वा इति स्रुचमुद्गृह्याभित उत्तरवेदिं पौतुद्रवान् परिधीन् परिदधाति[1]। विश्वायुरसि इति मध्यमम्[2]। ध्रुवक्षिदसि इति दक्षिणम्। अच्युतक्षिदसि इत्युत्तरम् ॥ १ ॥ नाभ्याँ संभारान् निवपति गुल्गुलु[3] सुगन्धितेजनँ श्वेतामूर्णास्तुकां या[4] पेत्वस्यान्तरा शृङ्गे श्वेतस्याच्छिन्नस्तुकस्य[5]। नाच्छिन्नस्तुकस्येत्येकेषाम्[5]। अग्नेर्भस्मासि। अग्नेः पुरीषमसि इति ॥ २ ॥ एतेनैवोत्तरत उपयमनीर्निवपति ॥ ३ ॥ यत्राभिजानाति सीद होतः स्व उ लोके इति तद् संभारेष्वग्निं प्रतिष्ठापयति

यज्ञ प्रतितिष्ठ सुमतौ सुशेवा आ त्वा वसूनि पुरुधा विशन्तु[6]।
'दीर्घमायुर्यजमानाय कृण्वन्नधामृतेन' जरितारमङ्धि ॥

इति ॥ ४ ॥ निधायोपसमिन्द्धे यज्ञः प्रत्यष्ठात् ॥ मनुष्वत् त्वा निधीमहि मनुष्वत् समिधीमहि। अग्ने मनुष्वदङ्गिरो देवान् देवायते यज इति ॥ ५ ॥ अत्र स्रुवया पूर्णाहुतिँ हुत्वातिमुक्तीर्जुहोति

अग्निर्यज्ञं नयतु प्रजानन् मैनं यज्ञहनो विदन्।
देवेभ्यो यज्ञं प्रभृतात् प्र यज्ञपतिं तिर स्वाहा ॥
वायुरादित्यो यज्ञो[7] यज्ञं नयतु प्रजानन् मैनं यज्ञहनो विदन्।
देवेभ्यो यज्ञं प्रभृतात् प्र यज्ञपतिं तिर स्वाहा ॥

इति ॥ ६ ॥ अत्र पूर्णाहुतिमेके समामनन्ति ॥ ७ ॥ ॥५॥

अत्र बर्हिरादि कर्म प्रतिपद्यते यदि पूर्वेद्युरग्निं प्रणयेत्। अथ यदि

---

1. *Subodhinī* on BaudhŚS IV.3: उत्तरवेदिं पौतुद्रवान् परिधीन् परिदधातीति तु भारद्वाजापस्तम्बसत्याषाढाः।
2. Thus all MSS; R मध्यं
3. $A_1$, $B_1$ गुल्गुलं; $A_2$ गुग्गु; $A_3$ गुग्गुल; $A_{4\text{-}5}$, $B_2$ गुग्गुल; $B_3$ गुग्गुल. *Subodhinī* on BaudhŚS IV.3: अथातिष्ठितान् संभारान्निवपति गुग्गुलु सुगन्धितेजनं शुक्लामूर्णास्तुकां या पेत्वस्यान्तरा शृङ्गे इति भारद्वाजः।
4. Thus $B_{2,3}$; $A_{1,3\text{-}5}$, $B_1$ यां; $A_2$ omitted
5. Thus $B_2$; $A_{1\text{-}3}$, $B_1$ तस्या°; $A_2$ तस्या; $A_{4,5}$ तस्यां छिन्न°; $B_3$ तेस्याछिन्नस्तुकस्याछिन्न°: Mahādeva on SatS IV.2 (p. 407): स्तुकामस्य छिन्नां छिन्नस्तुकस्येत्येकेषामिति भरद्वाजः।
6. $A_{2,3}$, $B_1$ वसंतु; $A_{4\text{-}5}$ विशंतु
7. $B_2$ °यथा°
8. Thus $A_1$, $B_1$; $A_{2\text{-}5}$, $B_2$, R omitted

प्रोक्षान्तां[1] परिवसेत् तदानीमेव बर्हिरादि कर्म प्रतिपद्यते ॥ १ ॥ इक्षुशलाके[2] विधृती आश्ववालं प्रस्तरं बर्हिष्युपसंनह्यति[3] ॥ २ ॥ कार्ष्मर्यमयान् परिधीनिध्मे[4] ॥ ३ ॥ त्रयोविँशतिदारुमिध्मं करोति ॥ ४ ॥ समानमा पात्राणां प्रयोजनात् ॥ ५ ॥ वसाहोमहवनीं द्वितीयां जुहूं प्रयुनक्ति पृषदाज्यधानीं द्वितीयामुपभृतं द्वे आज्यस्थाल्यौ कुम्भीं पशुश्रपणीं कार्ष्मर्यमय्यौ वपाश्रपण्यौ द्विशूलामेकशूलां च हृदयशूलँ स्वरुँ स्वधितिँ रशने प्लक्षशाखामौदुम्बरं मैत्रावरुणदण्डं येन चार्थो भवति[5] ॥ ६ ॥ तत्र य उपभृतो धर्मा ये च ध्रुवायाः पृषदाज्यधान्यामपि क्रियेरन् ॥ ७ ॥ ये सांनाय्य उखायाः पशुश्रपण्यां वपाश्रपण्योर्हृदयशूले प्लक्षशाखायामिति क्रियेरन् ॥ ८ ॥ स्रुवधर्माः स्वधितौ पयोधर्माः पशौ ॥ ९ ॥ न प्रणीताः प्रणयति[6] ॥ १० ॥ अग्नीन् परिस्तीर्य हस्ताववनिज्य पात्राणि प्रयुज्योलपराजी[7] स्तीर्त्वा पवित्रे कृत्वा संप्रेष्यति यजमान वाचं यच्छ इति ॥ ११ ॥ वाग्यतः पात्राणि संमृशति ॥ १२ ॥ प्रोक्षणीनामावृता[8] प्रोक्षणीः सँस्कृत्य ब्रह्माणमामन्त्र्य पात्राणि प्रोक्ष्य हविष्कृता वाचं विसृज्य तत उपरं परिग्राहं परिगृह्णाति ॥ १३ ॥ समानमा संप्रैषात्[9] ॥ १४ ॥ ॥६॥

स्रुवस्वधिती च स्रुचश्च संमृड्ढि पत्नीं संनह्याज्येन दध्ना चोदेहि इति संप्रैषान्तं नमति ॥ १ ॥ समानमाज्यनिर्वपणात्[10] ॥ २ ॥ आज्यं निरुप्य द्वितीयस्यामाज्यस्थाल्यां दधि निर्वपति ॥ ३ ॥ तस्याज्येनैव कल्पो व्याख्यातोऽन्यत्राधिश्रयणात् ॥ ४ ॥ समानमाज्यानां ग्रहणात् ॥ ५ ॥ चतुर्जुह्वां गृह्णाति चतुरुपभृति ॥ ६ ॥ पञ्चगृहीतं पृषदाज्यम् । आज्येन दधि सँसृज्य महीनां पयोऽसि इत्येतैर्मन्त्रैः ॥ ७ ॥ यथाप्रकृत्येव ध्रुवायां गृह्णाति ॥ ८ ॥ समानमा स्रुचाँ सादनात् ॥ ९ ॥ स्रुचः सादयित्वाग्रेण ध्रुवां वेदँ सादयित्वा सावित्रेणाश्रिमादायाग्रेणाहवनीयं यूपावटं

1. B₁,₃,R प्रोक्षान्ताः; cf. VII.4.5
2. Rudradatta on ĀpŚS VII.7.7: इक्षुशलाके इति भारद्वाजः ।
3. A B₁ °ष्युपनह्यति
4. Thus B₂,₃; A,R परिधीन्; B₁ परिधीन्...
5. Referring to sūtra 6 Rāmāgnicit on ĀpŚS VII.8.2 says: तदेतत्सर्वं भगवता भरद्वाजेनोक्तम् ।
6. Dhūrtasvāmin on ĀpŚS VII.28.3: तच्च वदं भरद्वाजेन न प्रणीताप्रणयनं पशुस्त्वृताभिरद्भिः पुरोडाशं श्रपयतीति ।
7. A₂-₃ omitted
8. B₃ omitted
9. A,B₁ प्रैषात्
10. A,B₁,₂,R °माज्यानां निर्वपणात्; B₃ °माज्यं निर्वापणात्

परिलिखत्यर्धमन्तर्वेद्यर्धं बहिर्वेदि परिलिखितँ रक्षः परिलिखिता अरातयः इति ॥ १० ॥ उपरसंमितं खात्वा यूपं प्रक्षालयति

यत् ते शिक्वः परावधीत् तक्षा हस्तेन वास्या[1] ।
आपस्तत् सर्वं जीवलाः पुनन्तु शुचयः शुचिम् ॥

इति ॥ ११ ॥ यवमतीभिः प्रोक्षणीभिर्यूपं प्रोक्षति । पृथिव्यै त्वा इति मूलम् । अन्तरिक्षाय त्वा इति मध्यम् । दिवे त्वा इत्यग्रम् ॥ १२ ॥ अवटे शेषमवनयति[2] शुन्धतां लोकः पितृषदनः इति ॥ १३ ॥ यवोऽसि यवयास्मद् द्वेषः इति यवं प्रास्यति ॥ १४ ॥ बर्हिरवस्तृणाति पितृणाँ[3] सदनमसि इति ॥ १५ ॥ स्वावेशोऽस्यग्रेगा नेतृणाम्[4] इति यूपशकलं प्रास्याभिजुहोति घृतेन द्यावापृथिवी आ पृणेथाँ स्वाहा इति ॥ १६ ॥ ॥७॥

ततः संप्रेष्यति यूपायाज्यमानायानुब्रूहि इति ॥ १ ॥ देवस्त्वा सविता मध्वानक्तु इति यूपस्याग्रमनक्ति ॥ २ ॥ ऐन्द्रमसि इति सर्वतश्चषालमक्त्वा[5] प्रतिमुञ्चति सुपिप्पलाभ्यस्त्वौषधीभ्यः इत्यमुतोऽर्वाक्[6] ॥ ३ ॥ यजमानो यूपशकलेनान्तमनक्ति सर्वतः परिमृशन्[7] ॥ ४ ॥ रशनायाः काले त्रिः परिमृशति ॥ ५ ॥ आञ्जनप्रभृति यूपं यजमानो नोत्सृजत्या परिव्ययणात् ॥ ६ ॥ ततः संप्रेष्यति उच्छ्रीयमाणायानुब्रूहि इति ॥ ७ ॥ उच्छ्रयति उद्दिवँ स्तभानान्तरिक्षं पृण इति ॥ ८ ॥ ते ते धामान्युश्मसी गमध्ये इत्यवटेऽवदधाति ॥ ९ ॥ अथैनं कल्पयति विष्णोः कर्माणि पश्यत इति द्वाभ्याम् ॥ १० ॥ अग्नेरर्धं प्रत्युपनतं यूपस्य कुर्याद्वहिष्टादभिनतम्[8] ॥ ११ ॥ अनाविरुपरं मिनोति ॥ १२ ॥ तं प्रत्यग्निमग्निष्ठां[9] मित्वा[10] प्रदक्षिणं पुरीषेण पर्यूहति ब्रह्मवनिं त्वा क्षत्रवनिम् इति ॥ १३ ॥ मैत्रावरुणदण्डेन परिदृँहति[11] ब्रह्म दृँह क्षत्रं दृँह इति ॥ १४ ॥ उत्तभ्नय पृथिवीम् इत्यपोऽनुपरिषिच्य इदं विष्णुर्वि चक्रमे इति सरशनेन

1. Thus $A_1$,B; $A_{2-3}$ वाश्या
2. Partially cited by Vāñcheśvara (15a) on SatS.
3. $A_1$,$B_{2-3}$,R पितृणाम्
4. Thus $A_{2-3}$,$B_1$; $A_1$,R नेतृणाम्
5. Thus $B_3$; $A_1$,$B_2$ °मत्का; $A_{2,3}$ °मंक्त्का; $A_{4,5}$ °मंक्का
6. $B_{2,3}$ °र्वाङ्; R divides this sūtra first after सर्वतः and then after °षधीभ्य इति।
7. A °मृशन्ना; $B_1$ °मृशनायाः; $B_3$ °मृशति
8. Thus $A_{2-3}$; $A_1$,$B_{1,3}$ °भिर्नतम्; $B_2$ °भिर्नितम्
9. $A_1$,$B_1$ प्रत्यग्निष्ठाम्; $A_{2,3}$,$B_3$ प्रत्यग्निष्ठां; $A_{4,5}$ प्रत्यग्निष्ठा; $B_2$ प्रत्यग्निष्ठमग्निष्ठाम्
10. A,$B_{1,3}$ मीत्वा
11. All MSS पर्यूहति

पाणिना[1] यूपमुन्मार्ष्टि ॥ १५ ॥ तद्विष्णोः परमं पदम् इति यूपस्याग्रमुदीक्षते ॥ १६ ॥ दर्भमय्यौ रशने भवतः। द्विगुणा द्विव्यायामा त्रिगुणा त्रिव्यायामा ॥ १७ ॥ ततः संप्रेष्यति ॥ १८ ॥ ॥८॥

परिवीयमाणायानुब्रूहि इति ॥ १ ॥ नाभिदघ्ने मध्यदेशे वा त्रिगुणया प्रदक्षिणं त्रिः परिव्ययति परिवीरसि परि त्वा दैवीर्विशो व्ययन्ताम् इति ॥ २ ॥ उत्तरमुत्तरं गुणमुत्तमं करोति ॥ ३ ॥ उपान्ते रशनां व्यतिषज्यान्तं प्रवेष्टयति ॥ ४ ॥ समावन्तौ कृत्वाणिमति स्वविमत् प्रव्रयति दिवः सूनुरसि इति ॥ ५ ॥ स्वरुमादाय मध्यमे रशनागुणेऽवगूहत्युत्तमे सर्वेषु वा अन्तरिक्षस्य त्वा सानावव गूहामि इति ॥ ६ ॥ अथैनं पशुं स्नापयन्ति[2] अनङ्गहीनमपन्नदन्तमजं लोहं तूपरं द्विरूपं पीवानम् ॥ ७ ॥ इषे त्वा इति बर्हिषी आदत्ते ॥ ८ ॥ उपवीरसि इति प्लक्षशाखाम्[3] ॥ ९ ॥ या बहुपर्णा बहुशाखा तयोपाकुर्यात् पशुकामस्य ॥ १० ॥ अग्रेण यूपं पुरस्तात्प्रत्यञ्चं शाखया[4] बर्हिर्भ्यां[4] पशुमुपाकरोति[5]। प्रजापतेर्जायमानाः इति द्वाभ्याम्। उपो देवान् दैवीर्विशः इति प्रतिपद्य रेवती रमध्वमिन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमि इत्यन्तेन ॥ ११ ॥ अग्नेर्जनित्रमसि इत्यधिमन्थनशकलं निदधाति। वृषणौ स्थः इति प्राञ्चौ दर्भौ ॥ १२ ॥ उर्वश्यसि इत्यधरारणिमादत्ते। पुरूरवाः इत्युत्तरारणिम् ॥ १३ ॥ घृतेनाक्ते वृषणं दधाथाम् इत्याज्यस्थाल्या बिलेऽनक्ति ॥ १४ ॥ आयुरसि इत्यरणी समवधाय संप्रेष्यति ॥ १५ ॥ ॥९॥

अग्नये मथ्यमानायानुब्रूहि इति ॥ १ ॥ त्रिरनूक्तायां प्रथमायां प्रदक्षिणं त्रिर्मन्थति गायत्रं छन्दोऽनु ॥ जायस्व इत्येतैर्मन्त्रैः ॥ २ ॥ जात आह जातायानुब्रूहि इति ॥ ३ ॥ प्रहरिष्यन् प्रह्रियमाणायानुब्रूहि इति ॥ ४ ॥ यत्राभिजानाति प्र देवं देववीतये इति तदग्रेणोत्तरं परिधिमनुप्रहरति संधिना वा[6] भवतं नः समनसौ इति ॥ ५ ॥ स्रुवेणाज्यमादायाभिजुहोति अग्नावग्निश्चरति प्रविष्टः इत्येतया ॥ ६ ॥ सावित्रेण रशनामादाय पशोः पाशेन दक्षिणमर्धशीर्षमभिदधाति ऋतस्य त्वा देवहविः पाशेना रभे

1. $B_2$ पाशेन पाणिना
2. Thus $B_{1,3}$; $A_1$ स्नापयति; $B_2$ स्नपयंति
3. $A_1$ शाखा; $A_{2-3}$,$B_1$ शाखां
4. Thus $A_{2,3}$; $A_1$ शाखाया बर्हिभ्यां; $A_{4,5}$ शाखाय बर्हिभ्यां; $B_1$ शाखाया बर्हिभ्यां; $B_2$ शाखाबर्हिभ्यां; $B_3$ शाखाबर्हिभ्यां
5. *Subodhini* on BaudhSS IV.5 : अग्रेण यूपं पुरस्तात् प्रत्यञ्चं शाखाबर्हिभ्यां पशुमुपाकरोतीति भारद्वाजः।
6. Thus $B_{2,3}$; $A$,$B_1$,R omitted

इति ॥ ७ ॥ अथैनं पुरस्तात्प्रत्यञ्चं यूपे नियुनक्ति धर्षा मानुषानिन्द्राग्निभ्यां त्वा जुष्टं नियुनज्मि इति ॥ ८ ॥ येऽर्वाचीनमेकादशिन्याः पशव आलभ्यन्ते तानुत्तरतो यूपस्य नियुनक्ति दक्षिणत एकादशिनान्[1] ॥ ९ ॥ अथैनमुपरिष्टात् प्रोक्षति अद्भ्यस्त्वौषधीभ्य इन्द्राग्निभ्यां त्वा जुष्टं प्रोक्षामि[2] इति ॥ १० ॥ पाययति अपां पेरुरसि इति ॥ ११ ॥ अधस्तादुपोक्षति स्वात्तं चित् सदेवँ हव्यमापो देवीः स्वदतैनम्[3] इति ॥ १२ ॥ ॥१०॥

ततः संप्रेष्यति अग्नये समिध्यमानायानुब्रूहि इति ॥ १ ॥ समानमा ध्रुवासमञ्जनात् ॥ २ ॥ पुरस्ताद् ध्रुवासमञ्जनात् पशुँ समनक्ति । सं ते प्राणो वायुना गच्छताम् इति शिरसि । सं यजत्रैरङ्गानि इत्यँसयोः । सं यज्ञपतिराशिषा इति श्रोण्योः ॥ ३ ॥ समानमा प्रवरात् ॥ ४ ॥ प्राकृतेन वरणेन होतारं वृत्वा पुनराश्राव्य मैत्रावरुणं प्रवृणीते मित्रावरुणौ प्रशास्तारौ प्रशास्तात् इति ॥ ५ ॥ समानमा प्रयाजेभ्यः ॥ ६ ॥ जुहूपभृतावादायात्याक्रम्याश्राव्याह समिद्भ्यः प्रेष्य इति ॥ ७ ॥ वषट्कृते जुहोति ॥ ८ ॥ आश्राव्याश्राव्य प्रेष्य प्रेष्य[4] इत्येवोत्तरेभ्यः संप्रेष्यति ॥ ९ ॥ चतुर्थेचतुर्थ औपभृतँ समानयते ॥ १० ॥ सर्वमष्टमे ॥ ११ ॥ दश प्रयाजानिष्ट्वैकादशायाज्यमवशिनष्टि ॥ १२ ॥ प्रत्याक्रम्य जुह्वा स्वरुस्वधिती अनक्ति । त्रिः स्वरुँ सकृत् स्वधितेरन्यतरां धाराम्[5] ॥ १३ ॥ ताभ्यां पशुँ समनक्ति घृतेनाक्तौ पशुं त्रायेथाम् इति ॥ १४ ॥ याक्ता धारा तया पशुँ समनक्ति ॥ १५ ॥ तयैव[6] हविषः शृतस्यावद्यतीतरया विशास्ति ॥ १६ ॥ याथाकामी[7] विशसन इत्यपरम् ॥ १७ ॥ ॥११॥

पुनः स्वरुमवगूहति ॥ १ ॥ शमित्रे स्वधितिं प्रयच्छन्नाह एषा तेऽग्निः प्रज्ञाताऽसत् इति ॥ २ ॥ ततः संप्रेष्यति पर्यग्नये क्रियमाणायानुब्रूहि इति ॥ ३ ॥ आह्वनीयादुल्मुकमादायाग्नीध्रः पर्यग्नि करोति पशुँ शामित्रदेशं चात्वालं यूपमाहवनीय-

1. B$_3$ ऐद्रा°
2. Rudradatta on ApŚS VII.13.10 cites अद्भ्य°...प्रोक्षामि as a quotation from Baudhāyana and Bhāradvāja.
3. *Subodhinī* on BaudhŚS IV.5 cites sūtras 10–12 verbatim except अधोपरिष्टात् for अथैनमुप°.
4. A,B$_1$ omitted
5. Thus B$_3$. A,B$_{1,2}$ omitted
6. Thus A$_1$,B$_{1,3}$; A$_{2-3}$,B$_2$ तथैव
7. Thus B$_3$; others यथा°

माज्यानीति[1] ॥ ४ ॥ पशुमेव पर्यग्नि करोतीत्येकेषाम्[2] ॥ ५ ॥ पर्यग्नौ क्रियमाणेऽपाव्यानि जुहोति प्रजानन्तः प्रति[3] गृह्णन्ति[3] पूर्वे इति पञ्च ॥ ६ ॥ त्रिः परीत्य निधायोल्मुकं त्रिः पुनः प्रतिपर्येति ॥ ७ ॥ यूपात् पशुं प्रमुच्य वपाश्रपणीभ्यामन्वारभेते[4] अध्वर्युर्यजमानश्च ॥ ८ ॥ अन्वारभ्याश्राव्य संप्रेष्यति उपप्रेष्य होतर्हव्या देवेभ्यः इति ॥ ९ ॥ यत्राभिजानाति प्रास्मा अग्निं भरत इति तदाहवनीयादुल्मुकमादायाग्नीध्रः पूर्वः प्रतिपद्यते ॥ १० ॥ अन्तरेण चात्वालोत्करावुदञ्चं पशुं नयन्ति रेवतीर्यज्ञपतिं प्रियधा विशत इति ॥ ११ ॥ नाना प्राणो यजमानस्य पशुना इत्यध्वर्युर्यजमानमभिमन्त्रयते ॥ १२ ॥ उत्तरत आग्नीध्र उल्मुकं निमृद्गाति[5] ॥ १३ ॥ स शामित्रो भवति ॥ १४ ॥ अपरस्माद्गार्हपत्यादाहरेन्निर्मन्थ्यं वा कुर्यात्[6] ॥ १५ ॥ याभ्यां[6] बर्हिर्भ्यां पशुमुपाकरोति तयोरन्यतरदाच्छ्यानार्थं निधाय[7] ॥ १६ ॥ ॥१२॥

दक्षिणेन शामित्रमन्यतरदुपास्यति समस्य तनुवा भव इति ॥ १ ॥ तस्मिन् पशुं प्रत्यञ्चमुदीचीनपादं संज्ञपयन्ति ॥ २ ॥ अमायुं कृण्वन्तं संज्ञपयत[8] इत्युक्त्वा पराङावर्ततेऽध्वर्युः पशोः संज्ञप्यमानात् ॥ ३ ॥ पृषदाज्यमवेक्षमाणावासाते[9] अध्वर्युर्यजमानश्च

इह प्रजा विश्वरूपा रमन्तामस्मिन् यज्ञे विश्वभृतो जनित्रीः ।
अग्निं कुलायमभिसंवसाना अस्माँ अवन्तु पयसा घृतेन ॥
यासामूधश्चतुर्बिलं मधोः पूर्णं घृतस्य च ।
ता नः पयस्वतीः सन्त्वस्मिन् गोष्ठे वयोवृधः ॥

इति ॥ ४ ॥ संज्ञप्ते संज्ञप्तहोमं[10] जुहोति यत् पशुर्मायुमकृत इति ॥ ५ ॥ पशोः पाशं

---

1. *Subodhinī* on BaudhŚS IV 5 : तथा च भारद्वाज आहवनीयादुल्मुकमादायाग्नीध्रः पर्यग्नि करोति पशुशामित्रदेशचात्वालयूपमाहवनीयं च त्रिः परिहरत्याज्यानि वेत्येकेषामिति ।
2. Rudradatta on ĀpŚS VII.15.2 cites this sūtra verbatim as a quotation from Baudhāyana and Bhāradvāja.
3. Thus $B_{2,3}$; A,$B_1$,R परि°
4. $A_1$,$B_{2,3}$ °रभते
5. Emended; $A_1$ निमुचाति; $A_{2,3}$,$B_1$ निमृचाति; $A_{4,5}$ निमृक्षाति; $B_2$ निमृदनाति; $B_3$ निर्मृद्गाति; *cf.* ĀpŚS VI.18.2; *Subodhinī* on BaudhŚS IV.6 cites sūtras 13-16 verbatim except निदधाति for निमृद्गाति.
6. Thus $B_1$; $A_1$ कुर्याद्भ्यां; $A_{2-5}$,R कुर्याद् द्वाभ्यां
7. $B_3$ निदध ति
8. Dhūrtasvāmin on ĀpŚS VII.16.5 : अमायुमेषादिः भरद्वाजमतात् ।
9. Thus $B_3$; $A_1$ °वसाते; $B_{1,2}$ °वासते
10. $A_1$,$B_{1,3}$ होमं; $B_2$ सप्तहोमं

प्रमुञ्चति[1] शमितार उपेतन इति ॥ ६ ॥ एकशूलया पाशं उपगृह्य चात्वालेऽपास्यत्युत्करे[2] वा अदितिः पाशं प्र मुमोक्तु इति ॥ ७ ॥ यद्यभिचरेद्द्वार्ह्नं स्तम्बं वाभिदध्यात् अरातीयन्तमधरं कृणोमि इति ॥ ८ ॥ पत्न्यादित्यमुपतिष्ठते नमस्त आतान इति ॥ ९ ॥ अथैनां प्राचीमुदानयति अनर्वा प्रेहि इति ॥ १० ॥ चात्वाले पत्न्यपोऽवमृशति आपो देवीः शुद्धायुवः इति ॥ ११ ॥ ॥१३॥

समुत्क्रम्य सहपत्नीकाश्चात्वाले[3] मार्जयन्ते शुद्धा वयं परिविष्टाः परिवेष्टारो वो भूयास्म इति ॥ १ ॥ पत्नी पशोः प्राणानाप्याययत्यध्वर्युरभिषिञ्चति ॥ २ ॥ अध्वर्युराप्याययति पत्न्यभिषिञ्चतीत्येकेषाम् ॥ ३ ॥ वाक् त आ प्यायताम्। प्राणस्त आ प्यायताम् इत्येतैर्मन्त्रैर्यथारूपम् ॥ ४ ॥ या ते प्राणाञ्छुग् जगाम इति ग्रीवासु निनयति[4] ॥ ५ ॥ यत् ते क्रूरं यदास्थितम् इति समस्तं[5] पशुमाप्याययति ॥ ६ ॥ नाभिस्त आ प्यायताम् इति नाभिम्। पायुस्त आ प्यायताम् इति पायुम्। शुद्धाश्चरित्राः इति पादान् ॥ ७ ॥ शमद्भ्यः शमोषधीभ्यः इत्यवशिष्टा[6] अनुपृष्ठं[6]. निनीय दक्षिणेन नाभिं प्रागग्रं बर्हिर्निदधाति ओषधे त्रायस्वैनम् इति ॥ ८ ॥ स्वधिते मैनं हिंसीः इति बर्हिषि स्वधितिना तिरश्चीनमाच्छ्यति ॥ ९ ॥ बर्हिषोऽग्रमपयम्य[7] स्थविमल्लोहितेनाक्त्वापास्यति[8] रक्षसां भागोऽसि इति ॥ १० ॥ अप उपस्पृश्य इषे त्वा इति वपामुत्खिदति ॥ ११ ॥ देवेभ्यः शुन्धस्व देवेभ्यः शुम्भस्व इति प्रयौति[9] ॥ १२ ॥ घृतेन द्यावापृथिवी प्रोर्णुवाथाम्[10] इति वपाश्रपणी प्रोर्णोति[11] ॥ १३ ॥ ऊर्जे त्वा इति तनिष्ठ एकशूलयोपतृणत्ति ॥ १४ ॥ अच्छिन्नो रायः सुवीरः ॥ इन्द्राग्निभ्यां त्वा जुष्टमुत्क्रन्ताभि इति परिवासयति ॥ १५ ॥ स्रुचिना शमिता वपोद्धरणमुपसंगृह्यास्त

1. $A_{2\text{-}3}$ प्रति°
2. Thus $B_{2,3}$; $A_1$ °पोद्धेग्यु°; $A_{2\text{-}3}$ °पोद्धरयु°; $B_1$ °पाद्यस्थ°
3. $B_{2,3}$ सपत्नीका°; Mahādeva on SatS IV.4 (p. 424): संभूय सेहसपयोः सकाशादुत्क्रम्य निर्गत्य चात्वालमागत्य मार्जयन्ते सपत्नीका इति भरद्वाजः।
4. Mahādeva on SatS IV.4 (p. 424): या त इति...ग्रीवास्विति भरद्वाजः।
5. $A, B_1$ समस्त; Mahādeva on SatS IV.4 (p. 424): यत्ते क्रूरमिति भिन्नमन्त्रेण प्रज्ञानीति भरद्वाजकात्यायनौ।
6. $A_2$ °ष्टान्; $A_{3\text{-}3}$ °ष्टमतिष्ठन्
7. $A_{2\text{-}3}$ प्र-यम्य; B प्रेयम्य
8. $A_1$ °नात्का;° $A_2$ °नात्का;° $B_1$ °नाक्ता;° $B_{2,3}$ °नाक्त्वा°
9. $A_1$ प्रयौति; $B_2$ प्रयौति; $B_3$ प्रतियौति
10. Thus $B_3$; $A_1$ प्रोर्णवाथाम्; $B_1$ प्रोर्णोथाम्; $B_2$ प्रोर्णोयाम्
11. *Subodhinī* on BaudhSS IV.6: भारद्वाजसूत्रमपि वर्तते द्यावापृथिवी प्रोर्णुवाथामिति वपाश्रपणी प्रोर्णोतीति।

आ वपाया होमात् ॥ १६ ॥ वपाश्रपणी पुनरन्वारभेते[1] अध्वर्युर्यजमानश्च ॥ १७ ॥ उर्वन्तरिक्षमन्विहि इत्यभिप्रव्रज्य ॥ १८ ॥ ॥१४॥

शामित्रे वपां प्रतितपति प्रत्युष्टं रक्षः प्रत्युष्टा अरातयः इति ॥ १ ॥ पुनरुल्मुकमादायाग्नीध्रः पूर्वः[2] प्रतिपद्यते ॥ २ ॥ एवमध्वर्युराहवनीयमभिप्रव्रजति ॥ ३ ॥ एवमन्तिमेऽङ्गारे वपां निरँसयति[3] ॥ ४ ॥ आहवनीय आग्नीध्र उल्मुकमपिसृजति ॥ ५ ॥ अन्तरेण चात्वालोत्करावन्तरेण यूपं चाहवनीयं च वपामत्याहृत्य दक्षिणत उदङ्ङासीनः प्रतिप्रस्थाताहवनीये वपाँ श्रपयति ॥ ६ ॥ अधस्ताद्वपाया बर्हिषोऽग्रमपास्यति[4] वायो वीहि स्तोकानाम् इति ॥ ७ ॥ स्रुवेणाज्यमादायाभिजुहोति त्वामु ते दधिरे हव्यवाहम् इति ॥ ८ ॥ अभिजुह्वत्[5] संप्रेष्यति स्तोकेभ्योऽनुब्रूहि इति ॥ ९ ॥ यदा शृता[6] श्येनी[7] भवत्यथैनाँ सांनाय्यवदभिघार्य तथोद्वास्य[8] बर्हिषि प्लक्षशाखायामिति प्रतिष्ठापयति सुपिप्पला ओषधीः कृधि इति ॥ १० ॥ प्रयुता द्वेषाँसि इति वपाश्रपणीभ्यां प्रमुच्य घृतवतीम् इत्यभिज्ञायोत्तमाय प्रयाजायात्याक्रम्याश्राव्याह स्वाहाकृतीभ्यः प्रेष्य इति ॥ ११ ॥ वषट्कृते जुहोति ॥ १२ ॥ प्रत्याक्रम्य जुह्वा ध्रुवामभिघारयति यद्याज्यभागौ[9] करिष्यन् भवत्यथ पृषदाज्यमथ वपाम् । नोपभृतम् ॥ १३ ॥ तत आज्यभागाभ्यां प्रचरति यद्याज्यभागौ जुहोति ॥ १४ ॥ ततः पूर्वं परिवप्यं जुहोति स्वाहा देवेभ्यः इति ॥ १५ ॥ ततः संप्रेष्यति ॥ १६ ॥ ॥१५॥

---

1. $B_3$ °रभेते; Mahādeva on SatS IV.4 (p. 426): अरत्नीवेनोर्ध्वं यजमानोऽन्वारभत इति ।
2. $B_{2,3}$ पूर्वं
3. [illegible]
4. [illegible]
5. Thus $B_2$; $A$,$B_1$,R °जुह्वन्; $B_3$ अभिजुहुयात्
6. $A_1$ सृतो; $A_2$ सृता; $B_1$ श्रिता; $B_2$ शृता; $B_3$ शृता
7. Thus $A_1$,$B_2$; $A_2$ श्यति; $A_{3,5}$,R श्येती; $B_1$ श्येतीव
8. $A_{2-5}$ तथं°; $B_3$ तदो°; Rudradatta on ĀpSS VII.20.4 and Mahādeva [illegible]

पार्य तथोद्वास्येति ।
9. $A$,$B_1$ यदाज्य°; *Subodhinī* on BaudhSS IV.7 cites sūtra 13 verbatim except यदाज्यभागौ for यद्याज्य°. R separates sūtras 13–15 differently and turns them into four.

इन्द्राग्निभ्यां छागस्य वपाया मेदसोऽनुब्रूहि इति ॥ १ ॥ जुह्वामुपस्तीर्य हिरण्यशकलमवधाय सर्वां वपामवद्यति ॥ २ ॥ उपरिष्टाद्धिरण्यशकलं निधायाभिघारयति ॥ ३ ॥ सा पञ्चावत्ता भवति ॥ ४ ॥ यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा भवति ॥ ५ ॥ यदि हिरण्यं न स्यादाज्यात् प्रत्यवद्येत्[1] ॥ ६ ॥ अत्याक्रम्याश्राव्याह इन्द्राग्निभ्यां छागस्य वपाया मेदसः प्रेष्य इति ॥ ७ ॥ वषट्कृते जुहोति जातवेदो वपया गच्छ देवान् इत्येतया ॥ ८ ॥ तत उत्तरं परिवप्यं जुहोति देवेभ्यः स्वाहा इति ॥ ९ ॥ वपाश्रपणी प्रहरति स्वाहोर्ध्वनभसं मारुतं गच्छतम् इति । प्राचीं द्विशूलां प्रतीचीमेकशूलाम् ॥ १० ॥ अथैने संस्रावेणाभिजुहोति[2] ॥ ११ ॥ पशोश्छिद्रमभिघारयति ॥ १२ ॥ सम्प्रुत्क्रम्य[3] सहपत्नीकाश्चात्वाले[4] मार्जयन्ते

इदमापः प्रवहतावद्यं च मलं च यत् ।
यच्चाभिदुद्रोहानृतं[5] यच्च शेपे अभीरुणम् ॥
निर्मा मुञ्चामि शपथान्निर्मा वरुणादुत ।
निर्मा यमस्य पड्वीशात् सर्वस्माद्देवकिल्बिषादथो मनुष्यकिल्बिषात् ॥
आपो मा तस्मादेनसो विश्वान्मुञ्चन्त्वंहसः ॥

इति ॥ १३ ॥ हुतायां वपायां वरं ददाति कन्यामलंकृतामनड्वाहं तिस्रो वा वत्सतरीः ॥ १४ ॥ ॥१६॥

पशुपुरोडाशस्य पात्राणि प्रक्षाल्य प्रयुनक्ति यान्यौपवकारितानि भवन्ति ॥ १ ॥ पवित्रे कृत्वा संप्रेष्यति यजमान वाचं यच्छ इति ॥ २ ॥ वाग्यतः पात्राणि संमृशति ॥ ३ ॥ व्रीहिमयं समानदेवतं पशुना पशुपुरोडाशमेकादशकपालं निर्वपति द्वादशकपालं वा ॥ ४ ॥ हविष्कृता वाचं विसृज्य पशुं विशास्ति ॥ ५ ॥ गुदं मा निर्लेपीः । वनिष्ठुं मा निर्लेपीः । अप्युद्धि क्लोमानं प्लीहानं पुरीततं मेदः समवधातवै इति संप्रेष्यति ॥ ६ ॥ कुम्भ्यां पशुं श्रपयन्ति ॥ ७ ॥ शूलेन हृदयं निहृत्य[6] यजुरुत्पूताभिरद्भिः पुरोडाशं श्रपयति[7] ॥ ८ ॥ स्तीर्ण एव बर्हिषि पिष्टलेपं निनयति

1. Rudradatta on ĀpŚS VII.20.9 cites this sūtra verbatim. Vañcheśvara (29a) on SatS reads नश्येत् for न स्यात्
2. B, संस्रावेण जुहोति
3. A, समुत्क्रम्य; R समुपक्रम्य; cf. VII.14.1; ĀpŚS VII.21.6
4. B₂,₃ सप°
5. B, यद्वाभि°
6. B, °निर्हृत्य
7. Rudradatta on ĀpŚS VII.22.3: भारद्वाजस्त्वाह यजुरुत्पूताभिः पिष्टानि श्रपयतीति । Dhūrtasvāmin on ĀpŚS VII.28.3 cites यजुरुत्पूताभिः etc.

॥ ९ ॥ भृते पशौ पुरोडाशेन[1] प्रचरति ॥ १० ॥ इन्द्राग्निभ्यां पुरोडाशस्यानुब्रूहि ॥ इन्द्राग्निभ्यां पुरोडाशस्य प्रेष्य इति संप्रेष्यति ॥ ११ ॥ अग्नयेऽनुब्रूहि ॥ अग्नये प्रेष्य इति स्विष्टकृतः ॥ १२ ॥ उपहूतामिडां मैत्रावरुणषष्ठा ऋत्विजः प्राश्नन्ति[2] ॥ १३ ॥ मार्जयन्ते ॥ १४ ॥ अत्र पशुपुरोडाशस्य पिष्टलेपफलीकरणहोमौ जुहोति[3] ॥ १५ ॥ कपालानि विमुञ्चति ॥ १६ ॥ जुह्वा पृषदाज्यस्योपहत्य त्रिः पृच्छति ॥ १७ ॥ ॥१७॥

शृतँ हवी३ः शमितः इति[4] ॥ १ ॥ शृतम् इति शमिता त्रिः प्रत्याह ॥ २ ॥ त्रिः प्रच्युते हृदयमुत्तमं करोति ॥ ३ ॥ उत्तरतः परीत्य पृषदाज्येन हृदयमभिघारयति सं ते मनसा मनः सं प्राणेन प्राणो जुष्टं देवेभ्यः । इन्द्राग्निभ्याँ हव्यं घृतवत् स्वाहा इति ॥ ४ ॥ स्वाहोष्मणोऽव्यथिष्यै इत्यूष्माणमुद्यन्तमभिमन्त्रयते ॥ ५ ॥ यदि पशुं विमथ्नीरन्नेवमेवाभिमन्त्रयेत्[5] ॥ ६ ॥ आज्येन पशुँ[6] सांनाय्यवदभिघार्य तथोद्वास्यान्तरेण चात्वालोत्करावन्तरेण यूपं चाहवनीयं च[7] पशुमत्याहृत्य[8] दक्षिणस्यां वेदिश्रोण्यां पशुश्रपण्यां सादयति ॥ ७ ॥ प्लक्षशाखोत्तरबर्हिर्भवति[9] ॥ ८ ॥ तस्या मध्यमङ्गानामवद्यति[10] ॥ ९ ॥ चतसृषूपस्तृणीते[11] जुहूपभृतोः समवत्तधान्यां पात्र्यां वसाहोमहवन्याँ[12] स्रुचि ॥ १० ॥ जुहूपभृतोर्हिरण्यशकलाववधाय संप्रेष्यति मनोतायै हविषोऽवदीयमानस्यानुब्रूहि इति ॥ ११ ॥ हृदयस्याग्रेऽवद्यति ।

1. R पशुपुरोडाशेन
2. *Subodhinī* on BaudhŚS IV.8 : उपहूतामिडां मैत्रावरुणषष्ठा ऋत्विजः प्राश्नन्तीति भारद्वाजः ।
3. *Subodhinī* on BaudhŚS IV.8 cites this sūtra verbatim. Rudradatta on ĀpŚS VII.23.2 : भारद्वाजसत्याषाढौ चाहतुः अत्र पुरोडाशस्य पिष्टलेपफलीकरणहोमौ जुहोति कपालविमोचनं चेति ।
4. Rudradatta on ĀpŚS VII.23.7 refers to sūtras 1-7.
5. Thus $B_1$; $A_1$ विमथ्नीरं°; $B_1$ has a lacuna; $B_2$ पशुमथ्नीर°
6. *Subodhinī* on BaudhŚS IV.8 refers to sūtras 4 and 7 when it cites भारद्वाजोऽप्याह पृषदाज्येन हृदयमभिघारयति आज्येन पशुमिति ।
7. $A_{2-5}$ omitted
8. $B_3$ °मभ्या°
9. $B_2$ °शाखोत्तरं
10. $B_2$ मध्यङ्गानामवद्यति; $B_3$ मध्याभ्यंगानामवद्यति; *Subodhinī* on BaudhŚS IV.8 : अत एवाह भारद्वाजः प्लक्षशाखोत्तरं बर्हिर्भवति तस्य मध्यंगानामवद्यतीति ।
11. $B_2$ °षु विस्तृ°; *Subodhinī* on BaudhŚS IV.8 cites sūtras VII.18.10 to 19.3 with the following modifications : शकलमवधाय for शकलाववधाय in sūtra 11; अथ यक्तः is omitted; वृक्ययोः for वृक्योः in sūtra 12; अङ्गानां for मुख्यानां in 19.1
12. In R sūtra 10 ends with वसाहोमहवन्याम्.

अथ जिह्वाया अथ वक्षसोऽथ सव्यस्य दोष्णोऽथ पार्श्वयोरथ यक्नोऽथ वृक्कयोरथ दक्षिणायाः श्रोणेरथ गुदस्य ॥ १२ ॥ द्विरेकैकस्यावद्यति[1] ॥ १३ ॥ ॥१८॥

अपि वा त्रयाणामेव मुख्यानामनुपूर्वमवदाय यथाकाममुत्तरेषामवद्यति ॥ १ ॥ यूपे मेदोऽवधाय[2] मेदसा जुहूं प्रोर्णोति ॥ २ ॥ उपरिष्टाद्धिरण्यशकलं निधायाभिघारयति ॥ ३ ॥ त्र्यङ्गाणि प्रत्यभिघार्योपभृति त्र्यङ्गाणां स्विष्टकृते सकृत्सकृदवद्यति[3] दक्षिणस्य दोष्णः सव्यायाः श्रोणेर्गुदकाण्डमिति ॥ ४ ॥ पुरस्तादेव गुदं द्वैधं कृत्वा स्थविमदुपयड्भ्यो[4] निदधाति ॥ ५ ॥ अणिमत् त्रैधं करोति ॥ ६ ॥ तस्य मध्यमं जुह्वां द्वैधं कृत्वावदधाति स्थविष्ठमुपभृत्यणिष्ठमिडायां[5] द्वैधं[6] कृत्वा ॥ ७ ॥ यूपे मेदोऽवधाय[7] मेदसोपभृतं प्रोर्णोति ॥ ८ ॥ उपरिष्टाद्धिरण्यशकलं निधाय द्विरभिघारयति ॥ ९ ॥ पात्र्यामिडाँ समवद्यति हृदयाज्जिह्वाया यक्नो वृक्कयोर्गुदाङ्गनिष्ठोः सप्तमात् ॥ १० ॥ अत्रैव दक्षिणाँ श्रोणिमध्युद्धिं क्लोमानं प्लीहानं पुरीततं मेद इत्यन्ववधाय यूष्णोपसिच्याभिघारयति ॥ ११ ॥ यूष्णो वसाहोमं गृह्णाति ॥ १२ ॥ स्वधितिना धारां प्रयौति ॥ १३ ॥ सकृच्चतुरवदानस्य द्विः पञ्चावदानस्य ॥ १४ ॥ अभिघार्य यानि चावत्तानि यानि चानवत्तानि शृतं चाशृतं च सर्वं पशुँ संनिधायाभिमृशति ऐन्द्रः प्राणो अङ्गेअङ्गे निदेध्यत् इति ॥ १५ ॥ ॥१९॥

पार्श्वेन वसाहोमं प्रयौति श्रीरस्यग्निस्त्वा श्रीणातु इति ॥ १ ॥ अथैनामेतेनैव पार्श्वेनापिदधाति[8] स्वाहोष्मणोऽव्यथिष्यै इति ॥ २ ॥ ततः संप्रेष्यति इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहि इति ॥ ३ ॥ अत्याक्रम्याश्राव्याह[9] इन्द्राग्निभ्यां छागस्य हविषः प्रेष्य इति ॥ ४ ॥ याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहोति घृतं घृतपावानः पिबत इति ॥ ५ ॥ हुत्वावशिनष्टि ॥ ६ ॥ वषट्कृते हविर्जुहोति ॥ ७ ॥ वसाहोमोद्रेकेण

1. A$_1$ द्विर्द्वि°; B$_{2,3}$ द्विर्द्वि°
2. A$_1$ °वदाय; B$_2$ °वधाय
3. Rudradatta on ĀpŚS VII.24.5 : तत्राह भारद्वाजः प्रत्यभिघार्य त्र्यङ्गाणि स्विष्टकृते सकृदिति । Vāñcheśvara (34a) on SatS : तथा च भारद्वाजः त्र्यङ्गाणि स्विष्टकृत् सकृत् सकृत् पञ्चावत्तिनस्तु त्रिस्त्रिर्देवेभ्यो द्विर्द्विः स्विष्टकृतेभ्य इति ।
4. A$_1$,B$_{1,2}$ °यड्भ्यो
5. B$_3$ स्थविमदुप°
6. In R sūtra 8 begins here.
7. A$_1$ °वदाय; B$_2$ °वधाय
8. B$_2$ °नाभि°
9. A,B$_1$ omitted

दिशः प्रतियजति दिशः स्वाहा ॥ प्रदिशः[1] स्वाहा[1] इत्येतैः प्रतिदिशम् ॥ ८ ॥ स्वाहा दिग्भ्यो नमो दिग्भ्यः इति प्राचीनमन्ततो जुहोति ॥ ९ ॥ अत्र नारिष्ठान् हुत्वा जुह्वा[2] पृषदाज्यस्य सकृदुपहत्याह वनस्पतयेऽनुब्रूहि इति ॥ १० ॥ अत्याक्रम्याश्राव्याह वनस्पतये प्रेष्य इति ॥ ११ ॥ वषट्कृते जुहोति ॥ १२ ॥ अपुनरतिक्रामन्[3] संप्रेष्यति अग्नये स्विष्टकृतेऽनुब्रूहि इति ॥ १३ ॥ जुह्वामुपभृतं पर्याहृत्याश्राव्याह अग्नये स्विष्टकृते प्रेष्य इति ॥ १४ ॥ वषट्कृते जुहोति[4] ॥ १५ ॥ प्रत्याक्रम्यायतने स्रुचौ सादयित्वा ॥ १६ ॥ ॥२०॥

मेदस्वतीं होत्रेऽवान्तरेडामादधाति ॥ १ ॥ मेदसोपस्तृणाति मेदसादधाति मेदसाभिघारयति ॥ २ ॥ उपहूतायामिडायामभ्युद्धि[5] होत्रे हरति[6] वनिष्ठुमग्नीधे ॥ ३ ॥ षडवत्तं संपादयति ॥ ४ ॥ प्राश्नन्ति मार्जयन्ते ॥ ५ ॥ ततः संप्रेष्यति । अग्नीदौपयजानङ्गारानाहर । उपयष्टरुपसीद । ब्रह्मन् प्रस्थास्यामः इति संप्रैषादिः ॥ ६ ॥ समानमानूयाजेभ्यः ॥ ७ ॥ जुहूपभृतावादाय पृषदाज्यं जुह्वां समानीयात्याक्रम्याश्राव्याह देवेभ्यः प्रेष्य इति ॥ ८ ॥ वषट्कृते जुहोति ॥ ९ ॥ आश्राव्याश्राव्य प्रेष्य प्रेष्य इत्येवोत्तरेभ्यः संप्रेष्यति[7] ॥ १० ॥ शामित्रादङ्गारानाहृत्याग्नीध्र उत्तरस्यां वेदिश्रोण्यां निवपति ॥ ११ ॥ प्रतिप्रस्थातैकादश गुदकाण्डानि तिर्यग् विकृत्तानि कृत्वा वसाहोमहवन्यां समवधायैकैकेनानूयाजानां[8] वषट्कारंवषट्कारमनूपयजति समुद्रं गच्छ स्वाहा इत्येतैः प्रतिमन्त्रम् ॥ १२ ॥ अद्भ्यस्त्वौषधीभ्यः इति प्रतिप्रस्थाता बर्हिषि लेपं निमार्ष्टि ॥ १३ ॥ मनो मे हार्दि यच्छ इत्यात्मानं प्रत्यभिमृशति ॥ १४ ॥ ॥२१॥

एकादशानूयाजानिष्ट्वा प्रत्याक्रम्य जुह्वां[9] स्वरुमक्त्वा[10] जुह्वा स्वरुं जुहोति

---

1. By conjucture; $A_1$,$B_{1,2}$,R प्रतिदिशः स्वाहा; $A_{2-5}$ omitted
2. $A_{2-5}$ omitted
3. Mahādeva on SatS IV.5 (p. 440): अग्नेव दक्षिणत एवकारो भरद्वाजोक्त उत्तरतोऽवस्थाननिवृत्त्यर्थः ।
4. $B_2$ जुहोत्याक्र°
5. $A_{2-5}$ उपहूतायामभ्युद्धि
6. $A_1$ हरंतु; $B_{1-3}$ हरंति
7. $A_{2-5}$ संप्रेष्य
8. $A_{2-5}$ °थैकेनानु°; *Subodhini* on BaudhŚS IV.9: उपयड्ढोमे तु वसाहोमहवन्यां समवधायेति भारद्वाजः ।
9. $A_2$ जुह्वो; $B_2$ omitted; R जुह्वा
10. $A_2$ स्वरुमक्त्वा; $A_2$ स्वरुमंक्त्वा; $A_{3-5}$ स्वरुमंक्त्वा; $B_1$ स्वरुमक्त्वा; $B_2$ omitted; $B_3$ त्रिः स्वरुमक्त्वा; *Rudradatta* on ĀpŚS VII.27.3: व्यक्तं चैतद्भारद्वाजीयादौ नित्यवदुभयत्राञ्जनवचनात् ।

यां ते धूमो गच्छत्यन्तरिक्षमर्चिः पृथिवीं भस्मना पृणस्व स्वाहा इति ॥ १ ॥ समानमा पत्नीसंयाजेभ्यः ॥ २ ॥ सर्वा जुहूपभृतो वाजवतीभ्यां व्यूहति ॥ ३ ॥ सर्वासु स्रुक्षु प्रस्तरमनक्ति[1] ॥ ४ ॥ सूक्तवाकाय सूक्ता प्रेष्य[2] इति संप्रेष्यति[2] ॥ ५ ॥ सर्वाः संप्रस्रावयति ॥ ६ ॥ सर्वाः[3] कस्तम्भ्यां सादयति ॥ ७ ॥ जाघन्या पत्नीः संयाजयति ॥ ८ ॥ आज्येन सोमं यजति । आज्येन त्वष्टारम् ॥ ९ ॥ उत्तानाया जाघन्या देवानां पत्नीभ्योऽवद्यति । नीच्या अग्नये गृहपतये ॥ १० ॥ चतुश्चतुर॰ वदानस्य पञ्चकृत्वः पञ्चावदानस्य ॥ ११ ॥ नात्रोपस्तरणाभिघारणानि भवन्ति[4] ॥ १२ ॥ उत्तानाया इडाँ समवद्यति नीच्या अग्नीधे ॥ १३ ॥ जाघनीशेषं पत्न्यध्वर्यवे ददाति ॥ १४ ॥ वाहुँ शमित्रे । तँ स ब्राह्मणाय ददाति यद्यब्राह्मणो भवति ॥ १५ ॥ समानमा समिष्टयजुषः ॥ १६ ॥ त्रीणि समिष्टयजूँषि जुहोति यज्ञ यज्ञं गच्छ ॥ एष ते यज्ञो यज्ञपते ॥ देवा गातुविदः इति ॥ १७ ॥ अन्तरेण[6] चात्वालोत्करौ ॥ १८ ॥ ॥२२॥

उपनिष्क्रम्य हृदयशूलेन चरन्ति ॥ १ ॥ शुष्कस्य चार्द्रस्य च संधौ हृदयशूलमुद्वासयति शुगसि तमभिशोच योऽस्मान् द्वेष्टि यं च वयं द्विष्मः इति ॥ २ ॥ धाम्नोधाम्नो राजन् ॥ उदुत्तमं वरुण पाशम् इत्येताभ्यामादित्यमुपस्थाय चात्वाले मार्जयन्ते सुमित्रा न आप ओषधयः सन्तु इति ॥ ३ ॥ समिधः कृत्वाप्रतीक्षमायन्ति ॥ ४ ॥ एधोऽस्येधिषीमहि इत्याहवनीये समिध आधायोपतिष्ठन्ते अपो अन्वचारिषम् इति ॥ ५[7] ॥ एवं पत्नी गार्हपत्येऽभ्याधायोपतिष्ठते ॥ ६ ॥ यूपं यजमान उपतिष्ठते आशासानः सुवीर्यम् इत्येतया ॥ ७ ॥ संतिष्ठते पशुबन्धः ॥ ८ ॥ एवमेव षड्ढु॰

---

1. Rudradatta on ĀpŚS VII.27.5 and Vāñcheśvara (37a) on SatS IV cite sūtras 3 and 4 verbatim.
2-2. Thus $B_{2,3}$; $A_1$ प्रेष्यति संप्रेष्यति; $A_{2-3}$,$B_1$,R प्रेष्यति
3. $A_1$ सर्वा; $A_{2-3}$,R सर्वा स्रुचः; $B_1$ सर्वा स्रुचं; $B_2$ सर्वा; Mahādeva on SatS IV.5 (p. 442): तथा चाह भारद्वाजः सर्वा जुहूपभृतो व्यूहति सर्वासु प्रस्तरमनक्तीति सर्वाः कस्तम्भ्यां सादयतीति। Rudradatta on ĀpŚS VII.27.9: तथा च भारद्वाजः सर्वाः स्रुचः कस्तम्भ्यां सादयतीति। Sūtras 6 and 7 cited verbatim by Vāñcheśvara (37a) on SatS IV.
4. Rudradatta on ĀpŚS VII.27.10 cites sūtras 11 and 12 verbatim except चतुःकृत्वः for चतुः; Vāñcheśvara (37a) on SatS IV has cited this sūtra verbatim; he has cited the preceding sūtra as: चतुरवदानस्य चतुःकृत्वे पंचावदानस्य पंचकृत्वो।
5. Thus $B_{2,3}$; A,$B_1$R omitted
6. $A_{2-3}$ अन्तरा
7. R reads sūtras 4 and 5 as one sūtra.

षट्सु[1] मासेषु संवत्सरेसंवत्सरे वा पशुना यजेत ॥ ९ ॥ नाहिताग्निः पशुनानीजानं संवत्सरोऽतीयात् ॥ १० ॥ यद्यतीयादमाँसखादः स्यात्[2] ॥ ११ ॥ अत्यशिता वा एतस्याग्नयो भवन्ति य[3] आहिताग्निः संवत्सरं पशुनानिष्ट्वा माँसं खादतीति विज्ञायते ॥ १२ ॥ स यदि भक्षयेदेतया भक्षयेत्

मनसाग्निभ्यः प्रहिणोमि भक्षं मम वाचा तैँ सह भक्षयन्तु ।
अप्रमाद्यन्नप्रमत्तश्चरामि शिवेन मनसा सह भक्षयत ॥

इति ॥ १३ ॥ यथादिष्टो भक्षयेदेतं मन्त्रमुक्त्वा भक्षयेदेतं मन्त्रमुक्त्वा भक्षयेत ॥ १४ ॥ ॥२३॥

॥ इति[4] सप्तमः प्रश्नः[4] ॥

---

1. Thus $B_3$; $A, B_{1,2}$, R षट्सु
2. $A_1$ यद्यतीयाद्मासखादस्यादमत्या°; $A_{2-5}$ यद्यतीयान्मासखादमत्य°; $B_1$ यद्यतीयमांसखादस्यादमत्य°; $B_2$ यतीयादमांसखादस्यदत्य°; $B_3$ यद्यतीयादमासंखादः स्यात्; R यद्यतीयान्माँस...
3. $A_{2-5}$ omitted
4. Thus $B_3$; $A_1$ omitted; $A_{2,3,5}$ षष्ठः प्रश्नः; $A_4$ इति षष्ठः प्रश्नः; $B_1$ श्रीः ॥ ७ ॥; $B_2$ हरिः ॐ शुभमस्तु

## अथ अष्टमः प्रश्नः

चातुर्मास्यैर्यक्ष्यमाणः[1] पञ्चहोतारं मनसानुद्रुत्याहवनीये सग्रहं जुहोति ॥ १ ॥ वैश्वानरं द्वादशकपालं निर्वपति पार्जन्यं चरुम् ॥ २ ॥ हिरण्यं वैश्वानरे ददाति । धेनुं पार्जन्ये ॥ ३ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ४ ॥ सैषान्वारम्भणीयायाः[2] स्थाने प्रत्येति ॥ ५ ॥ फाल्गुन्यां चैत्र्यां वा प्राचीनप्रवणे वैश्वदेवेन यजते ॥ ६ ॥ दर्शपूर्णमासीक[3] आहवनीयः स्यादित्येकम् । सौमिक इत्यपरम् ॥ ७ ॥ यदन्यदुत्तरवेद्या उपवपनात् सर्वं तत् क्रियते[4] ॥ ८ ॥ आमावास्यं तन्त्रं भवति ॥ ९ ॥ समानमा वत्सानामपाकरणात् ॥ १० ॥ आप्यायध्वमघ्निया विश्वेभ्यो देवेभ्यो भागम्[5] इति गाः प्रस्थापयति ॥ ११ ॥ समानमा बर्हिष आहरणात् ॥ १२ ॥ प्रसूमयं बर्हिर्भवति ॥ १३ ॥ तत् त्रेधा संनह्यैकधा पुनः संनह्यति ॥ १४ ॥ एवं त्रयोविंशतिदारुमिध्मं करोति ॥ १५ ॥ समानमा पात्राणां प्रयोजनात् ॥ १६ ॥ पृषदाज्यधानीं द्वितीयामुपभृतं प्रयुनक्ति द्वे आज्यस्थाल्यौ तिस्रश्चरुस्थालीः पालाशं वाजिनपात्रम् ॥ १७ ॥ समानमा निर्वपणात् ॥ १८ ॥ आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं सावित्रं द्वादशकपालं सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालमिति ॥ १९ ॥ समानमा फलीकरणात् ॥ २० ॥ फलीकृतानां तण्डुलानां विभागमन्त्रेण चरव्यानपोद्धरति ॥ २१ ॥ सहेतरान् पिनष्टि ॥ २२ ॥ संयुतानां पिष्टानां पौष्णमपोद्धरति[6] ॥ २३ ॥ ॥१॥

समानमा प्रातर्दोहात् ॥ १ ॥ तप्ते प्रातर्दोहे सायंदोहमानीय यदा[7] कृतामिक्षा भवत्यथैनां विस्राव्य विवाजिनां[8] कृत्वा द्वयोः पात्रयोरुद्धृत्य[9]

1. $A_{1-3}$ begin with ॐ; $B_1$ with श्रीः हरिः ॐ ॥; $B_2$ with अथ अष्टमः प्रश्न आरभ्यते; Vāñchesvara (1b) on SatS V: भारद्वाजोऽपि फलानुपबंधेनैव चातुर्मास्यैर्यक्ष्यमाणः पंचहोतारं मनसानुद्रुत्येत्युक्त्वा काम्यानि चातुर्मास्यानि व्याख्यास्याम इति स्थलांतरे माह।
2. Thus $B_{2,3}$; $A, B_1$, R आरंभणीया
3. $A_1, B_3$ दार्शपूर्णमासिक; $A_{2,4,5}$ दर्शपौर्णमासीक; $A_3, B_1$ दार्शपौर्णमासिक; $B_2$ दर्शपूर्णमासिक
4. Mahādeva on SatS V.1 (p. 449) omits तत् in the citation of this sūtra.
5. $B_2$ देवतागम्; $B_3$ देवमागम्
6. Rudradatta on ĀpSS VIII.2.4 cites sūtras 22 and 23 *verbatim*.
7. $B_2$ पदा
8. A वाजिनं; $B_1$ वाजिना
9. $B_{1,2}$ पात्रयोरुद्धृत्य; Mahādeva on SatS V.1 (p. 451): अत्रैवोद्धरणनिषेचनं भारद्वाजेनोक्तं and द्वयोरिति भारद्वाजपक्षे।

वाजिनस्यैकदेशेनोपसिच्य प्रज्ञातं वाजिनशेषं निदधाति ॥ २ ॥ अधिश्रित्य हवींष्याप्येभ्यो निनीय[1] तत[1] उत्तरं परिग्राहं परिगृह्णाति ॥ ३ ॥ समानमा संप्रैषात् ॥ ४ ॥ आज्येन दध्ना चोदेहि इति संप्रैषान्तं नमति ॥ ५ ॥ समानमाज्यानां ग्रहणात् ॥ ६ ॥ पाशुकान्याज्यानि गृह्णाति ॥ ७ ॥ एतावन्नाना ॥ ८ ॥ पृषदाज्यधान्यामौपभृतानां मन्त्राणां द्वाभ्यामाज्यं गृहीत्वा महीनां पयोऽसि इति द्विर्दधि गृह्णाति ॥ ९ ॥ औपभृतानामेकेनान्तत आज्यम् ॥ १० ॥ इति वै खलु यदि चैत्र्यां यजेत ॥ ११ ॥ अथ यदि फाल्गुन्याँ सँसृष्टमेव गृह्णीयाद्यथा पशुबन्धे ॥ १२ ॥ समानमा हविषामुद्वासनात् ॥ १३ ॥ एककपालमुद्वास्याज्येनाभिपूरयति ॥ १४ ॥ आविःपृष्ठं करोति ॥ १५ ॥ भूर्भुवः सुवः इति हवींष्यासादयति ॥ १६ ॥ उत्करे वाजिनम् ॥ १७ ॥ संवत्सरे पर्यागत एताभिरेवासादयेत् ॥ १८ ॥ आसाद्य हवींषि निर्मन्थ्यस्याहुत्वा निर्मन्थ्येन चरति ॥ १९ ॥ सप्तदश सामिधेन्यो भवन्ति ॥ २० ॥ समानमा प्रयाजेभ्यः ॥ २१ ॥ नव प्रयाजान् यजति ॥ २२ ॥ चतुर्थेचतुर्थ औपभृतँ समानयते सर्वमन्ततः[2] ॥ २३ ॥ उपभृतः स्थाने पृषदाज्यमभिघारयति ॥ २४ ॥ समानमा हविषां प्रदानात् ॥ २५ ॥ उपाँशु सावित्रैककपालाभ्यां प्रचरति ॥ २६ ॥ ॥२॥

पौष्णँ हुतमनुमन्त्रयते पूष्णोऽहं देवयज्यया पुष्टिमान् पशुमान् भूयासम् इति ॥ १ ॥ एवमेव सर्वान् पौष्णाननुमन्त्रयते ॥ २ ॥ आमिक्षया प्रचर्यैककपालं बर्हिषदं कृत्वा जुह्वामुपस्तीर्य सर्वमेककपालमवद्यति[3] ॥ ३ ॥ अत्रैवाज्यमनुपर्यासिच्याभिघार्य स्रुचा प्रतिष्ठितं जुहोति ॥ ४ ॥ यदि हुतः पर्यावर्तेत प्रत्यादायाभिघार्य पुनर्जुहुयात् ॥ ५ ॥ वरं दत्त्वा स्रुचा कल्पयति न पाणिनेत्येकेषाम् ॥ ६ ॥ अथैनं चतुर्भिर्मासनामभिरभिजुहोति मधवे स्वाहा ॥ माधवाय स्वाहा ॥ शुक्राय स्वाहा ॥ शुचये स्वाहा इति ॥ ७ ॥ संवत्सरीणां[4] स्वस्तिमाशासे इतीडाया आशीःषु यजमानो जपति ॥ ८ ॥ प्रथमजो वत्सो दक्षिणा ॥ ९ ॥ पृषदाज्येन नवानूयाजान् यजति[4] ॥ १० ॥ संवत्सरीणाँ स्वस्तिमाशास्ते दिव्यं[5] धामाशास्ते[5] इति सूक्तवाके होताशास्ते ॥ ११ ॥ प्रहृत्य परिधीन् संप्रेष्यति वाजिभ्योऽनुब्रूहि इति ॥ १२ ॥ जुह्वामुपस्तीर्य चमसे

1. Thus $B_{2,3}$; A निनीत; $B_1$ निनित
2. R joins सर्वमन्ततः to the next sūtra.
3. $A_{2-4}$ °मवद्य
4-4. Thus $B_{2,3}$; $B_2$ इतिडाया for इतीडाया; $B_3$ स्वस्तिमाशास्त; other MSS and R omit this. *But compare* VIII.10.10–13.
5-5. $B_2$ omitted

वा बर्हिषि विपिश्वन् वाजिनमानयति ॥ १३ ॥ अनभिघार्योत्पाक्रम्याश्राव्याह[1] वाजिनो यज[2] इति ॥ १४ ॥ वषट्कृते विपिच्यमानया[3] जुहोति ॥ १५ ॥ अनुवषट्कृते द्वितीयम् ॥ १६ ॥ ॥३[4]॥

ऊर्ध्वज्ञुरासीनो होता यजत्यनवानम्[5] ॥ १ ॥ वाजिनो हुत्वावशिनष्टि ॥ २ ॥ वाजिनोद्रेकेण दिशः प्रतियजति यथा पशुबन्धे ॥ ३ ॥ भक्षं तँ समुपहूय भक्षयन्ति होताग्रेऽथाध्वर्युरथ ब्रह्माथाग्नीध्रोऽथ[6] यजमानः ॥ ४ ॥ समशो वा विभज्य ॥ ५ ॥ सर्वे[7] एव मिथः कर्मनामभिः समुपह्वयेरन् ॥ ६ ॥ असावुपह्वयस्व इत्यामन्त्रणः । उपहूतः इति प्रतिवचनः ॥ ७ ॥

यन्मे रेतः प्रसिच्यते यन्म आजायते पुनः ।
यद्वा मे प्रतितिष्ठति तेन माममृतं कुरु तेन सुप्रजसं कुरु ॥

तस्य ते वाजिपीतस्योपहूतस्योपहूतो भक्षयामि इति ॥ ८ ॥ समानमा समिष्टयजुषः ॥ ९ ॥ पाशुकानि[8] समिष्टयजूंषि जुहोति ॥ १० ॥ सिद्धमिष्टिः संतिष्ठते ॥ ११ ॥ श्रेण्या शलल्या विनीय लौहेन क्षुरेणौदुम्बरेण श्मश्रूणि वापयित्वोपपक्षौ नि केशान् वर्तयते[9] ऋतमेव[10] परमेष्ठ्यृतं नात्येति किं चन इति ॥ १२ ॥ एवमेवोत्तरेणोत्तरेण मन्त्रेणोत्तरेषु पर्वसु निवर्तयते[10] ॥ १३ ॥ चतुरो मासान्[11] मांसमश्नाति न स्त्रियमुपैति नोपर्यास्ते जुगुप्सतेऽनृतात्[12] प्राङ् शेतेऽमध्वश्नाति ॥ १४ ॥ मध्वशनः स्यादित्येकम् ।

---

1. A,$B_1$ अभि°
2. R वाजिनोपयज
3. $A_1$ भिपिच्यमानाया; $A_{2-3}$ सिच्यमानया; $B_1$ भिपिच्यमानया; $B_2$ विपिच्यमानाया; $B_3$ विपिच्यमानायाँ
4. Thus all MSS.; R counts sections 3 and 4 as only one section, namely 3. Consequently in Praśna VIII R has 24 sections instead of 25.
5. $A_{1,2,3}$ °त्यनोवान्; $A_2$ त्यनोवान्, marginal correction अनवानं; $B_{2,3}$,R अनोदान्; See ĀśvŚS II.16; ĀpŚS VIII.3.9; SatS V.1
6. Rudradatta on ĀpŚS VIII.3.15 cites अग्नीद् for आग्नीध्रो. Sūtras 4-6 (beginning with होताग्रे) are cited by Vāñcheśvara (10a) on SatS V.1. Mahādeva on SatS V.1 (p. 454): शेषमिति भरद्वाजापस्तम्बौ ।
7. $A_{2-3}$ सर्वम्
8. $A_1$,$B_1$ पशुकानि; $B_2$ पाशुबन्धिकानि
9. $A_1$,$B_1$ वर्तेय; $B_3$ वपति
10. $A_{1-3}$ omitted
11. Thus $A_1$,$B_{2,3}$; $A_{2-3}$,$B_1$,R मासो न
12. Thus $B_{2,3}$; A,R जुगुप्सेता°; $B_1$ जुगुप्सिता°

व्यञ्जनार्थमित्यपरम् ॥ १५ ॥ ऋत्विये तु जायामुपेयादित्येकेषाम् ॥ १६ ॥ एवमेव सर्वेषु चातुर्मास्यान्तरालेषु व्रतं चरति ॥ १७ ॥ ॥४॥

ततश्चतुर्षु मासेषु वरुणप्रघासैर्यजते ॥ १ ॥ तेषां वैश्वदेवेन कल्पो व्याख्यातः ॥ २ ॥ विकाराननुक्रमिष्यामः ॥ ३ ॥ समानमा वत्सानामपाकरणात् ॥ ४ ॥ मारुत्या आमिक्षायै प्रतिप्रस्थाता वत्सानपाकरोति ॥ ५ ॥ वारुण्या अध्वर्युः ॥ ६ ॥ अग्रेणाहवनीयं द्वे वेदी कुरुतः । उत्तरामध्वर्युर्दक्षिणां प्रतिप्रस्थाता ॥ ७ ॥ समे[1] प्राची भवतः । पृथमात्रेण प्रादेशमात्रेण वासंभिन्ने[2] ॥ ८ ॥ यदेवाध्वर्युः करोति तत् प्रतिप्रस्थाता[1] करोति ॥ ९ ॥ अग्रेणापरेण वोत्तरां वेदिं प्रतिप्रस्थाता स्तम्बयजुर्हरति ॥ १० ॥ एतेनैवात ऊर्ध्वं[1] संचरते ॥ ११ ॥ समान उत्करो भवति समान आग्नीध्रः समानो होता समानो ब्रह्मा ॥ १२ ॥ तत्रैषोऽत्यन्तप्रदेशो यान्युत्तरस्यां कर्माण्यध्वर्युस्तानि कुर्याद्दक्षिणस्यां प्रतिप्रस्थाता ॥ १३ ॥ अथैने अनुसंभिनत्ति ॥ १४ ॥ दक्षिणायै वेदेरुत्तरस्याः श्रोणेरुपक्रम्य[3] स्कन्धेनोच्छ्रितस्योत्तरस्या दक्षिणादंसात्[4] ॥ १५ ॥ यत् प्रागुत्तरस्मात् परिग्राहात् तत् कृत्वोत्तरस्यां वेद्यामुत्तरवेदिमुपवपति न दक्षिणस्याम् ॥ १६ ॥ उभयत्र संभारनिवपनं भवति ॥ १७ ॥ ॥५॥

पूर्वेद्युरग्नी प्रणयत[5] इत्येकम् । अधिश्रित्य हवींषीत्यपरम् ॥ १ ॥ समानमा बर्हिष आहरणात्[6] ॥ २ ॥ द्वे बर्हिषी आहरतो[7] द्वाविध्मौ ॥ ३ ॥ समानमा पात्राणां प्रयोजनात् ॥ ४ ॥ उभौ पात्राणि प्रयुङ्क्तः[8] ॥ ५ ॥ शमीमय्यः स्रुचो भवन्ति हिरण्मय्यो वा दक्षिणस्य विहारस्य[9] ॥ ६ ॥ समानमा निर्वपणात् ॥ ७ ॥ आग्नेयमष्टाकपालमिति नित्यानि पञ्च संचराणि निरुप्यैन्द्राग्नमेकादशकपालं

---

1-1. A,B, omitted
2. R वा संभिन्ने
3. $A_2$ °रुपक्रमस्य; $B_3$ °रुपनिष्क्रम्य
4. $A_{1,3-5}$,B, दक्षिणांसात्; $A_2$ दक्षिणीसात्
5. $A_1$ प्रणयत्; $B_3$ प्रणयनम्
6. Thus $A_{2-5}$; $A_1$,B आभरणात्
7. $A_1$,B आभरतो
8. $A_{2-5}$ प्रयुक्तः
9. Rudradatta on ĀpŚS VIII.5.29: शमीमयानि दक्षिणविहारस्येदेव भारद्वाजः । Mahādeva on SatS V.2 (p. 461) cites this sūtra verbatim except दक्षिण° for दक्षिणस्य.

निर्वपति ॥ ८ ॥ तूष्णीं करम्भपात्रेभ्यो यवान् निरुप्य मन्त्रेण मेषप्रतिकृतिभ्यां[1] यवान् निर्वपतः ॥ ९ ॥ मरुद्भ्यः प्रतिप्रस्थाता वरुणायाध्वर्युः ॥ १० ॥ कायमेककपालं निर्वपति ॥ ११ ॥ समानमा पत्नीकरणात् ॥ १२ ॥ सर्वाँस्तुषानवभृथाय निदधाति ॥ १३ ॥ मन्त्रेण मेषप्रतिकृतिभ्यां[2] यवेभ्यो भर्जनार्थे कपाले उपधत्तः ॥ १४ ॥ तयोरीषदुपतप्ता धानाः कुरुतः ॥ १५ ॥ आतपन्तावधिश्रयणमन्त्रं[3] जपतः ॥ १६ ॥ उद्वपन्तावुद्वासनमन्त्रम् ॥ १७ ॥ भृष्टा[4] धाना अभिघार्योद्वासयतः ॥ १८ ॥ काल एवालंकुरुतः ॥ १९ ॥ यत्र क्व च हविष्यान् भर्जयेदेवमेव कुर्यात् ॥ २० ॥ पिष्टानामावृता धानाः पिँष्टः[5] ॥ २१ ॥ आमिक्षाया आवृतामिक्षे कुरुतः ॥ २२ ॥ वारुणनिष्कासं[6] प्रज्ञातं निदधाति ॥ २३ ॥ ॥६॥

ऐन्द्राग्नपर्यन्तानि हवींष्यधिश्रित्यामपेषाणां यवानामीषदुपतप्तानां वा प्रतिपूरुषं पत्नी[7] करम्भपात्राणि[8] करोति यावन्तो[9] यजमानस्य पुत्रपौत्रा[10] भवन्त्येकमतिरिक्तम् ॥ १ ॥ स्त्रीभ्योऽपि प्रतिकरोति ॥ २ ॥ मेषप्रतिकृती[11] कुरुतः ॥ ३ ॥ मेषमध्वर्युर्मेषीं प्रतिप्रस्थाता ॥ ४ ॥ स्त्रियाः स्त्रीव्यञ्जनानि कुरुते[12] पुंसः पुंव्यञ्जनानि ॥ ५ ॥ अथैनावनेडकीभिर्लोमशौ कुरुतः ॥ ६ ॥ यद्यनेडकीर्न[13] विन्देयातां कुशोर्णा एव निश्लेषयतः ॥ ७ ॥ कुम्भीपाक्यौ वा भवतः ॥ ८ ॥ कायमेककपालमधिश्रित्य हवींष्याप्येभ्यो निनीयाहवनीय इध्मावादीप्य संप्रेष्यति

1. $A_{2-5}$ मेषप्रकृतीभ्यां; Rudradatta on ĀpŚS VIII.5.38 : पठित एवायं क्रमो भारद्वाजीये द्रष्टव्यः। Mahādeva on SatS V.2 (p. 462) : मेषमेषीप्रतिकृतिभ्यां यवान्निर्वपतीति भरद्वाजः।
2. Thus $A_1$; $A_{2-5}$,$B_1$ मेषकृतिभ्यां; $B_2$ मेषप्रकृतीभ्यां; $B_3$ मेषप्रतिकृतीभ्यां
3. $B_1$ °मन्त्रान्
4. Thus $A_1$,$B_3$; $A_{2-5}$,$B_2$,R भ्रष्टा; $B_1$ ...षा
5. $A_{1-5}$ पिष्टा; $B_3$ omitted; R पिष्टे
6. $A_1$,$B_3$ वारुण्या°; $B_2$ निष्कासं
7. $A_{2-5}$ omitted
8. $A_1$,$B_1$ °पात्रा; Mahādeva on SatS V.2 (p. 463) : शमीकरीराणि करम्भस्तदाधारभूतानि पात्राणि यवानामेवापस्तम्बभारद्वाजोक्तेः।
9. Rudradatta on ĀpŚS VIII.5.41 : यावन्तो यजमानस्य पुत्रपौत्रा भवन्तीत्येव भारद्वाजः। Similarly Vāñcheśvara (17b) on SatS V.
10. $B_2$ पुत्रा
11. Thus $B_{1,3}$; $A_1$ °प्रतिकृति; $A_2$ °प्रकृति; $A_{3-5}$,$B_2$ °प्रकृती; Vāñcheśvara (20b) on SatS V : यथा च भारद्वाजः संसृष्टे च नानाद्रव्यत्वाद्वरुणप्रघासेषु मेषयोरिति।
12. $B_{1,3}$,R कुरुतः
13. Thus $A_1$; $A_{2,3}$ यद्येनेडिकीर्न; $A_{4,5}$ यद्यनेडकोर्न; $B_1$ यद्यनेडकि; $B_{2,3}$ यद्यनेडकीर्नं

अग्निभ्यां प्रणीयमानाभ्यामनुब्रूहि इति ॥ ९ ॥ ये के च साधारणाः संप्रैषा[1] अध्वर्युरेव तान् ब्रूयात् ॥ १० ॥ सहाग्नी[2] प्रणयतः सह प्रणीता हरतः ॥ ११ ॥ उत्तरस्मिन्नेवाग्नौ प्रणीता आसादयतः[3] ॥ १२ ॥ उत्तरस्मिन् व्रतं[4] विसृजते[5] ॥ १३ ॥ तत उत्तरौ परिग्राहौ परिगृह्णीतः ॥ १४ ॥ समानमा संप्रैषात् ॥ १५ ॥ यथाधिकरणं संप्रैषं नमति ॥ १६ ॥ समानमाज्यानां ग्रहणात् ॥ १७ ॥ ॥७॥

उभौ पाशुकान्याज्यानि गृह्णीतः ॥ १ ॥ एतावन्नाना । पृषदाज्यधान्योरौपभृतानां मन्त्राणामेकेनाज्यं गृहीत्वा महीनां पयोऽसि इति द्विर्दधि गृह्णीतः ॥ २ ॥ औपभृतानां द्वाभ्यामन्तत आज्यम् ॥ ३ ॥ इति वै खलु यदि श्रावण्यां यजेत ॥ ४ ॥ अथ यद्याषाढ्यां संसृष्टमेव गृह्णीयातां यथा पशुबन्धे ॥ ५ ॥ समानमा हविषामुद्वासनात् ॥ ६ ॥ ऐन्द्राग्नपर्यन्तानि हवींष्युद्वास्यामिक्षयोर्मेषप्रतिकृती[6] अवधत्तः ॥ ७ ॥ मारुत्यां मेषमवदधाति वारुण्यां मेषीम् ॥ ८ ॥ ताभ्यां[7] परःशतानि परःसहस्राणि[8] वा शमीपर्णकरीराण्युपवपतः[8] ॥ ९ ॥ करम्भपात्रेष्वावपति[9] ॥ १० ॥ एककपालस्यावृतैककपालमुद्वास्योत्तरस्यां[10] वेद्यां हवींष्यासादयति ॥ ११ ॥ दक्षिणस्यां मारुतीं करम्भपात्राणि च ॥ १२ ॥ आमिक्षयोर्मेषप्रतिकृती[11] विपरिहरतः[12] ॥ १३ ॥ मारुत्यां[13] मेषीमवदधाति वारुण्यां मेषम् ॥ १४ ॥ उभौ निर्मन्थ्याभ्यां चरत इत्येकम् । अध्वर्युरित्यपरम्[13] ॥ १५ ॥ ॥८॥

ततः संप्रेष्यति अग्निभ्यां समिध्यमानाभ्यामनुब्रूहि इति ॥ १ ॥ एवमेव

---

1. $A_{2-5}$,$B_1$ संप्रैष्या
2. Rudradatta on ĀpŚS VIII.5.24 : सहेति भारद्वाजः ।
3. Rudradatta on ĀpŚS VIII.5.34 cites sūtras 11 and 12 verbatim; Mahādeva on SatS V.2 (p. 461) and also Vāñcheśvara (16a) cite sūtra 12 verbatim.
4. $A_{1,3}$,$B_1$ प्रीतं
5. Thus $A_3$,$B_1$; $A_1$ विसृजे; R विसृजेते
6. $A_1$ °प्रतिकृति; $A_{2-5}$ °प्रकृती; $B_1$ °प्रकृति
7. $B_3$ द्वाभ्यां
8-8. $A_{2-5}$ परःसहस्राण्युप°
9. $A_1$ पात्रेष्वत्यावपति; $A_{2-5}$ पात्रेष्वावपति; $B_1$ पात्रेष्वत्यावपति
10. $A_{2-5}$ °स्योत्तर
11. Thus $B_{2,3}$; $A_1$ °प्रतिकृति; $A_{2-5}$ °प्रकृती; $B_1$ missing
12. Thus $A_1$,$B_{2,3}$; $A_{2-5}$,R ष्यति°
13-13. $A_{2-5}$,$B_1$ इत्यपरं; Mahādeva on SatS V.2 (p.464) : पक्षेऽध्वर्योरेव प्रचार इति भारद्वाजेनोक्तम् । Cited verbatim by Vāñcheśvara (19a) on SatS V and Rudradatta on ĀpŚS VIII.6.18.

संमार्जने[1] द्विवत्[2] प्रैषं संनमति[2] ॥ २ ॥ संमृष्ट उत्तरोऽग्निर्भवत्यसंमृष्टो दक्षिणः ॥ ३ ॥ अथ प्रतिप्रस्थाता पत्नीं पृच्छति कति ते जाराः इति ॥ ४ ॥ यजारं सन्तं न प्रब्रूयात् प्रियं ज्ञातिं रुन्ध्यात् । असौ मे जारः इति निर्दिशेत् । निर्दिश्यैवैनं वरुणपाशेन ग्राहयतीति विज्ञायते ॥ ५ ॥ यावत आचष्टे तान् वरुणो गृह्णातु इत्युक्त्वा पत्नीमुदानयति प्रघास्यान् हवामहे इति ॥ ६ ॥ ऐषीके शूर्पे उपस्तीर्य करम्भपात्राण्योप्याभिघार्य शीर्षन्नधिनिधाय पुरस्तात्प्रत्यङ् तिष्ठन् दक्षिणेऽग्नौ यजमानः सह पत्न्या करम्भपात्राणि जुहोति ॥ ७ ॥ यजमानः पुरोनुवाक्यामन्वाह मो षू ण इन्द्र इति ॥ ८ ॥ उभौ पत्नी च याज्यां यद् ग्रामे यदरण्ये इति ॥ ९ ॥ अपि वाध्वर्युरेव जुहुयात् ॥ १० ॥ अन्वारभेयातामितरौ ॥ ११ ॥ अक्रन् कर्म कर्मकृतः इति विपरायन्तौ जपतः ॥ १२ ॥ ततो दक्षिणमग्निं संमार्ष्टि ॥ १३ ॥ अध्वर्युरेव प्रवरं प्रवृणीते[3] ॥ १४ ॥ उभौ नवनव प्रयाजान् यजतः ॥ १५ ॥ आज्यभागाभ्यां प्रचर्य ॥ १६ ॥ ॥९॥

उपरमति प्रतिप्रस्थाता ॥ १ ॥ अध्वर्युर्हवीं[4]षि[4] प्रयच्छति ॥ २ ॥ ऐन्द्राग्नेन प्रचर्योपरमत्यध्वर्युः ॥ ३ ॥ मारुत्या प्रतिप्रस्थाता[5] प्रचरति[5] ॥ ४ ॥ पूर्वेणावदानेन मेषीं सहावद्यत्युत्तरेण सह शमीपर्णकरीराणि ॥ ५ ॥ मारुत्या प्रचर्योपरमति प्रतिप्रस्थाता ॥ ६ ॥ वारुण्याध्वर्युः प्रचरति ॥ ७ ॥ पूर्वेणावदानेन मेषं सहावद्यत्युत्तरेण सह शमीपर्णकरीराणि ॥ ८ ॥ एककपालस्याहुतैककपालं हुत्वोत्तरैश्चतुर्भिर्मासनामभिरभिजुहोति नभसे स्वाहा ॥ नभस्याय स्वाहा ॥ इषाय स्वाहा ॥ ऊर्जाय स्वाहा इति ॥ ९ ॥ पृथक् स्विष्टकृते जुहुतः । सहेडामवद्यतः[6] ॥ १० ॥ परिवत्सरीणां स्वस्तिमाशास्ते इतीडाया आशीःषु यजमानो जपति ॥ ११ ॥ प्रवया इवर्षभो दक्षिणा ॥ १२ ॥ पृषदाज्येन[7] नवानूयाजान् यजतः ॥ १३ ॥ परिवत्सरीणां स्वस्तिमाशास्ते दिव्यं धामाशास्ते इति सूक्तवाके होताशास्ते ॥ १४ ॥ उभौ वाजिनेन

---

1. Mahādeva on SatS V.2 (p. 457): भरद्वाजोदाहवनीयाग्निभ्यां समिध्यमानाभ्यामनुगृहीत्वैनमग्निसंमार्जन इत्यस्य... ।
2-2. Thus $A_{2-4}$; $A_1$,$B_1$ द्विवत्संप्रैषमनमति; $B_2$ द्विवत्संप्रैषं नमति; $B_3$ द्विवत्प्रैषं नमति; R ...संप्रेषर संनमति
3. $A_{2-4}$, Vāñcheśvara (20a) on SatS V: वृणीते; Rudradatta on ApSS VIII.6.28: तथाध्वर्युरेव प्रवरं प्रवृणीतेति भारद्वाजबौधायनौ ।
4-4. A,$B_1$ omitted
5. A,$B_1$,R read वारुण्याध्वर्युः before प्रचरति.
6. Vāñcheśvara (21b) on SatS V: उभयोः पृथक् स्विष्टकृतो etc.
7. $B_2$ पृषदाज्येन च

प्रचरतः ॥ १५ ॥ आ त्वा विशन्त्विन्दवः ॥ आ कल्गा[1] धमनीनाँ रसेन मे रसं पृण[2]। तस्य ते वाजिभिर्भक्षं[3] कृतस्योपहूतस्योपहूतो भक्षयामि इति ॥ १६ ॥ ॥१०॥

दक्षिणं वाजिनं भक्षयन्ति[4] ॥ १ ॥ वाजिनां भक्षोऽवतु[5] वाजोऽस्मान् रेतः सिक्तममृतं बलाय। स न इन्द्रियं द्रविणं दधातु मा रिषाम वाजिनं भक्षयन्तः ॥ तस्य त उपहूतस्योपहूतो भक्षयामि इत्युचरम्[6] ॥ २ ॥ उभौ कस्तम्भ्याँ स्रुचौ[7] सादयतः[7] ॥ ३ ॥ अध्वर्युरेव पत्नीः संयाजयति[8] ॥ ४ ॥ उभौ पाशुकानि समिष्टयजूँषि जुहुतः ॥ ५ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ६ ॥ तुषैश्च वारुण्या निष्कासेन चावभृथमवयन्ति ॥ ७ ॥ तत्र कृत्स्नोऽवभृथः[9] क्रियते यदन्यत्[10] साम्नोऽध्वमन्त्रा-दृजीषभक्षादिति[11] ॥ ८ ॥ तुषा ऋजीषस्य स्थानं भवियन्ति ॥ ९ ॥ निष्कास एककपालस्य ॥ १० ॥ अपि[12] वा[13] वारुणमेककपालं निर्वपेत् ॥ ११ ॥ तस्य निष्कासेन समवदाय[14] प्रचरेत् ॥ १२ ॥ अपि वा न[15] सौमिकोऽवभृथः ॥ १३ ॥ तूष्णीमेव तुषनिष्कासमप्सूपवपेत्[16] ॥ १४ ॥ अथान्ये वाससी परिधायोदेतः[17] ॥ १५ ॥ काममेते वाससी[17] यस्मै कामयेयातां तस्मै दद्याताम् ॥ १६ ॥ प्रत्येत्य निवर्तयते ॥ १७ ॥ व्याख्यातं निवर्तनं तथा व्रतचर्या ॥ १८ ॥ ॥११॥

ततश्चतुर्षु मासेषु द्र्यहं साकमेधैर्यजते ॥ १ ॥ अग्नयेऽनीकवते पुरोडाश-मष्टाकपालं निर्वपति[18] साकँ सूर्येणोद्यता ॥ २ ॥ साकँ रश्मिभिः प्रचरन्तीत्येकेषाम्

---

1. $A_1$ गल्ला; $A_2$ गल्म; $A_3$ गल्प; $A_{4,5}$ गल्या; B गल्मा
2. $A_1$,$B_1$ प्रण; $A_{4,5}$ पृणा
3. Thus $A$,$B_{1,3}$
4. $A_1$ भक्षयन; $B_3$,R भक्षयति
5. Thus $B_3$; $B_{1,2}$ भक्षो अवतु
6. R counts sūtras 1 and 2 as one sūtra and carries the last word of the present second sūtra, namely, उत्तरम् to the next sūtra.
7. Rāmāgnicit on ĀpŚS VIII.7.11, 12 : भरद्वाजेन तु स्रुचो विमोक उक्तः।
8. Mahādeva on SatS V.2 (p. 457) : भरद्वाजोऽपि अध्वर्युरेव पत्नीर्याजयतीति।
9. $B_2$ कृत्स्नेनाव°
10. $A_1$,$B_1$ यद्यत्; $A_{2-5}$ यदन्यत्
11. Thus $B_{1,3}$; $A_1$ साम्नोर्ध्वं°; $B_2$ साम्नोर्ध°
12. R reads अपि at the end of the 10th sūtra.
13. Thus $A_1$,$B_{2,3}$; $A_{2-5}$,$B_1$,R omitted
14. $A_1$,$B_{1,2}$ °दायं
15. $B_{2,3}$ omitted
16. Thus $B_3$; $A_1$ तुषां°; $B_{1,2}$ तुषं°

17-17. $A_1$,$B_1$ omitted

18. In R the second sūtra has ended with निर्वपति.

॥ ३ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ४ ॥ मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुम् ॥ ५ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ६ ॥ गृहमेधीयस्य तन्त्रं प्रक्रमयति ॥ ७ ॥ समानमा वत्सानामपाकरणात् ॥ ८ ॥ अयजुष्केण गृहमेधीयाय[1] सर्वान् वत्सानपाकरोति ॥ ९ ॥ वेदं कृत्वा वेदिं करोति ॥ १० ॥ नात्रेध्माबर्हिर्भवति। न प्रणीताः प्रणयति ॥ ११ ॥ अग्नीन् परिस्तीर्य हस्ताववनिज्य पात्राणि प्रयुज्योलपराजीः[2] स्तीर्त्वा पवित्रे कृत्वा संप्रेष्यति यजमान वाचं यच्छ इति ॥ १२ ॥ वाग्यतः पात्राणि संमृशति ॥ १३ ॥ मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायं चरुम्[3] ॥ १४ ॥ पवित्रे सर्वा गा दोहयित्वानुत्पूते पयस्यनुत्पूय तण्डुलानावपति[4] ॥ १५ ॥ गार्हपत्ये वान्वाहार्यपचने वा प्रतिवेशमोदनं पचति ॥ १६ ॥ तत उत्तरं परिग्राहं परिगृह्णाति ॥ १७ ॥ समानमा संप्रैषात्[5] ॥ १८ ॥ नात्रेध्माबर्हिः[6] प्रचोदयति[7] ॥ १९ ॥ समानमाज्यानां ग्रहणात् ॥ २० ॥ ध्रुवायामेव गृह्णाति ॥ २१ ॥ प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्य वेदिं प्रोक्ष्य प्रोक्षण्यवशेषं निनीयाग्निमभिमन्त्र्यान्तर्वेदि ध्रुवाँ[8] सादयित्वा स्रुवँ सादयति[8]। एषासदत् इति मन्त्रँ संनमति[9] ॥ २२ ॥ विष्णवसि वैष्णवं धामासि प्राजापत्यम् इत्याज्यमभिमन्त्रयते ॥ २३ ॥ तस्यै न[10] प्रस्तरं प्रहरति[11]। एवँ स्तीर्ण एव सांतपनस्य बर्हिषि गृहमेधीयेन चरन्तीत्येकेषाम्[12] ॥ २४ ॥ ॥१२॥

अथैतं[13] चरुमुद्वास्य तस्य शरं प्रज्ञातं निधाय त्रीनोदनानुद्धरति ॥ १ ॥ अनिष्कासितां कुम्भीं निदधाति। अप्रमृष्टं च[14] दर्व्युदायुवनम् ॥ २ ॥ उद्धृता-

1. A,$B_1$ °मेधीयायाः
2. $B_1$ °राजि; $B_{2,3}$ °राजी
3. Mahādeva on SatS V.3 (p. 470): चतुरो मुष्टीनिरप्य प्रभूतानन्वावपतीति भारद्वाजापस्तम्बौ। cf. ĀpSS VIII.10.1
4. Vāñcheśvara (25b) on SatS V: अनुत्पूते पयस्यनुत्पूततण्डुलानावपति।
5. A,$B_1$ प्रैषात्
6. $B_3$ °बर्हिषः
7. $B_3$ प्रचोदयंति
8-8. Emended, cf. XII.2.18; $B_1$ स्रुवां सादयित्वा स्रुवं सादयति; $B_3$ ध्रुवाँ सादयित्वा स्रुचं सादयित्वा
9. Thus $A_{4,5}$, cf. XII.2.18; Rudradatta on ĀpSS VIII.10.6: एतावसदतां तौ विष्णो पाहि इति स्रुवध्रुवयोर्मन्त्रसंनामः। तथा विष्णवसि वैष्णवं धामासि प्राजापत्यमित्याज्याभिमन्त्रणे जुहूपभृतोराज्याभावात्। तथैव पेठतुः सत्याषाढभारद्वाजौ।
10. Thus $B_1$; $A_1$ तस्य न; $A_{2-5}$,R तस्यैनं
11. $B_3$ परिहरति
12. $A_{4,5}$ प्रचन्ती°
13. R अथैनं
14. $A_{2-5}$,R omitted

नोदनान् पच्छो गायत्र्योत्पूयालंकृत्यासादयति ॥ ३ ॥ निशायां गृहमेधीयेन चरन्ति ॥ ४ ॥ नात्र सामिधेन्यो भवन्ति नाघारौ न प्रयाजाः[1] ॥ ५ ॥ वेदेनाहवनीयमुपक्षिप्य संप्रेष्यति अग्नीदग्निं[2] त्रिः संमृड्ढि इति ॥ ६ ॥ अग्निमेवाग्नीध्रस्त्रिः संमार्ष्टि ॥ ७ ॥ प्रवरं प्रवृत्याज्यभागाभ्यां प्रचर्य संप्रेष्यति मरुद्भ्यो गृहमेधिभ्योऽनुब्रूहि इति ॥ ८ ॥ जुह्वामुपस्तीर्य सर्वेषामोदनानां द्विर्द्विश्चतुरवदानस्यावद्यति त्रिस्त्रिः पञ्चावदानस्य[3] ॥ ९ ॥ अभिघार्यात्याक्रम्याश्राव्याह मरुतो गृहमेधिनो यज इति ॥ १० ॥ वषट्कृते जुहोति ॥ ११ ॥ सर्वेषामोदनानाँ स्विष्टकृते सकृत्सकृदवद्यति ॥ १२ ॥ सर्वेषामिडामुपहूय[4] तामिडां[4] प्राश्नन्त्यृत्विजः[5] ॥ १३ ॥ अमात्येभ्य ओदनानुपहरन्ति यावन्तो हविरुच्छिष्टाशा भवन्ति ॥ १४ ॥ अतोऽन्येऽपि प्राश्नीयुर्यदि प्रभूत ओदनः स्यात्[6] ॥ १५ ॥ प्रतिवेशात् पत्न्यश्नाति गृहमेधीयाद्वा ॥ १६ ॥ इडान्तो गृहमेधीयः संतिष्ठते ॥ १७ ॥ आञ्जतेऽभ्यञ्जते[7] ॥ १८ ॥ अनु वत्सान् वासयन्ति[8] ॥ १९ ॥ सुहिता एताँ रात्रिं वसन्ति प्रवीता अनवर्तिमुखिनः ॥ २० ॥ प्रतिवेशा अपि पचन्ते ॥ २१ ॥ गा अभिघ्नते ॥ २२ ॥ ॥१३॥

क्रैडिनस्य तन्त्रं प्रक्रमयति[9] ॥ १ ॥ पराचीनरात्रेऽग्निहोत्र्याश्चाभिवान्यायाश्च वत्सौ बध्नन्ति ॥ २ ॥ पुरा प्रातरग्निहोत्रात् पूर्णदर्व्येण चरन्ति[10] ॥ ३ ॥ दर्व्यामुपस्तीर्य शरनिष्कासस्य दर्वी पूरयित्वाप्रमृष्टं च दर्व्युदायुवनमन्ववदधाति ॥ ४ ॥ अभिघार्य गार्हपत्ये जुहोति ॥ ५ ॥ *पूर्णा दर्वि परा पत* इत्येतामनुद्रुत्योत्तरया[11] जुहोति ॥ ६ ॥ ऋषभमाहूयर्षभस्य रवते जुहोति ॥ ७ ॥ यद्यृषभो न

---

1. Thus $B_{2,3}$; $A_1$ नाघारौ न प्रयाजौ; $A_{2-5}$ नाघारौ न प्रयाजानूयाजौ; $B_1$ नाघारौ न प्रयाजौ; R न प्रयाजानूयाजौ
2. Thus $B_2$; $A_1$ अग्नीन्; $A_{2-5}$ अग्नीत्; $B_1$ अग्नि; $B_3$ अग्नीदग्नी; R अग्नीदग्नीन्
3. Rudradatta on ĀpŚS VIII.11.4 : सर्वेषु चावदानधर्माः प्रकृतिवत्। स चायं प्रयोगक्रमः स्वयमेव व्युत्क्रमनुक्रान्तो भारद्वाजेनेति ।

4–4. $A_1B_{1,2}$ °मुपहूतामिडां; $B_3$ °मुपहूतामिडां
5. R carries the word ऋत्विजः to the next sūtra.
6. Rudradatta on ĀpŚS VIII.11.8 cites sūtras 14 and 15 verbatim except ततो for अतो in sūtra 15. Sūtras 14 and 15 cited verbatim by Vāñcheśvara (27b) on SatS V..
7. $A_{2-5}$ आंजते
8. Thus $B_{1,3}$; R वासयति
9. Cited verbatim by Mahādeva on SatS V.3 (p. 473).
10. प्रचरति for चरन्ति in the citation by Mahādeva on SatS V.3 (p. 473).
11. In R sūtra 5 ends with इति.

रूयाद् ब्रह्मा ब्रूयात् जुहुधि इति ॥ ८ ॥ यस्य स्वते जुहोति तं ब्रह्मणे ददाति ॥ ९ ॥ मरुद्भ्यः क्रीडिभ्यः पुरोडाशँ सप्तकपालं निर्वपति[1] साकँ सूर्येणोद्यता ॥ १० ॥ साकँ रश्मिभिः प्रचरन्तीत्येकेषाम् ॥ ११ ॥ सिद्धमिष्टिः संतिष्ठते ॥ १२ ॥ उदित आदित्येऽभिवान्यां दोहयित्वा मरुद्भ्यः स्वतवद्भ्यः पुरोडाशँ सप्तकपालं निर्वपति ॥ १३ ॥ सिद्धमिष्टिः संतिष्ठते ॥ १४ ॥ महाहविषां तन्त्रं प्रक्रमयति ॥ १५ ॥ तेषां वरुणप्रघासैः कल्पो व्याख्यातोऽन्यत्रावभृथात् ॥ १६ ॥ ॥१४॥

आमिक्षयोर्दक्षिणाद्विहारादिति ॥ १ ॥ समानमा निर्वपणात् ॥ २ ॥ आग्नेयमष्टाकपालमिति नित्यानि पञ्च संचराणि निरुप्यैन्द्राग्नमेकादशकपालमैन्द्रं चरुं वैश्वकर्मणमेककपालमिति ॥ ३ ॥ समानमा स्रुच्यादाघारात्[2] ॥ ४ ॥ अग्ने वेहोत्रं वेर्दूत्यम् ॥ ऊर्ध्वो अध्वरायास्थात् ॥ अवतां त्वा द्यावापृथिवी यज्ञे अस्मिन् ॥ अव त्वं द्यावापृथिवी यज्ञे अस्मिन् ॥ स्विष्टकृदिन्द्राय देवेभ्यो भव ॥ जुषाणो अस्य हविषो घृतस्य वीहि स्वाहा इति स्रुच्यमाघारमाघारयति[3] ॥ ५ ॥ एककपालस्याहुतैककपालँ हुत्वोत्तरै-श्चतुर्भिर्मासनामभिरभिजुहोति सहसे स्वाहा ॥ सहस्याय स्वाहा ॥ तपसे स्वाहा ॥ तपस्याय स्वाहा इति ॥ ६ ॥ इदावत्सरीणाँ स्वस्तिमाशास्ते इतीडाया आशीःषु यजमानो जपति ॥ ७ ॥ प्रथमजो वत्सो दक्षिणा ॥ ८ ॥ इदावत्सरीणाँ स्वस्तिमाशास्ते दिव्यं धामाशास्ते इति सूक्तवाके होताशास्ते ॥ ९ ॥ सिद्धमिष्टिः संतिष्ठते ॥ १० ॥ ॥१५॥

पितृयज्ञस्य तन्त्रं प्रक्रमयति ॥ १ ॥ दक्षिणपूर्वेणान्वाहार्यपचनं यजमान-मात्रीं चतुःस्रक्तिं वेदिं करोति ॥ २ ॥ तस्या दिक्षु स्रक्तयो भवन्त्यवान्तरदेशेषु मध्यानि ॥ ३ ॥ अथैनां सर्वतः परिश्रित्योत्तरां स्रक्तिं प्रति द्वारं करोति ॥ ४ ॥ उद्धननान्तां कृत्वान्वाहार्यपचनादग्निमाहृत्य मध्यतः समादधाति ॥ ५ ॥ एष एतस्मिँस्तन्त्र आहवनीयो भवति ॥ ६ ॥ तत्र ये देवप्रवादा मन्त्रा उभयवत् ते संनम्येरन् देवानां पितॄणां परिषूतमसि ॥ कर्मणे वां देवेभ्यः पितृभ्यः शकेयम् इति ॥ ७ ॥ यथाप्रकृत्येव वर्तेरन्नित्यपरम् ॥ ८ ॥ समानमा बर्हिष आहरणात् ॥ ९ ॥ समूलं बर्हिर्दात्युपमूलं[4] वा ॥ १० ॥ द्राघीयानिध्म इध्माद्भवति द्राघीयो बर्हिषो बर्हिः ॥ ११ ॥ समानमा निर्वपणात् ॥ १२ ॥ दक्षिणतः शकटात् प्राचीनावीती

1. In R the tenth sūtra ended with निर्वपति.
2. B₂ स्रुच्याघारात्
3. A,B₁,₃,R स्रुच्यमाघारयति
4. Thus A₁,B; A₂₋₃,R °र्दात्यमूलं

निर्वपत्युत्तरतो वा यज्ञोपवीती ॥ १३ ॥ सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपति पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम् ॥ १४ ॥ यवमयान्येतानि हवींषि भवन्ति ॥ १५ ॥ प्रोक्षण्युद्रेकेण यवानार्द्रान् कृत्वावहन्ति[1] ॥ १६ ॥ समानमा फलीकरणात् ॥ १७ ॥ ॥१६॥

[2]फलीकृतांस्तण्डुलांस्त्रेधं[3] विभज्यान्वाहार्यपचने भर्जनार्थं कपालमुपधाय तस्मिँस्तृतीयं तण्डुलानां धाना[4] भर्जन्ति[5] ॥ १ ॥ व्याख्यातः[6] संस्कारः[6] ॥ २ ॥ पिष्टानामावृता धानाः पिंषन्ति ॥ ३ ॥ समानमा कपालोपधानात् ॥ ४ ॥ दक्षिणार्धे गार्हपत्यस्य षट् कपालान्युपधायान्वाहार्यपचने धानार्थं कपालमुपदधाति ॥ ५ ॥ नानापात्रेषु हवींषि संवपति ॥ ६ ॥ उत्पुनाति ॥ ७ ॥ पिष्टेष्वेव आनीयाभिवान्यायै दुग्धे मन्थमानयति ॥ ८ ॥ अर्धपात्रं करोति ॥ ९ ॥ पिष्टानि संयुत्येक्षुशलाकया मन्थं प्रसव्यं दक्षिणाभिमुखोऽनन्वारभमाण[7] उपमन्थति ॥ १० ॥ शलाकास्थं[8] करोति ॥ ११ ॥ पुरोडाशमधिश्रित्यान्वाहार्यपचने धाना भर्जन्ति ॥ १२ ॥ ता अत्रैव विदह्यमानाः परिशेरत आ हविषामुद्वासनात्[9] ॥ १३ ॥ तत उत्तरं परिग्राहं परिगृह्णाति ॥ १४ ॥ समानमाज्यानां ग्रहणात् ॥ १५ ॥ दक्षिणार्धे गार्हपत्यस्याज्यानि गृह्णाति ॥ १६ ॥ सर्वाणि चतुर्गृहीतानि ॥ १७ ॥ तान्यत्रैव परिशेरत आ हविषामासादनात् ॥ १८ ॥ समानमा बर्हिषः स्तरणात्[10] ॥ १९ ॥ अग्रे बर्हिर्गृहीत्वा प्रसव्यमग्निं त्रिः स्तृणन् पर्येति ॥ २० ॥ त्रिरस्तृणन् प्रतिपर्येति अया विष्ठा जनयन् कर्वराणि[11] इत्यूर्ध्वं धारयमाणः ॥ २१ ॥ स प्रस्तरो भवति ॥ २२[12] ॥ ॥१७॥

1. $B_{2,3}$ °भवन्ति
2. Section 17 is missing in $A_{2-3}$,$B_1$
3. $A_{2-3}$ °त्रेधा
4. $A_1$ तण्डुलानां धानाद्धाना
5. Thus $A_1$; $B_{2,3}$,R भर्जयन्ति
6-6. $B_2$ व्याख्यातारः संस्तारः; $B_3$ व्याख्याताः संस्कारः
7. $A_1$ दक्षिणामुखोनन्वा°; $B_2$ दक्षिणामुखोन्वा°
8. Thus $B_2$; $A_1$ लास्थं; $B_3$ शलाकास्थानं
9. Cited verbatim by Rudradatta on ĀpŚS VIII.13.20; Vāñcheśvara on SatS V ( 35a ) : अनुपदह्यमानाः etc.
10. $B_3$ बर्हिःस्तरणात्
11. $B_2$ खर्वराणि
12. R reads sūtras 20-22 as two sūtras; sūtra 20 ends with प्रतिपर्येति and the rest forms sūtra 21. It reads स प्रस्तरो as one word.

. . द्वौ परिधी परिदधाति मध्यमं[1] चैव दक्षिणार्ध्यं[2] च ॥ १ ॥ नात्र विधृती भवतः ॥ २ ॥ तूष्णीमेव प्रस्तरं न्यस्यति ॥ ३ ॥ एकैकश आज्यानि हवींषीत्यासादयन्ति[3] ॥ ४ ॥ अग्निमग्रे[4] हरन्त्यथोदकुम्भमाज्यान्यथ हवींषि ॥ ५ ॥ एकैकमलंकरोति[5] वा । एषामेष परिवेष इत्येकेषाम् ॥ ६ ॥ दक्षिणतः कशिपूपबर्हणमाञ्जनमभ्यञ्जनमित्येकैकश आसाद्य विस्रस्य प्राचीनावीतानि यज्ञोपवीतानि कुर्वते ॥ ७ ॥ ततः संप्रेष्यति अग्नये देवेभ्यः पितृभ्यः समिध्यमानायानुब्रूहि इति ॥ ८ ॥ उशन्तस्त्वा हवामहे इत्येतां सामिधेनीं त्रिरन्वाह ॥ ९ ॥ सकृदेवेध्ममादधाति त्रैधं वा विभज्य ॥ १० ॥ स्रुवाघारमाघार्य संप्रेष्यति अग्नीत् परिधीं[6] चाग्निं[6] च त्रिस्त्रिः संमृड्ढि इति ॥ ११ ॥ समानमा प्रवरात् ॥ १२ ॥ आश्राव्याह सीद होतः इति[7] ॥ १३ ॥ एतावान् प्रवरः ॥ १४ ॥ नार्षेयं वृणीते[8] न होतारम् ॥ १५ ॥ अपबर्हिषश्चतुरः प्रयाजान् यजति ॥ १६ ॥ आज्यभागाभ्यां प्रचर्य विस्रस्य यज्ञोपवीतानि प्राचीनावीतानि कुर्वते ॥ १७ ॥ अत्रैके परिश्रयणं समामनन्ति ॥ १८ ॥ विपरिहरन्त्याज्यानि विपरिहरन्ति हवींषि विपरिक्रामन्त्यृत्विजः ॥ १९ ॥ दक्षिणेन जुहूमुपभृतं सादयति दक्षिणेनोपभृतं ध्रुवाम् । दक्षिणेन[9] पुरोडाशं धानाः सादयति[9] दक्षिणेन धाना मन्थम् ॥ २० ॥ समानत्र जुहूर्भवति समानत्र पुरोडाशः समानत्र ब्रह्मा च यजमानश्च ॥ २१ ॥ ॥१८॥

ततः संप्रेष्यति सोमाय पितृमतेऽनु स्वधा इति ॥ १ ॥ जुह्वामुपस्तीर्य सर्वेषां हविषां सह स्विष्टकृता द्वे द्वे पुरोनुवाक्ये अन्वाहोभे सप्रणवे[10] ॥ २ ॥ षडवत्तं पञ्चावत्तिनामवद्यति पञ्चावत्तं चतुरवत्तिनाम् ॥ ३ ॥ षडवत्ते मुख्यान्मुख्याद्धविषो द्विरवद्यति[11] ॥ ४ ॥ पुरोडाशस्यावदाय धानानामवद्यति ॥ ५ ॥ एवं मन्थस्य

1. $A_{2-5}$,$B_1$,R मध्यं
2. $B_{1,2}$ दक्षिणार्धं
3. Thus $B_{1,2}$; $A_{2-5}$,R °सादयति
4. $A_{4,5}$ °मत्र
5. $A_1$,$B_2$ °मलंकारो; $B_{1,2}$ °मलंकरो
6. Thus $B_1$; R परिधीऽश्चाग्निं
7. Mahādeva on SatS V.4 (p. 482) : ब्रह्मणा प्रसूत आश्राव्याह सीद होतरिति। तथैव भारद्वाजापस्तम्बोक्तेः।
8. $A_{1-5}$ प्रवृणीते
9-9. $A_{1-5}$ omitted
10. $A_{3-5}$ प्रणवे
11. Mahādeva on SatS V,4 (p. 483) : सर्वेभ्यस्त्रिभ्यः सकृत्सकृदवद्यतीत्यापस्तम्बभरद्वाजोक्तेः।

॥ ६ ॥ [1]अभिघार्योदङ्ङत्याक्रम्य आ स्वधा इत्याश्रावयति। अस्तु स्वधा इति प्रत्याश्रावयति ॥ ७ ॥ सोमं पितृमन्तँ स्वधा इति संप्रेष्यति ॥ ८ ॥ ये स्वधामहे इत्यागूर्भवति ॥ ९ ॥ स्वधा नमः इति वषट्करोति ॥ १० ॥ ततः संप्रेष्यति पितृभ्यो[1] बर्हिषद्भ्योऽनु स्वधा इति ॥ ११ ॥ जुह्वामुपस्तीर्य धानानामवदाय मन्थस्यावद्यति[2] ॥ १२ ॥ एवं पुरोडाशस्य[3] ॥ १३ ॥ अभिघार्योदङ्ङत्याक्रम्य आ स्वधा इत्याश्रावयति। अस्तु स्वधा इति प्रत्याश्रावयति ॥ १४ ॥ पितॄन् बर्हिषदः स्वधा इति संप्रेष्यति ॥ १५ ॥ ये स्वधामहे इत्यागूर्भवति ॥ १६ ॥ स्वधा नमः इति वषट्करोति ॥ १७ ॥ ततः संप्रेष्यति पितृभ्योऽग्निष्वात्तेभ्योऽनु स्वधा इति ॥ १८ ॥ जुह्वामुपस्तीर्य मन्थादवदाय पुरोडाशस्यावद्यति ॥ १९ ॥ एवं धानानाम् ॥ २० ॥ अभिघार्योदङ्ङत्याक्रम्य आ स्वधा इत्याश्रावयति। अस्तु स्वधा इति प्रत्याश्रावयति ॥ २१ ॥ पितॄनग्निष्वात्तान् स्वधा इति संप्रेष्यति ॥ २२ ॥ ये स्वधामहे इत्यागूर्भवति ॥ २३ ॥ स्वधा नमः इति वषट्करोति ॥ २४ ॥ ॥१९॥

असमवदाय[4] प्रचरणमेके समामनन्ति ॥ १ ॥ ततः संप्रेष्यति अग्नये कव्यवाहनाय स्विष्टकृतेऽनु स्वधा इति ॥ २ ॥ जुह्वामुपस्तीर्य सर्वेषां हविषां दक्षिणार्धात् सकृत्सकृच्चतुरवदानस्यावद्यति द्विर्द्विः[5] पञ्चावदानस्य ॥ ३ ॥ अभिघार्योदङ्ङत्याक्रम्य आ स्वधा इत्याश्रावयति। अस्तु स्वधा इति प्रत्याश्रावयति ॥ ४ ॥ अग्निं कव्यवाहनँ स्विष्टकृतँ स्वधा इति संप्रेष्यति ॥ ५ ॥ ये स्वधामहे इत्यागूर्भवति ॥ ६ ॥ स्वधा नमः इति वषट्करोति ॥ ७ ॥ मन्थस्याग्र इडामवदायेतरयोरवद्यति[6]। मन्थमिडामवद्यतीत्येकेषाम्[6] ॥ ८ ॥ उपहूतामिडामवघ्रेण[7] भक्षयन्ति होताग्रेऽथाध्वर्युरथ ब्रह्माथाग्नीध्रोऽथ[8] यजमानः ॥ ९ ॥ उदकुम्भमादाय प्रसव्यमग्निं त्रिः[9] परिषिञ्चन् पर्येति शुन्धन्तां पितरः इति। त्रिरपरिषिञ्चन् प्रतिपर्येति अथा विष्टा जनयन् कर्वराणि इति ॥ १० ॥ हविःशेषान् संप्रयुत्य त्रीन् पिण्डान् कृत्वा तिसृषु स्रक्तिषु निदधाति

1. $A_1$,$B_1$ omitted
2. $B_{2,3}$ मन्थस्य
3. $B_{2,3}$ पुरोडाशस्या°
4. $A_1$,$B_1$ असमवद्य°; $A_{2-5}$ असमव°
5. $A_1$,$B_1$ द्विः
6–6. Thus $A_1$,$B$; $A_2$ °तरयोरवद्यति । मन्थेडा°; $A_{3-5}$ °तरयोरवद्यतीत्येकेषाम् ।
7. Thus $B_2$; $A_1$ उपभृता°; $B_{1,3}$ उपहूता°
8. $A_{2-5}$ °ग्नीध्री
9. $A_{1-5}$ omitted

पश्चार्ध्यायां दक्षिणार्ध्यायां पूर्वार्ध्यायाम्[1] ॥ ११ ॥ एतद्वा विपरीतम् ॥ १२ ॥ एतत् ते तत ये च त्वामनु इत्येतैर्मन्त्रैर्यथा पिण्डपितृयज्ञे[2] ॥ १३ ॥ ॥२०॥

उत्तरस्यां स्रक्त्यां लेपं निमृज्य अत्र पितरो यथाभागं मन्दध्वम् इत्युक्त्वोदञ्च उपनिष्क्रम्या तमितोराहवनीयमुपतिष्ठन्ते[3] ॥ १ ॥ समन्य जपन्ति सुसंदृशं त्वा वयं मघवन् मन्दिषीमहि इति ॥ २ ॥ अक्षन्नमीमदन्त इति गार्हपत्यमुपतिष्ठन्ते ॥ ३ ॥ अमीमदन्त पितरः सोम्याः इति परायन्ति ॥ ४ ॥ परेत पितरः सोम्याः इति पुनरभिप्रपद्यन्ते ॥ ५ ॥ तूष्णीं दशां वोर्णास्तुकां वा प्रच्छिद्योपन्यस्यायन्ति एतानि वः पितरो वासांस्यतो नोऽन्यत्[4] पितरो मा यूढ्वम् इति ॥ ६ ॥ आञ्जनप्रभृति गार्हपत्योपस्थानान्तं कर्म क्रियते यथा पिण्डपितृयज्ञे ॥ ७ ॥ अत्रैके परिषेचनं समामनन्ति ॥ ८ ॥ विस्रस्य प्राचीनावीतानि यज्ञोपवीतानि कुर्वते ॥ ९ ॥ विपरिहरन्ति स्रुचो विपरिक्रामन्त्यृत्विजः ॥ १० ॥ व्यपच्छाद्य परिश्रयणं संप्रेष्यति ब्रह्मन् प्र स्थास्यामः इति ॥ ११ ॥ अपबर्हिषौ द्वावनूयाजौ यजति ॥ १२ ॥ देवौ यज इति पूर्वमनूयाजं संप्रेष्यति । यज इत्युत्तरम् ॥ १३ ॥ सूक्तवाकं प्रति होता निव्ययते ॥ १४ ॥ नात्र पत्न्यन्वास्ते न संयाजयन्ति न समिष्टयजुर्जुहोति ॥ १५ ॥ सिद्धमिष्टिः संतिष्ठते ॥ १६ ॥ शंयुवन्तेत्येकेषाम् ॥ १७ ॥ ॥२१॥

प्रतिपूरुषमेककपालान्[5] निर्वपति यथा करम्भपात्राणि ॥ १ ॥ उत्तरार्धे गार्हपत्यस्य कपालान्युपधाय श्रपयति[6] ॥ २ ॥ अथैनानभिघार्यानभिघार्य वोद्वास्य मूतेऽवदधाति । मूतयोर्मूतेषु वा ॥ ३ ॥ कोशापिधानेन हरन्तीत्येकेषाम्[7] ॥ ४ ॥ दक्षिणाग्नेरेकोल्मुकं धूपायत्[8] पराचीनं हरति ॥ ५ ॥ उत्तरपूर्वमवान्तरदेशं गत्वाखूत्कर एकमुपवपति[9] पयन्तो गृह्या रमस्तेभ्यः कमकरम् इति ॥ ६ ॥ चतुष्पथ एकोल्मुक-

1. A,R omit दक्षिणार्ध्यायां; $B_1$ ...यां दक्षिणार्ध्यायां पूर्वार्ध्यायाम्; $B_3$ दक्षिणार्ध्यायाम्
2. Vāñcheśvara on SatS V (40a): तथा चैतत्ते तत ये च त्वामन्विति प्रथमं पिंडमवदध्यात् एतत्ते पितामह ये च त्वामन्विति द्वितीयं एतत्ते प्रपितामह ये च त्वामन्विति तृतीयं यथा पिंडपितृयज्ञे इति भारद्वाजः।
3. $B_2$ °तिष्ठते
4. $B_2$,R नान्यत्
5. $A_1$ °कपालं; $A_{2-5}$,$B_1$ °पुरुष°
6. $A_1$,$B_2$ श्रपयति; Vāñcheśvara (42a) on SatS: भारद्वाजापस्तंबकात्यायनवचनेभ्यश्च गार्हपत्य उदीचीनांगाराग्निरूह्य तेष्वधिश्रित्येति ।
7. $B_2$ °त्येके
8. $A_{4,5}$ धूमायात्; R धूमायत्; $B_3$ धूपात्
9. Thus $B_{2,3}$; A,$B_1$,R एकोल्मुकमुप°

सुपसमाधाय संपरिस्तीर्य मध्यमे पलाशपर्ण[1] उपस्तीर्यान्तमे वा सर्वेषामेककपालानाँ सकृत्सकृत् समवदायाभिघार्य जुहोति एष ते रुद्र भागः सह स्वसाम्बिकया तं जुषस्व स्वाहा इति ॥ ७ ॥ हुतं यजमानोऽनुमन्त्रयते भेषजं गवे इति द्वाभ्याम् ॥ ८ ॥ प्रतिपूरुषमेककपालानादाय[2] प्रदक्षिणं चतुष्पथं त्रिः परियन्ति त्र्यम्बकं यजामहे इत्येतया ॥ ९[3] ॥ यदि पतिकामा[4] स्यात् सापि परीयात्

त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् ।
उर्वारुकमिव बन्धनादितो मुक्षीय मा पतेः ॥

इति ॥ १० ॥ तानूर्ध्वानुदस्य प्रतिलभन्ते ॥ ११ ॥ ॥२२॥

भग स्थ भगस्य वो लप्सीय इति ॥ १ ॥ परीत्यपरीत्य यजमानायाभिसमावपन्ति ॥ २ ॥ पतिकामाया अभिसमावपेयुः[5] ॥ ३ ॥ यस्य कस्य च[6] पतिकामा स्यादित्येकम् । यजमानस्येत्यपरम् ॥ ४ ॥ तान् मूते[7] कृत्वा परोगोष्ठे वृक्ष आसज्योपतिष्ठन्ते एष ते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतोऽतीहि ॥ अवततधन्वा पिनाकहस्तः कृत्तिवासाः इति । त्रिरवताम्यन्ति ॥ ५ ॥ अनुपरिषिच्य मार्जयन्ते सुमित्रा न[8] आप ओषधयः सन्तु इति ॥ ६ ॥ समिधः कृत्वाप्रतीक्षमायन्ति ॥ ७ ॥ एधोऽस्येधिषीमहि इत्याहवनीये समिध आधायोपतिष्ठन्ते अपो अन्वचारिषम् इति ॥ ८[9] ॥ एवं पत्नी गार्हपत्य[10] आधायोपतिष्ठते[10] ॥ ९ ॥ प्रत्येत्यादित्यै घृते चरुं निर्वपति ॥ १० ॥ तस्याग्न्याधेयेन कल्पो व्याख्यातोऽन्यत्र वरदानात्[11] ॥ ११ ॥ अश्वँ श्वेतमेके समामनन्ति ॥ १२ ॥ सद्यस्काला एता इष्टयो भवन्त्य-

1. $B_{2,3}$ पलाशपलाशम्; R पलाशपलाश
2. $A_{2-3}$,$B_1$ °पुरुप°
3. R separates sūtras 7-9 differently: the 7th ends with जुहोति and the 8th with अनुमन्त्रयते.
4. $A_1$,$B_3$ पतिकाम; $B_1$ पतिकामः; $B_2$ पतिकामा न
5. $B_2$ and Rudradatta on ĀpŚS VIII.18.5 read अपि°.
6. Rudradatta on ĀpŚS VIII.18.3 has cited this sūtra verbatim. R omits च. Vāñcheśvara (43a) on SatS cites कस्यचित् for कस्य च.
7. Thus $B_{2,3}$; $A_1$,$B_1$,R मूते तु
8. Mahādeva on SatS V.5 (p. 489): सुमित्रा न इत्येतेनेति भरद्वाजः।
9. R reads sūtras 6-8 as two sūtras: the sūtra 6 ends with एधिषीमहि इति and the rest forms sūtra 7.
10-10. $A_1$,$B_3$ °पत्येभ्याधा°; $B_1$ °पत्येभ्य आधा°; $B_2$ °पत्येष्वाधा°
11. Mahādeva on SatS V.5 (p. 490): तस्याग्न्याधेयिकवत् कल्प इति भरद्वाजः। Rudradatta on ĀpŚS VIII.19.1: तथान्यत्र वरदानादित्येव भारद्वाजः। Vāñcheśvara on SatS (44a): अन्यत्र वरदानादिति भारद्वाजवचनात्।

न्यग्रानीकवतात् क्रैडिनादिति ॥ १३ ॥ ततो निवर्तयते ॥ १४ ॥ व्याख्यातं निवर्तनं तथा व्रतचर्या ॥ १५ ॥ ॥२३॥

ततश्चतुर्षु मासेषु शुनासीर्येण[1] यजते मासि वार्धमासे वा चतुरहे त्र्यहे द्व्यहे वैकाहे वा ॥ १ ॥ तस्य वैश्वदेवेन कल्पो व्याख्यातः ॥ २ ॥ विकारानुक्रमिष्यामः ॥ ३ ॥ समानभा निर्वपणात् ॥ ४ ॥ आग्नेयमष्टाकपालमिति नित्यानि पञ्च संचराणि निरुप्यैन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुमिन्द्राय शुनासीराय पुरोडाशं द्वादशकपालं वायव्यं पयः सौर्यमेककपालमिति ॥ ५ ॥ ग्रावदोहिन पयसः कल्पो व्याख्यातः ॥ ६ ॥ एककपालस्याहुतैककपालँ हुत्वोत्तमेन मासनाम्नाभिजुहोति सँसर्पोऽस्यँहस्पत्याय स्वाहा इति[2] ॥ ७ ॥ अनुवत्सरीणाँ[3] स्वस्तिमाशास्ते इतीडाया आशीःषु यजमानो जपति ॥ ८ ॥ द्वादशगवँ सीरँ षड्गवं वोष्टारौ वोष्टारं वा[3] ॥ ९ ॥ अनुवत्सरीणाँ स्वस्तिमाशास्ते[4] दिव्यं[5] धामाशास्ते[5] इति सूक्तवाके होताशास्ते ॥ १० ॥ एकँ समिष्टयजुर्जुहोति ॥ ११ ॥ सिद्धमिष्टिः संतिष्ठते ॥ १२ ॥ तथा[6] निवर्तयते[7] ॥ १३ ॥ व्याख्यातं निवर्तनम् ॥ १४ ॥ संतिष्ठन्ते चातुर्मास्यानि ॥ १५ ॥ ॥२४॥

काम्यानि[8] चातुर्मास्यानि व्याख्यास्यामः ॥ १ ॥ वैश्वदेवेन पशुकामो यजेत ॥ २ ॥ यस्मिन्नस्यर्तौ भूयिष्ठं पयः स्यादपि वा यदास्य वसन्ते भूयिष्ठं पयः स्यादथ[8] वैश्वदेवेन यजेत ॥ ३ ॥ वैश्वदेवेनैव पशुकामो यजेत नेतरैः पर्वभिरा[9] यावत् सहस्रं पशून् प्राप्नुयात् ॥ ४ ॥ सहस्रं पशून् प्राप्येतरैः पर्वभिर्यथाकालं यजेत ॥ ५ ॥ शुनासीर्येण[10] ग्रामकामो यजेत ॥ ६ ॥ वर्ष्यमुदकमन्ववसायैतेनैव प्रजाकामो यजेत पशुकामो यजेतान्नाद्यकामो यजेत प्रतिष्ठाकामो यजेतेति विज्ञायते

1. B₁ °सीरेण
2. Rudradatta on ĀpŚS VIII.20.8 : भारद्वाजस्त्वाह मासनाम्नाभिजुहोति संसर्पाय स्वाहांहस्पत्याय त्वा स्वाहेति। Vāñcheśvara (45a) on SatS : मासनामभ्यां जुहोति संसर्पाय स्वाहांहस्पत्याय स्वाहेति भारद्वाजः। cf. TS I.4.14
3-3. B₁,₂ omitted
4. A₂ °माशास
5-5. A₂-₃ omitted
6. B₂,₃ ततो
7. A₁ निवर्तयति
8-8. A₁-₃,B₁ omitted; sūtra 1 is cited *verbatim* by Rudradatta on ĀpŚS VIII.1.1; cf. also foot-note on VIII.1.1.
9. Thus B; A₁ मपर्वभिरा; A₂ पर्वभिरा; A₂-₃ पर्वभिरा
10. B₁ °सीरीयेण

॥ ७ ॥ पञ्चसांवत्सरिकाणि व्याख्यास्यामः ॥ ८ ॥ फाल्गुन्यां प्रयुज्य त्रीनृतून् संवत्सरानिष्ट्वा मासं विरमेत् ॥ ९ ॥ चैत्र्यां प्रयुज्य द्वावृतू संवत्सराविष्ट्वा विरमेत् ॥ १० ॥ तन्त्रं वैश्वानरपार्जन्ये भवतस्तन्त्रं पञ्चहोता ॥ ११ ॥ चातुर्मास्यैरिष्ट्वा सोमेन यजेत ॥ १२ ॥ सोमस्य वा एतद्रूपं यच्चातुर्मास्यानीति विज्ञायते ॥ १३ ॥ [1]सोमाशक्तौ[2] पशुना यजेत । पशुनाशक्तौ[3] पुनः प्रयोगश्चातुर्मास्यानाम् । स त्रिषुत्रिषु संवत्सरेषु[1] मासमुत्सृजेदिति विज्ञायते मासमुत्सृजेदिति[4] विज्ञायते[4] ॥ १४ ॥ ॥२५॥

॥ इति[4] अष्टमः प्रश्नः[5] ॥

---

1-1. $A_{2-5}$ omitted

2. Thus $A_1$,B; R सोमशक्तौ

3. Thus $A_1$,$B_2$; $B_1$,R पशुशक्तौ; $B_3$ omitted

4-4. Thus $B_2$; A,$B_1$ omitted

5. $A_{1,3}$ सप्तमः प्रश्नः; $A_{4,5}$ इति सप्तमः प्रश्नः ॥ ७ ॥; $B_1$ श्रीः; $B_2$ इति समाप्तश्चातुर्मास्यप्रयोगः ॥ इति भारद्वाजश्रौते अष्टमः प्रश्नः ॥

वर्षे प्रमाथिनाम्नि च श्रावण्यां मासि संयुते ।
ऋक्षे बृहस्पतेस्तस्य वारे द्वादशिसंयुते ॥
शुभयोगे शुभे लग्ने शुभे करणसंयुते ।
चातुर्मास्यक्रतुरिदं सूत्रं व्यासदनुग्रहात् ।
लिखित्वा पुस्तकेऽच्छेव रामकृष्णाख्यशर्मणा ॥
तस्यैव पुस्तकमिदमुदकाटनिवासिनः ।
काश्चिकारिकुले जातो शिवभक्तो भविष्यति ॥

॥ अष्टमः प्रश्नश्चातुर्मास्यक्रतोः सूत्रं समाप्तम् ॥

$B_3$ हरिः ॐ शुभमस्तु । श्रीचिदम्बरेश्वराय नमः । कनकसभापतये नमः । श्रियै नमः । श्रीसाम्बशिवार्पणमस्तु ।

## अथ नवमः प्रश्नः

श्रुतिलक्षणं[1] प्रायश्चित्तं विध्यपराधे विधीयते ॥ १ ॥ एकस्मिन् दोषे श्रूयमाणानि प्रायश्चित्तानि समभ्युच्चीयेरन्नर्थान्तरत्वात् ॥ २ ॥ जपो होम इज्या च ॥ ३ ॥ दोषनिर्घातार्थानि[2] भवन्ति ॥ ४ ॥ अनन्तरं दोषात् कर्तव्यानि ॥ ५ ॥ निर्हृते[3] दोषे पुनः कृत्स्नं कर्म ॥ ६ ॥ तस्य नावचनात् पुनः प्रयोगः ॥ ७ ॥ यद्यन्वाहिताग्निः[4] प्रयायात् तुभ्यं ता अङ्गिरस्तम इति गार्हपत्ये जुहुयात् ॥ ८ ॥ पृथगरणीष्वग्नीन् समारोप्य प्रयाति ॥ ९ ॥ स[5] यत्रावस्यति तदेतामिष्टिं सँस्थापयति ॥ १० ॥ यद्यन्वाहिताग्नेराहवनीय उद्वायेत्[6] अन्यमिरुपसाममख्यत् इत्यन्यं प्रणीय भूः इत्युपस्थायाज्यस्य स्रुचं पूर्णं जुहोति

यो अग्निं देववीतये हविष्माँ आविवासति ।
तस्मै पावक मृडय स्वाहा ॥

इति ॥ ११ ॥ तत एतामाहुतिं जुहोति इदं विष्णुर्वि चक्रमे इति ॥ १२ ॥ मनसा व्रतोपायनीयं यजुर्जपेत् ॥ १३ ॥ यः कश्चनानुगच्छेदेतदेव प्रणयनवर्जम् ॥ १४ ॥ मन्थेद्गार्हपत्यम् ॥ १५ ॥ यथाप्रकृत्यन्वाहार्यपचनम् ॥ १६ ॥ यद्याहिताग्नेरग्निरपक्षायेदा ग्राम्यापरासात् तँ संभरेत्

इदं त एकं पर उ त एकं तृतीयेन ज्योतिषा संविशस्व ।
संवेशनस्तनुवै चारुरेधि प्रिये देवानां परमे जनित्रे ॥

इति ॥ १७ ॥ ॥१॥

यदि परस्तरामपक्षायेदनुप्रयायावस्येत् ॥ १ ॥ ततोऽग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् ॥ २ ॥ पथोऽन्तिकाद्बर्हिराहरेत् ॥ ३ ॥ अनड्वान् दक्षिणा ॥ ४ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ५ ॥ यदि हविषे वत्सा अपाकृता धयेयुर्वायव्यां यवागूं निर्वपेत् ॥ ६ ॥ सा दोहस्य स्थाने स्याद्यतरस्मा[7] अपाकृता धयेयुः ॥ ७ ॥ अथोत्तरस्मै हविषे[8] वत्सानपाकृत्योपवसेत् ॥ ८ ॥ यदि सायं

---

1. $A_1, B_{1,3}$ begin with ओं
2. $A_1$ दोषरियीतार्थानि; $B_1$ दोषरिप्यातार्थानि; $B_2$ दोषनिष्वितार्थानि; $B_3$,R दोषनिर्घातानि
3. $B_1$ निर्हृतो; $B_2$ निसृते; $B_3$ निर्भृते
4. Thus $A, B_{1,3}$; R यद्यनाहिताग्निः
5. Thus $B_{2,3}$; $A, B_1$,R omitted
6. $A_{4,5}$,R उद्वास्येत्
7. In R sūtra 7 ends with स्थाने स्यात्.
8. Thus $B_{1,3}$; R omitted; cf. sūtra 19 next.

दुग्धँ हविरार्तिमार्छेदिन्द्राय व्रीहीन् निरुप्योपवसेत् ॥ ९ ॥ यत् प्रातः स्यात् तच्छृतं कुर्यात् ॥ १० ॥ अथेतर ऐन्द्रः पुरोडाशः स्यात् ॥ ११ ॥ तस्य प्रातर्दोहेन समवदाय[1] प्रचरेत् ॥ १२ ॥ अथोत्तरस्मै हविषे वत्सानपाकृत्योपवसेत् ॥ १३ ॥ एतदेव प्रातर्दोह आर्तिगते प्रायश्चित्तम् ॥ १४ ॥ एतावन्नाना। सायंदोहेनात्र[2] समवदाय[3] प्रचरेत् ॥ १५ ॥ यस्योभौ दोहावार्तिमार्छेयातामैन्द्रं पञ्चशरावमोदनं निर्वपेत् ॥ १६ ॥ तस्योभे देवते यजेताग्निं चेन्द्रं चेत्याश्मरथ्यः। अथालेखनः। इन्द्रमेवैतस्य यजेत ॥ १७ ॥ नित्य आग्नेयोऽष्टाकपालः ॥ १८ ॥ अथोत्तरस्मै हविषे वत्सानपाकृत्योपवसेत् ॥ १९ ॥ यस्य व्रत्येऽहन् पत्न्यनालम्भुका स्यात् तामपरुध्य यजेत ॥ २० ॥ उदक्शुल्वँ स्तृणीयात् ॥ २१ ॥ ॥२॥

तामिष्ट्वोपह्वयेत

अमूहमस्मि सा त्वं द्यौरहं पृथिवी त्वँ सामाहमृक् त्वम्।
तावेहि संभवावहै रेतो दधावहै पुँसे पुत्राय वेत्तवै
रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय ॥

इति ॥ १ ॥ यदि सांनाय्यमग्निहोत्रं वा विष्यन्देत प्राजापत्ययर्चा वल्मीकवपायामवनीय भूः इत्युपतिष्ठेत ॥ २ ॥ ततोऽन्यां दुग्ध्वा पुनर्जुहुयाद् यद्यग्निहोत्रम् ॥ ३ ॥ यद्यु वै सांनाय्यमुत्तरस्मै हविषे वत्सानपाकृत्योपवसेत् ॥ ४ ॥ यदि सांनाय्येऽग्निहोत्रे वा कीटोऽवपद्येत मध्यमेन पर्णेन द्यावापृथिव्ययर्चान्तःपरिधि निनयेत् ॥ ५ ॥ ततोऽन्यां दुग्ध्वा पुनर्जुहुयाद् यद्यग्निहोत्रम् ॥ ६ ॥ यद्यु वै सांनाय्यमुत्तरस्मै हविषे वत्सानपाकृत्योपवसेत् ॥ ७ ॥ यद्युद्द्रुतमग्निहोत्रमववर्षेत्[4]

मित्रो जनान् कल्पयति प्रजानन् मित्रो दाधार पृथिवीमुत द्याम्।
मित्रः कृष्टीरनिमिषाभिचष्टे सत्याय हव्यं घृतवज्जुहोत ॥

इति जुहुयात् ॥ ८ ॥ ततोऽन्यां दुग्ध्वा पुनर्जुहुयात् ॥ ९ ॥ यदि पूर्वस्यामाहुत्याँ हुतायामुत्तराहुतिः स्कन्देत् पूर्वां वोत्तरयाभिजुहुयात्

यत्र वेत्थ वनस्पते देवानां गुह्या नामानि।
तत्र हव्यानि गामय ॥

इति वानस्पत्ययर्चा समिधमाधाय तूष्णीमेव पुनर्जुहुयात् ॥ १० ॥ ततोऽन्यां[5]

---

1. $A_1$,$B_{1,2}$ °दायं
2. $B_2$ °नास्य
3. $A_1$,$B_2$ °दायं; $B_3$ संपादय
4. Thus $B_3$; $A_1$ °र्द्रुतमग्नि°; $A_{2-3}$ यद्युद्रुमग्नि°; $B_{1,2}$ यद्यमृतमग्नि°
5. $B_2$ omitted

दुग्ध्वा पुनर्जुहुयात् ॥ ११ ॥ यदि पूर्वस्यामाहुत्यां हुतायामाहवनीय उद्वायेदन्तमे[1] शकले हिरण्यं निधायाभिजुहुयात्[1] अग्निर्दारौ दारावग्निरगात् स्वाहा इति ॥ १२ ॥ ॥३॥

यदि पुरा प्रयाजेभ्यो बहिःपरिध्यङ्गारः स्कन्देत् तं स्रुवस्य बुध्नेनाभिनिदध्यात्

मा तमो मा यज्ञस्तमन्मा यजमानस्तमत् ।
नमस्ते अस्त्वायते नमो रुद्र परायते नमो यत्र निषीदसि ॥

अध्वर्युं मा हिँसीर्यजमानं मा हिँसीः इति यदि पुरस्तात् । ब्रह्माणं मा हिँसीर्यजमानं मा हिँसीः इति यदि दक्षिणतः । होतारं मा हिँसीः पत्नीं मा हिँसीर्यजमानं मा हिँसीः इति यदि पश्चात् । आग्नीध्रं मा हिँसीः पशून् मा हिँसीर्यजमानं मा हिँसीः इति यद्युत्तरतः ॥ १ ॥ अथैनमनुप्रहरति

सहस्रशृङ्गो वृषभो जातवेदाः स्तोमपृष्ठो घृतवान् सुप्रतीकः ।
मा नो हासीन्मेथितो नेत्त्वा जहाम गोपोषं नो वीरपोषं च यच्छ ॥

इति ॥ २ ॥ प्रहृत्याभिजुहुयादित्येकेषाम् ॥ ३ ॥ येन स्कन्देत् तेन प्रहरेत् ॥ ४ ॥ यद्याहिताग्नेरग्निर्मथ्यमानो न जायेत

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती[2] जनयन्त प्रशस्तम् ।
दूरेदृशं गृहपतिमथर्युम्[3] ॥

इत्यभिमन्त्र्य यत्रान्यं पश्येत् तत आहृत्य[4] विहृत्य[4] जुहुयात् ॥ ५ ॥ ततोऽत्वरमाणः पुनर्मन्थेत् ॥ ६ ॥ यद्यन्यं न विन्देदजायै दक्षिणे कर्णे जुहुयात् ॥ ७ ॥ अजस्य तु ततो नाश्नीयात् ॥ ८ ॥ यद्यजां न विन्देद् ब्राह्मणस्य दक्षिणे हस्ते जुहुयात् ॥ ९ ॥ ब्राह्मणं तु वसत्यै नापरुन्ध्यात् ॥ १० ॥ यदि ब्राह्मणं न विन्देद् दर्भस्तम्बे जुहुयात् ॥ ११ ॥ दर्भाँस्तु नाध्यासीत ॥ १२ ॥ ॥४॥

यदि दर्भान्न विन्देदप्सु जुहुयात् ॥ १ ॥ आपस्तु[5] न परिचक्षीतेमा भोजनीया इमा अभोजनीया इत्याश्मरथ्यः । अप्यभोजनीयस्यैतं संवत्सरं परि-

---

1–1. Rudradatta on ĀpŚS IX.2.8 : तथोत्तमे शकले हिरण्यं निधायेत्येव भारद्वाजः ।
2. Thus A$_1$,B; A$_{2-5}$,R °च्युतं
3. B$_1$,R °मथ जुहोमि
4–4. Thus A,B$_{1,3}$; B$_2$,R आहृत्याहृत्य
5. R अपस्तु; cf. TBr. III.7.3.4.

गृह्णीयादेवाप इत्यालेखनः ॥ २ ॥ अद्भिस्तु न[1] पादौ[1] प्रक्षालयीतेत्येकेषाम् ॥ ३ ॥ संवत्सरादग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् ॥ ४ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ५ ॥ यद्याहिताग्नेरन्यैरग्निभिरग्नयः सँसृज्येरन् मिथो वाग्नये विविचये पुरोडाशमष्टाकपालं निर्वपेत् ॥ ६ ॥ ततो व्रतपतये ॥ ७ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ८ ॥ यद्याहिताग्नेरग्निर्गृहान् दहेदग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत् ॥ ९ ॥ ततो व्रतपतये ॥ १० ॥ सिद्धमिष्टिः संतिष्ठते ॥ ११ ॥ अथ यद्यग्न्यादाहेन सँसृज्येरन् विविचये निरुप्य[2] शुचये[2] निर्वपेत् ॥ १२ ॥ ततो व्रतपतये ॥ १३ ॥ सिद्धमिष्टिः संतिष्ठते ॥ १४ ॥ अथ यदि वैद्युतेन सँसृज्येरन्नग्नयेऽप्सुमते पुरोडाशमष्टाकपालं निर्वपेत् ॥ १५ ॥ ततो व्रतपतये ॥ १६ ॥ सिद्धमिष्टिः संतिष्ठते ॥ १७ ॥ अथ[3] यदि शवाग्निना सूतकाग्निना वा सँसृज्येरन्नग्नये संकुसुकाय[4] पुरोडाशमष्टाकपालं निर्वपेत् ॥ १८ ॥ ततो व्रतपतये ॥ १९ ॥ सिद्धमिष्टिः संतिष्ठते ॥ २० ॥ अथ यदि सर्वाणि संनिपतेयुः क्षामवतीमन्ते[5] कुर्यात् ॥ २१ ॥ यद्यग्निहोत्रस्थाली स्रवेत् तामभिमन्त्रयेत

गर्भं[6] स्रवन्तमगदमकरग्निरिन्द्रस्त्वष्टा बृहस्पतिः ।
पृथिव्यामवचुश्चोतैतन्नाभिप्राप्नोति निर्ऋतिं पराचैः ॥

इति ॥ २२ ॥ स्कन्नमपोऽभ्यवहरेत् ॥ २३ ॥ ॥५॥

यद्यनभिश्रितं[6] स्याद्वैष्णव्यानुमन्त्रयेत ॥ १ ॥ यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान् विभजेत् । ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं कुर्यात् । ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधँश्चरुम् । येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम् ॥ २ ॥ अनिरुप्ताभ्युदिते कतमाभ्यो देवताभ्यो निर्वपेत् । प्राकृतीभ्य इत्याश्मरथ्यो वैकृतीभ्य इत्यालेखनः ॥ ३ ॥ सेयं[7] नासंनयतो विद्यत इत्येकम् । विद्यत इत्यपरम् ॥ ४ ॥ अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्णमासयाजी सन्नमावास्यां वा[8] पौर्णमासीं वातिपादयेत् ॥ ५ ॥ पथोऽन्तिकाद्बर्हिराहरेत् ॥ ६ ॥ अनड्वान् दक्षिणा ॥ ७ ॥ सिद्धमिष्टिः संतिष्ठते

1. $B_3$ पादौ न
2-2. $A_{3-5}$ omitted
3. $B_2$ omitted
4.
5.
6.
7. Rudradatta on Apś [illegible] this sutra with पोऽयं for सेयं.
8. Thus $A_{1,2}, B_{2,3}$; $A_{3,4,5}$, R omitted

॥ ८ ॥ अथैकेषां विज्ञायते वि वा एतस्य यज्ञश्छिद्यते यस्य यज्ञे व्रतत एतामन्तरेष्टिं निर्वपति । य एवासावाग्नेयोऽष्टाकपालः पौर्णमासे[1] योऽमावास्यायां तमग्नये[2] पथिकृते कुर्यात् । तेनैव पुनः पन्थामवैति न यज्ञं विच्छिनत्ति ॥ ९ ॥ अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद् यद्याहिताग्निः प्रवसन् पर्वणि माँसं व्राश्नीयात् स्त्रियं वोपेयात् ॥ १० ॥ व्रतभृत एके समामनन्ति ॥ ११ ॥ एतामेव निर्वपेद् यद्याहिताग्निरश्रु कुर्यात् ॥ १२ ॥ यथा[3] कथा च कुर्यात्[3] प्रायश्चित्तमेव[4] स्यादित्याश्मरथ्यः । आर्त्विजमेव कुर्यादित्यालेखनः ॥ १३ ॥ ॥६॥

यद्यग्निहोत्र्युपसृष्टा निषीदेत् तामुत्थापयेत्
उदस्थाद् देव्यदितिर्विश्वरूप्यायुर्यज्ञपतावधात् ।
इन्द्राय कृण्वती भागं मित्राय वरुणाय च ॥

इति ॥ १ ॥ तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यान्नं नाद्यात् ॥ २ ॥ अथ यदि स्पन्देतान्यां दुह्यात् ॥ ३ ॥ यदि दुह्यमानँ स्कन्देत् तदनुमन्त्रयेत

यदद्य दुग्धं पृथिवीमसृक्त यदोषधीरत्यसरद्यदापः ।
पयो गृहेषु पयो अघ्नियासु[5] पयो वत्सेषु पयो अस्तु तन्मयि ॥

इति ॥ ४ ॥ अथैनदद्भिरुपसृजति समुद्रं वः प्र हिणोमि इत्येतया ॥ ५ ॥ तदेव यादृक्कीदृक् च हुत्वाथान्यां[6] दुग्ध्वा पुनर्जुहुयात् ॥ ६ ॥ यदि दुग्धँ स्कन्देद्यद्यभिश्रितं यदि विष्यन्देताभिदुह्य जुहुयादित्याश्मरथ्यः । तदेव यादृक्कीदृक् च हुत्वाथान्यां[6] दुग्ध्वा पुनर्जुहुयादित्यालेखनः ॥ ७ ॥ यद्युन्नीयमानँ[7] स्कन्देद् यद्युन्नीतं यदि पुरः[8] पराहृतँ होमायाभिदुह्य जुहुयादित्याश्मरथ्यः । तदेव यादृक्कीदृक् च हुत्वाथान्यां दुग्ध्वा पुनर्जुहुयादित्यालेखनः[7] ॥ ८ ॥ यद्युद्द्रुतस्य स्कन्देद्यत्र स्कन्देत् तन्निपद्य पुनर्गृह्णीयात् । तदेव यादृक्कीदृक् च हुत्वाथान्यां दुग्ध्वा पुनर्जुहुयात् ॥ ९ ॥ ॥७॥

---

1. $B_2$ °मार्था; $B_3$ °मास्या
2. $A, B_1$ अग्नये
3-3. $A_{2-5}$ omitted; $B_1$ यदा कदा च कुर्यात्
4. $A_{3-5}$ °चित्तिमेव
5. $A_{1,2}$ अघ्नीयासु; $B_2$ अघ्न्यासु
6-6. Thus $B_2$; $A_1$ यादृक् कीदृग्वा भुक्त्वाथान्यां; $B_1$ यादृक् कीदृक्च हुत्वा; R यादृकीदृग्घुत्वाथान्यां
7-7. $A_1$ omitted
8. $B_{1,2}$ पुनः

यदि सकृदुन्नीतं स्कन्देद्यदि द्विर्यदि त्रिर्न तदाद्रियेतेति विज्ञायते ॥ १ ॥ कृत्स्नानामग्निहोत्राणां पादमाश्मरथ्य ऊचे सुवादमित्यालेखनः ॥ २ ॥ यदि चतुर्थं स्कन्देत् स्थाल्यां शेषमानीय ततश्चतुर्गृहीतं[1] गृहीत्वा[1] जुहुयात् । अपि वाज्यस्य वारुणीमृचमनूच्य वारुण्यर्चा जुहुयात् ॥ ३ ॥ अथैकेषाम् । यदि दुह्यमानामभिन्द्यादन्यां निर्णिज्य दोह्या ॥ ४ ॥ यदि दुग्धमन्याभिदोह्या[2] । यद्यभिश्रितमन्याभिदोह्या[3] । यदि विष्यन्देतान्याभिदोह्या । यद्युन्नीयमानमन्याभिदोह्या[4] । यद्युन्नीतं[5] पुनः प्रत्यवनीयान्याभिदोह्या[5] ॥ ५ ॥ यदि प्राचीनं ह्रियमाणं प्रजापतेर्विश्वभृति तन्वं[6] हुतमसि स्वाहा इत्यभिमृशेत् । आज्यस्य वारुणीमृचमनूच्य वारुण्यर्चा जुहुयात् ॥ ६ ॥ यदि लोहितं दुहीतान्यद्वा[7] विवर्णमन्वाहार्यपचनं परिश्रित्य अग्नये रुद्रवते स्वाहा इति जुहुयात् ॥ ७ ॥ यदि शिलिशिलीभवेत्[8] समोप्यासुम् इति ब्रूयाद्यं द्विष्यात् ॥ ८ ॥ यदि सायमाहुतौ स्कन्देदा प्रातराहुतेर्नाश्नीयात् । यदि प्रातराहुतौ स्कन्देदा सायमाहुतेर्नाश्नीयात् ॥ ९ ॥ ॥८॥

यस्याग्निहोत्रेऽधिश्रिते श्वान्तराग्नी धावेद्गार्हपत्याद्भस्मादाय इदं विष्णुर्वि चक्रमे इति वैष्णव्यर्चाहवनीयाद् ध्वंसयन्नुद्द्रवेत् ॥ १ ॥ भस्मना शुनः पदमपिवपति ॥ २ ॥ एतदेव सूकरैकसृके[9] विद्यात् ॥ ३ ॥ यस्याग्निमनुद्धृतं सूर्योऽभिनिम्रोचेद्दर्भेण हिरण्यं प्रबध्य पूर्वः प्रतिपद्येत ॥ ४ ॥ अन्वग्वा ब्राह्मण आर्षेयो बहुविदग्निमुद्धरेत् । अन्वगग्निहोत्रेणानूद्द्रवेत् ॥ ५ ॥ प्रतिष्ठाप्याग्निमग्निहोत्रमुपसाद्य तमितोरप्राणमासित्वा हुत्वा वरं दत्त्वा भूः इत्युपतिष्ठेतेत्याश्मरथ्यः । भूर्भुवः सुवः इत्यालेखनः ॥ ६ ॥ अनाधानेतां रात्रिमुपवसति ॥ ७ ॥ श्वो भूते[10] वारुणं दशकपालं निर्वपति । चरुमित्येकेषाम् ॥ ८ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ९ ॥ यदि सायमग्निहोत्रस्यर्तुमतिनयेत् दोषा वस्तोर्नमः स्वाहा इति जुहुयात्[11] ॥ १० ॥ एतदेव नित्यमग्निहोत्रमित्याश्मरथ्यः । अथालेखनः[11] । कालसमापादनीयमेवैतेन

---

1-1. Thus $B_3$; $A_1$,$B_{1,2}$,R °र्गृहीतमाज्यं गृहीत्वा; $A_{2-5}$ °र्गृहीत्वा

2. $A_1$,$B_2$ °मन्याद्दि°

3. A,$B_1$ यद्यधि°

4. $A_{2-5}$ यदि दुह्य°

5-5. $A_{2-5}$ omitted

6. $B_2$ तन्वां; $B_3$ तन्वा

7. Thus $B_3$; $A_2$ दुहीतन्य°; $A_3$ दुहीतन्य°; $A_{4,5}$ दुह्यादन्यद्वा; $B_1$ दुहीतान्यद्वा

8. $A_1$ शिलिली°; $B_3$,R शिलिशिला°

9. $A_1$ सूकरैसके; $B_2$ सूकरैसके; $B_{1,3}$ सूकरैसके

10. Rudradatta on ApSS IX.7.1 : श्वो भूत इति भारद्वाजः ।

11-11. $A_{2-5}$ omitted

मन्त्रेण होमं[1] हुत्वा नित्यमग्निहोत्रं जुहुयात्[2] ॥ ११ ॥ तत्र स एव होमकल्पः ॥ १२ ॥ एतावन्नाना। भूर्भुवः सुवः इति पुरा होतोर्वदेत् ॥ १३ ॥ यदि प्रातरग्निहोत्रस्यर्तुमतिनयेत् प्रातर्वस्तोर्नमः स्वाहा इति जुहुयात् ॥ १४ ॥ एतदेव नित्यमग्निहोत्रमित्याश्मरथ्यः। अथालेखनः। कालसमापादनीयमेवैतेन मन्त्रेण होमं हुत्वा नित्यमग्निहोत्रमुपसाद्य तमितोरग्राणमासित्वा वरं दत्त्वा हुत्वा भूर्भुवः सुवः इत्युपतिष्ठेत ॥ १५ ॥ अनुगमयित्वाहवनीयमन्यं[3] प्रणयेत् अन्वग्निरुषसामग्रमख्यत् इति ॥ १६ ॥ अथैनमभिमन्त्रयते इहैव क्षेम्य एधि मा प्रहासीन्मामनुमामुष्यायणम् इति ॥ १७ ॥ ॥९॥

ततो मैत्रं चरुं निर्वपेत् सौर्यमेककपालम् ॥ १ ॥ सिद्धमिष्टिः संतिष्ठते ॥ २ ॥ तस्यां संस्थितायां वाग्यतावेतदहरनश्नन्तौ जायापती अग्निमिन्धानावासाते ॥ ३ ॥ श्वोभूते पयसा सायमग्निहोत्रं जुहुयात् ॥ ४ ॥ श्वोऽग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेत् ॥ ५ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ६ ॥ यस्याग्निमनुद्धृतं सूर्योऽभ्युदियाच्चतुर्गृहीतमाज्यं गृहीत्वा पूर्वः[4] प्रतिपद्येत ॥ ७ ॥ अन्वङ् ब्राह्मण आर्षेयो बहुविदग्निमुद्धरेत्। अन्वङ्ङग्निहोत्रेणानूद्द्रवेत् ॥ ८ ॥ प्रतिष्ठाप्याग्निमग्निहोत्रमुपसाद्य पुरस्तात्प्रत्यङ्ङुपविश्यैतेनाज्येन जुहुयात्

उषाः केतुना जुषतां यज्ञं[5] देवेभिरन्वितम्।
देवेभ्यो मधुमत्तमं[5] स्वाहा ॥

इति ॥ ९ ॥ ततो नित्यमग्निहोत्रं[6] जुहुयात् ॥ १० ॥ तत्र स एव होमकल्पः ॥ ११ ॥ स प्रायश्चित्तो यः प्रातर्कृतातिनीतः ॥ १२ ॥ एतावन्नाना। नात्राहवनीयमनुगमयति ॥ १३ ॥ अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेत् ॥ १४ ॥ सिद्धमिष्टिः संतिष्ठते ॥ १५ ॥ ॥१०॥

अथैकेषाम्। यस्याग्निमनुद्धृतं सूर्योऽभिनिम्रोचेदभ्युदियाद् वा मनो ज्योतिर्जुषताम् ॥ त्रयस्त्रिँशत्तन्तवः इति द्वे चतुर्गृहीते जुहुयात् ॥ १ ॥ यद्यनस्तमिते जुहुयात् पुनरेवास्तमिते हुत्वा मयि त्वं नः समनसौ इत्युपतिष्ठते ॥ २ ॥ यदि महारात्रे

1. $A_{2-5}$,$B_3$ omitted
2. Rudradatta on ĀpSS IX.7.3 cites sūtra 10 beginning with दोषा. He also cites sūtra 11 where he reads यनेन for एतेन.

3-3. Thus $B_{2,3}$; $A_1$,$B_1$ तानुगमइत्वा°; $A_{2-5}$ तानुगयत्वा°; R °तिष्ठेत ॥ १५ ॥ तानुगमयित्वा°
4. Thus $B_3$; A,R पूर्वं; cf. IX.9.4

5-5. $B_2$ omitted
6. $B_3$ नित्यं omitted

जुहुयात् पुनरेवौपसँ हुत्वा पूर्ववदुपतिष्ठेत ॥ ३ ॥ यस्यानुदितहोमेऽभिप्रेतेऽग्नि-
होत्रमहुतँ सूर्योऽभ्युदियाद्[1] यद्यन्ते स्यादुन्नीय प्राङ्ङुदाद्रवेत् ॥ ४ ॥ स[2] उपसाद्या[2]
तमितोरासीत ॥ ५ ॥ स यदा ताम्येदथ भूः स्वाहा इति जुहुयात् ॥ ६ ॥ यस्या-
हवनीयेऽनुद्धाते गार्हपत्य उद्धायेदनुगमयित्वाहवनीयं गार्हपत्यस्यावक्षाणानि संनिधाय
मन्थेत् इतः प्रथमं जज्ञे अग्निः इत्येतया ॥ ७ ॥ अथैनमभिमन्त्रयते इषे रय्यै रमस्व
सहसे द्युम्नायोर्जेऽपत्याय इति ॥ ८ ॥ आहवनीयं प्रणीयोपसमिन्द्धे सारस्वतौ त्वोत्सौ
समिन्धाताम्। सम्राडसि विराडसि[3] इति ॥ ९ ॥ ततोऽग्नये तपस्वते जनद्वते पावक-
वतेऽष्टाकपालं निर्वपेत् ॥ १० ॥ सिद्धमिष्टिः संतिष्ठते ॥ ११ ॥ एतदेव गार्हपत्ये
धारयत्याहवनीयेऽनुगते[4] प्रायश्चित्तम् ॥ १२ ॥ एतावन्नाना। नात्र गार्हपत्य-
मनुगमयति। अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेच्च तपस्वते ॥ १३ ॥
सिद्धमिष्टिः संतिष्ठते ॥ १४ ॥ ॥११॥

यदि सायमहुतेऽग्निहोत्रे पूर्वोऽग्निरनुगच्छेदग्निहोत्रमधिश्रित्योन्नीयाग्निना
पूर्वेणोद्द्रुत्यान्वङ्ङग्निहोत्रेणानुद्रवेत्[5] ॥ १ ॥ यो ब्राह्मणो बहुवित् सोऽग्निमुद्धरेत्
॥ २ ॥ यत् पुरा धनमदायी स्यात्तद्द्यात् ॥ ३ ॥ एतदेव प्रातः ॥ ४ ॥ यदि
प्रातरहुतेऽग्निहोत्रेऽपरोऽग्निरनुगच्छेदनुगमयित्वा पूर्वं मथित्वापरमुद्धृत्य जुहुयाद्
यदि न त्वरेत ॥ ५ ॥ अथ यदि त्वरेत पूर्वमग्निमन्ववसाय ततः प्राञ्चमुद्धृत्य
जुहुयात् ॥ ६ ॥ जामि तु तद् योऽस्य पूर्वोऽग्निस्तमपरं करोति। अन्यत्रैवाव-
सायाग्निं[6] मथित्वोद्धृत्य जुहुयात्। ततोऽग्नये तपस्वते जनद्वते पावकवतेऽष्टाकपालं
निर्वपेत् ॥ ७ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ८ ॥ यदि सायमहुतेऽग्निहोत्रेऽपरोऽग्निरनु-
गच्छेत् पूर्वमग्निमन्ववसाय तत एव प्राञ्चमुद्धृत्य जुहुयात् ॥ ९ ॥ अथाभिमन्त्रयते

इत एव प्रथमं जज्ञे[7] अग्निराभ्यो[7] योनिभ्योऽधि[8] जातवेदाः।
गायत्र्या त्रिष्टुभा जगत्यानुष्टुभा च देवेभ्यो हव्यं वह नः प्रजानन् ॥

---

1. *Subodhinī* on BaudhŚS III.4 cites this sūtra up to अभ्युदियात् verbatim.
2-2. $A_{2-5}$ स उपसद्या; $B_2$ संसाद्या
3. $A_{2-5}$,R omitted
4. $A_{2-5}$ °नीयानु°; R धारयति ॥ १२ ॥ आहवनीयेऽनुगते प्रायश्चित्तम् ॥ १३ ॥ One expects धार्यमाणे in place of धारयति.
5. Thus $A_1$; $A_{2-5}$,R पूर्वेणोद्धृत्य; $B_2$ पूर्वेणाद्धृत्य
6-6. $A_1B_1$ अन्यत्रैवावसाय
7-7. $B_2$ जज्ञेग्नि
8. $B_{2,3}$ योनिभ्यो अधि

इषे रय्यै रमस्व सहसे द्युम्नायोर्जेऽपत्याय इति रमयत्येनं। सम्राडसि[1] सुषदा सीद इति सुषदैवैनं सादयति ॥ १० ॥ ॥१२॥

सारस्वतौ त्वोत्सौ प्रावताम् इति। ऋक्सामे वै सारस्वतावुत्सौ। ताभ्यामेवैनं प्रावति ताभ्यां समर्धयति[2] ॥ १ ॥ अग्नये[2] ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद् वारुणं यवमयं चरुम् ॥ २ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ३ ॥ अथैकेषाम्। यद्यहुतेऽग्निहोत्रेऽपरोऽग्निरनुगच्छेत् तेभ्य एवावक्षाणेभ्यो मन्थितव्यः ॥ ४ ॥ अथ यदि न तादृशानीवावक्षाणानि[3] स्युर्भस्मनारणी सँस्पर्श्य[4] मन्थितव्यः। स्वादेवैनं योनेर्जनयतीति विज्ञायते ॥ ५ ॥ ततोऽग्नये तपस्वते जनद्वते पावकवतेऽष्टाकपालं निर्वपेत् ॥ ६ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ७ ॥ अथैकेषाम्। यतरोऽग्निरनुगच्छेत् तेभ्य एव दारुभ्योऽधिमन्थितव्यः[5] ॥ ८ ॥ अथ यदि तृणैधः शकैधो वा स्याद् भस्मनारणी सँस्पर्श्य[6] मन्थितव्यः। स्वादेवैनं योनेर्जनयतीति विज्ञायते ॥ ९ ॥ ततोऽग्नये तपस्वते जनद्वते पावकवतेऽष्टाकपालं निर्वपेत् ॥ १० ॥ सिद्धमिष्टिः संतिष्ठते ॥ ११ ॥ न वानुगतेष्टिं कुर्यात् ॥ १२ ॥ एता एवाहुतीर्जुहुयात्[7]. मित्राय स्वाहा ॥ वरुणाय स्वाहा ॥ सूर्याय स्वाहा ॥ अग्नये स्वाहा ॥ अग्नये व्रतपतये स्वाहा ॥ अग्नये तपस्वते जनद्वते पावकवते स्वाहा ॥ अग्नये शुचये स्वाहा ॥ अग्नये ज्योतिष्मते स्वाहा इति ॥ १३ ॥ व्याहृतीभिर्जुहोत्येकैकशः[8] समस्ताभिश्च ॥ १४ ॥ ॥१३॥

अग्नये तन्तुमते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निहोत्रं विलुप्येत ॥ १ ॥ आग्नावैष्णवमेकादशकपालं निर्वपेद्यमन्यस्याग्निषु याजयेयुर्यो वान्यस्याग्निषु यजेत ॥ २ ॥ अग्नयेऽग्निवते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नावग्निमभ्युद्धरेयुः ॥ ३ ॥ त्रयस्त्रिँशत्तन्तवः इत्येतया जुहुयाद्यस्याग्निहोत्रेऽधिश्रिते हविषि वा निरुप्ते पुरुषो वा श्वा वानो वा रथो वान्तराग्नी वीयादिति[9] विज्ञायते ॥ ४ ॥ यस्यानो[10] वा

1. $A_1$,$B_3$ सम्राडसि स्वराडसि
2-2. Thus $B_{2,3}$; $A_1$ समुद्धयेत्य°; $A_{2-5}$,$B_1$ समुद्धयत्य°
3. A,$B_1$ °नि वाव°; $B_2$ °नि वावाव°; $B_3$ °निवाव°
4. Thus $A_{1-5}$; $A_1$ संस्पश्य; B संस्पृश्य
5. $A_{2-5}$ अवक्षाणेभ्यो; Cited verbatim by Mahādeva on SatS XV.3.1, 11 and by Rudradatta on ĀpŚS IX.9.11 and IX.9.1.
6. Thus $A_{2-5}$; $A_1$,B संस्पृश्य
7. $A_{2-5}$ आहुती°
8. R व्याहृतिभिर्जुहोतीत्ये°
9. $A_{2-5}$,$B_1$ वियादिति
10. Rudradatta on ĀpŚS IX.10.17 and Mahādeva on SatS XV.3.27 cite sūtras 5 and 6 with यद्यनो for यस्यानो वा रथो.

रथो वान्तराग्नी वीयादित्येकेषाम्[1] ॥ ५ ॥ न कालमवधारयति ॥ ६ ॥ ततोऽत्रापोऽन्वतिषिच्य[2] ग्राममन्वत्यावर्तयेत् ॥ ७ ॥ इदं विष्णुर्वि चक्रमे इति पदँ संलोपयेत् ॥ ८ ॥ अनुगमयित्वाहवनीयमन्यं प्रणयेत्

यदग्ने पूर्वं प्रभृतं पदँ हि ते सूर्यस्य रश्मीनन्वाततान ।
तत्र रयिष्ठामनुसंभरैतँ सं नः सृज सुमत्या वाजवत्या ॥
त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः ।
त्वया यज्ञं वितन्वते ॥

इति ॥ ९ ॥ ततोऽग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् ॥ १० ॥ पथोऽन्तिकाद्बर्हिराहरेत् ॥ ११ ॥ अनड्वान् दक्षिणा ॥ १२ ॥ सिद्धमिष्टिः संतिष्ठते ॥ १३ ॥ एतामेव निर्वपेत् स्तोत्रे मूढे[3] । एतां शस्त्रे[3] ॥ १४ ॥ एतां यस्याग्निनाग्नीन् व्यवेयुः[4] ॥ १५ ॥ एतां जने प्रमीतस्य ॥ १६ ॥ जनयतु[5] खलु प्रमीतस्येति विज्ञायते ॥ १७ ॥ अभिवान्यवत्साया अस्य[6] पयसाग्निहोत्रं जुहुयुरा[7] यावदस्याग्निभिः शरीराणि सँस्पर्शयेयुः ॥ १८ ॥ ॥ १४ ॥

दक्षिणाप्रागग्रैर्दर्भैरग्नीन् परिस्तृणाति ॥ १ ॥ अधस्तात् समिधं धारयन्नुद्द्रवति ॥ २ ॥ सोमं पितृमन्तं पूर्वस्यामाहुत्यामुपलक्षयत्यग्निं कव्यवाहनमुत्तरस्याम् ॥ ३ ॥ पात्रनिर्णेजनमुदकं दक्षिणा प्रसिञ्चेयुः ॥ ४ ॥ ब्राह्मणाय यज्ञायुधानि दद्युः ॥ ५ ॥ अपोऽभ्यवहरेयुः ॥ ६ ॥[8] अमैव[8] पुत्रस्य दृषत् स्यादायसं च ॥ ७ ॥ यस्याज्यमनुत्पूतँ स्कन्देच्छिन्दत् प्राणि दद्यात् ॥ ८ ॥ यद्युत्पूतं यदस्य गृहेषु[9] चित्रं धनं[10] तद्दद्यात् ॥ ९ ॥ एतदेवैकेषां विपरीतवत् । अनुत्पूते

1. $A_{2-5}$,$B_1$ वियादि°
2. $B_2$ °न्वव°
3-3. Thus $B_3$; $A_1$ मूढ एतां शस्त्र; $A_{2-5}$,R मूढे; $B_1$ मूढ एते शस्त्र; $B_2$ मूढत
4. $B_3$ सपेयुः; R व्यवेयुः
5. $B_3$ जनयितुं; जने तु ?
6. $A_{2-5}$ omitted
7. $B_3$ आ omitted
8. In [illegible] sūtra 6 ends with अमैव. Rudradatta on ĀpŚS IX.11.14 and Mahādeva on SatS XV.3.34 cite this sūtra verbatim except the initial अमैव.
9. $A_{2-5}$,R गृहे
10. Rudradatta on ĀpŚS IX.13.2 and Mahādeva on SatS XV.4.3 : तथा चित्रं धनमित्येव भारद्वाजः ।

चित्रमुत्पूते छिन्दत् ॥ १० ॥ अथ यदि[1] स्रुग्गतं स्कन्देत् यत्र[2] स्कन्देत्[2] तत् प्राश्चं प्रादेशं निदध्यात् भूपतये[3] स्वाहा इति । भुवनपतये स्वाहा इति दक्षिणाप्राश्चम्[4] । भूतानां पतये स्वाहा इति प्रत्यश्चम् । भूताय स्वाहा इत्युदश्चम् ॥ ११ ॥ अथैनत् संसिञ्चेदित्याश्मरथ्यः । सं त्वा सिञ्चामि इत्येतयानुमन्त्रयेतेत्यालेखनः ॥ १२ ॥ भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहा इति स्कन्नमनुमन्त्रयेतेत्येकेषाम्[5] ॥ १३ ॥ न किं चन हविरधिकृत्य वदति[5] ॥ १४ ॥ देवाञ्जनमगन् यज्ञस्तस्य माशीरवतु इत्येनदभिमन्त्रयेतेत्येकेषामाज्यादनन्तरं वदति[6] ॥ १५ ॥ यदि प्रणीताः स्कन्देयुः आपो हि ष्ठा मयोभुवः इति तिसृभिर्गृहीत्वा ततं म आपः इत्याहुतिं जुहुयात् ॥ १६ ॥ ॥१५॥

यदि कपालं भिद्येत तत् संदध्यात् गायत्र्या त्वा शताक्षरया संदधामि इति ॥ १ ॥ अथैनदपोऽभ्यवहरेत् अभिन्नो घर्मो जीरदानुः[7] इति ॥ २ ॥ तत एतामाहुतिं जुहोति त्रयस्त्रिंशत् तन्तवः इत्येतया ॥ ३ ॥ ततोऽन्यत् कपालं संस्कृत्य कपालेष्वपिसृजेत् घर्मो देवाँ अप्येतु इति ॥ ४ ॥ इति वै खलु यदि प्रागुपधानाद् भिद्येत ॥ ५ ॥ अथ यद्युपहितानामेतेनैव मन्त्रेणोपदध्यात् ॥ ६ ॥ यदि कपालं नश्येदाश्विनं द्विकपालं निर्वपेद् द्यावापृथिव्यमेककपालम् ॥ ७ ॥ भार्गवो होता भवति । एकहायनो दक्षिणा[8] ददातीति विज्ञायते ॥ ८ ॥ यथा कथा[9] च नश्येत् प्रायश्चित्तमेव स्यादित्याश्मरथ्यः । उपयुक्तानां प्राग्निमोकादित्यालेखनः ॥ ९ ॥ यदि पत्नीः संयाजयन्[10] कपालमभिजुहुयात् वैश्वानरं द्वादशकपालं निर्वपेत् ॥ १० ॥ सिद्धमिष्टिः[11] संतिष्ठते ॥ ११ ॥ एतामेव निर्वपेदमावास्यां पौर्णमासीं वातिपाद्य ॥ १२ ॥ एतां यदनिष्ठाग्रयणेन नवमश्नीयात् ॥ १३ ॥

---

1. A omitted
2–2. Thus $B_3$; A,$B_1$,R omitted
3. $A_4$,$B_2$ भूतपतये
4–4. $B_2$ omitted
5. Rudradatta on ĀpŚS IX.13.7 cites sūtra 13 excluding भुवनपतये... स्वाहा and also sūtra 14 verbatim.
6. Rudradatta on ĀpŚS IX.13.5 : तथा देवाञ्जनमगन् यज्ञ इत्येतदभिमन्त्रयेतेत्येकेषामित्येव भारद्वाजः ।
7. $B_2$ omitted
8. $A_1$ दक्षिणं; $B_{2,3}$ °णां
9–9. $A_{2-5}$ omitted
10. Thus $B_{2,3}$; A,R संयाजयिष्यन्; $B_1$ संयोजयिष्यन्
11. Here begins a lacuna in $B_2$ which ends with ब्राह्मणेभ्यो in IX.18.6.

यस्य यमौ जायेयातां गावौ वा पुरुषौ वा वैश्वानरं द्वादशकपालं निर्वपेत् ॥ १४ ॥ तस्य त्रिष्टुभौ याज्यानुवाक्ये भवतो जगत्यौ वा ॥ १५ ॥ रौद्रं वास्तुमयं चरुं निर्वपेद्यस्य रुद्रः पशून् शमायेत[1] ॥ १६ ॥ तया निषादस्थपतिं याजयेत् ॥ १७ ॥ कृष्णाजिनं वा कूटं वाकर्णो वा गर्दभो हरिणो वा हरिणपृणाका[2] वा शरुकश्यामाकयात्रौ[3] वा द्वे वा कम्बुशूर्पे[4] दक्षिणेति विज्ञायते ॥ १८ ॥ ॥१६॥

यो ब्रह्मचारी स्त्रियमुपेयात् स रौद्रं गर्दभमालभेत ॥ १ ॥ तस्यावदानैरप्सु प्रचरन्ति ॥ २ ॥ नास्य वपया चरन्ति[5] न पशुपुरोडाशो भवति ॥ ३ ॥ इडान्तो भवति शंयुवन्तो[6] वा ॥ ४ ॥ नैर्ऋतः प्राजापत्यो वा ॥ ५ ॥ यस्य हविः क्षायति तं यज्ञं निर्ऋतिर्गृह्णाति ॥ ६ ॥ यदुच्छिष्टं स्यात् तेन शेषं सँस्थापयेत् ॥ ७ ॥ यज्ञो हि यज्ञस्य प्रायश्चित्तिः[7] ॥ ८ ॥ यं द्विष्यात् तस्मै तां दक्षिणां दद्यात् ॥ ९ ॥ यथा कथा च क्षायेत् प्रायश्चित्तमेव स्यादित्याश्मरथ्यः। यद्यवदानेभ्यो न प्रभवेदित्यालेखनः ॥ १० ॥ अपो दुष्टं हविरभ्यवहरन्तीति विज्ञायते[8] ॥ ११ ॥ यद्यप्रत्तदैवतँ हविर्व्यापद्येतापस्तदभ्यवहृत्यान्यत् तद्दैवतँ हविर्निर्वपेत् ॥ १२ ॥ तत्र स्रुगादानप्रभृतयो मन्त्रा अभ्यावर्तेरन्[9] ॥ १३ ॥ अथ यदि प्रत्तदैवतमाज्येन शेषँ सँस्थापयेदित्येकम्। तूष्णीकँ हविरभ्युदाहरेदित्यपरम् ॥ १४ ॥ ॥१७॥

अथ यदि सर्वाण्येव हवींषि नश्येयुर्वा[10] दुष्येयुर्वाज्येनैनानि[11] प्रतिसंख्याय तयाज्यहविषेष्ट्या यजेत ॥ १ ॥ अतोऽन्यामिष्टिमनुल्बणां तन्वीत ॥ २ ॥ यज्ञेन हि यज्ञस्य प्रायश्चित्तिं कुर्वन्तीति विज्ञायते ॥ ३ ॥ कथं दुष्टं हविर्विद्यात्।

---

1. $A_1$ छमाधीत; $B_1$ चमाधित; $B_3$ शमयीत
2. $A_{2-5}$ °पृणाको; $A_1$,$B_1$ °प्रणका; $B_3$ प्रणीका
3. $A_{4,5}$ शपक°; $B_1$ शापक°
4. $A_1B_1$ कंबु°; $B_3$ कंब°
5. $B_3$ प्रचरंति
6. Thus all MSS.
7. Mahādeva on SatS *XV.4.26*: तत्संस्थाप्यान्यद्धविस्तद्दैवतं निर्वपेदित्यापस्तम्बभारद्वाजौ। Rudradatta on ĀpSS IX.15.6: तद्देव हविर्निर्वपेदित्येव सत्याषाढभारद्वाजौ।
8. Cited by Rudradatta on ĀpSS IX.15.17.
9. $B_3$ अभ्यव°
10. $B_3$ वा omitted
11. $B_3$ °तानि

यदार्याणां[1] धर्मज्ञानां धर्मकामानामभोजनीयं न तेन देवान् यजेत[2] ॥ ४ ॥ यद्धविर्दुःशृतं तद्यमदेवत्यम् । यममेव तद्गच्छतीति विज्ञायते ॥ ५ ॥ सँस्थाप्य तद्धविरन्वाहार्यपचने चतुःशरावमोदनं पक्त्वा चतुर्भ्यो ब्राह्मणेभ्यो जीवतण्डुलमिश्रोपहरेत् ॥ ६ ॥ तत्रापि भार्गव एकः प्राशितृणाँ स्यात् ॥ ७ ॥ यथादिष्टां दक्षिणामन्तरियादुर्वरां प्रतिग्रितां दद्यात् ॥ ८ ॥ योऽदक्षिणेन यज्ञेन यजेत स यज्ञः प्रक्षामः । अनायुर्यजमानः स्यात्[3] ॥ ९ ॥ उर्वराँ सस्यवतीं दद्यात् ॥ १० ॥ यद्यभागां देवतामावाहयेदाज्येनैनां यथोक्तं यजेत[4] ॥ ११ ॥ भागिनीमन्तरितां यत्र स्मरेत् तदुपोत्थायावाहयेत् ॥ १२ ॥ यद्वो देवा अतिपादयानि इत्यत्राहुतिं[5] जुहुयात् ॥ १३ ॥ ॥१८॥

यदि दैवते यावदाने वा याज्यानुवाक्ये वा विपरिहरेयुर्यदस्य गृहेषु[6] चित्रं धनं तद्दद्यात् ॥ १ ॥ यथाहुतिः[7] स्कन्देदाग्नीध्रं ब्रूयात् जुहुधि इति ॥ २ ॥ ताँ सोऽञ्जलिना जुहोति अग्नेस्त्वास्ये जुहोमि मा यजमानो रिषन्मा यज्ञपत्नी मा यज्ञनीः इति । अमुष्मै त्वास्ये जुहोमि इति वा ॥ ३ ॥ यस्यै देवतायै हुतं भवति तस्यै पूर्णपात्रं दद्यात् ॥ ४ ॥ यस्यै देवतायै गृहीतमहुतँ स्कन्देद् यस्य वा देवतामन्तरियुर्यदस्य गृहेषु[8] पुष्कलं धनं तद्दद्यात् ॥ ५ ॥ यथाहुती विपरिहरेदथैतां[9] प्रायश्चित्तिं जुहुयात् त्वं नो अग्ने ॥ स त्वं नो अग्ने इति ॥ ६ ॥ एते एवान्तरये सर्वत्र विपर्यये च जुहुयात् ॥ ७ ॥ यदि पुरोडाशः सं वा विजेतोद्वा पतेत् तमुद्वास्य बर्हिष्यासाद्यैतेनाभि च[10] घारयेदभि च मन्त्रयेत

किमुत्पतसि किमुत्प्रोष्ठाः शान्तः शान्तेरिहागहि ।

1. Thus $A_1$,$B_{1,3}$; $A_{2-3}$,R आर्याणां
2. Rudradatta on ĀpSS IX.15.17 : तथा चापो दुष्टं हविरभ्यवहरन्तीति प्रकृत्याह भारद्वाजः । कथं दुष्टं हविः स्यात् । यदार्याणामभोजनीयं न तेन देवान् यजेतेति ।
3. Rudradatta on ĀpSS IX.15.20 : तथानायुर्यजमानः स्यादिति सत्याषाढभारद्वाजौ । Mahādeva on SatS XV.4 (p. 308) : तथानायुर्यजमानः स्यादिति वैखानसभारद्वाजौ ।
4. $A_1$,$B_1$ यजेत; $A_{2-3}$ यथावद्; $B_1$ येच्चेद्
5. Thus $A_{2-3}$; $A_1$ इत्युभयत्राहुतां; $B_2$ इत्युभयत्राहुतीं; $B_1$ इत्युभयत्राहुतिं; $B_{2,3}$ इत्युभयत्राहुतीर्
6. $A_{1-3}$,R गृहे; $B_1$ ग्रेषु
7. Thus $A_{1-3}$,$B_1$; $B_2$ यथाहुतिः; $B_3$ आहुतीः; R यथाहुतिं
8. $A_{2-3}$,R गृहे
9. $A_1$ आहुती; $A_{2-3}$,$B_1$ आहुति; R यथाहुतिः
10. $B_{2,3}$ omitted

अघोरो यज्ञियो भूत्वासीद सदनँ स्वम[1] ॥

मा हिँसीर्देवप्रेषित आज्येन तेजसाज्यस्व मा नः किंचन[2] रीरिषः ।

योगक्षेमस्य शान्त्या अस्मिन्नासीद बर्हिषि ॥

इति ॥ ८ ॥ भूत्वा प्रभवति यजमानो यस्यैतां यज्ञे प्रायश्चित्तिं कुर्वन्तीति विज्ञायते प्रायश्चित्तिं कुर्वन्तीति विज्ञायते ॥ ९ ॥ ॥१९॥

॥ इति[3] नवमः प्रश्नः[3] ॥

---

1. $A_{1-5}$,$B_3$,R repeat आसीद सदनं स्वं.
2. $B_3$ कंचन
3–3. $A_1$ omitted; $A_{2,3,5}$ अष्टमः प्रश्नः; $A_4$ इति अष्टमः प्रश्नः; $B_1$ श्रीः; $B_2$ इति पूर्वप्रायश्चित्तं नाम नवमः प्रश्नः; $B_3$ प्रायश्चित्तं समाप्तं हरिः ॐम् शुभमस्तु। श्रीचिदंबरेश्वराय नमः। श्रियै नमः ।

## अथ दशमः प्रश्नः

वसन्ते[1] ज्योतिष्टोमेन यक्ष्यमाणो ब्राह्मणानार्षेयानृत्विजो वृणीते यूनः स्थविरान् वानूचानाननङ्गहीनानूर्ध्ववाचश्चतुरः ॥ १ ॥ सर्वान् वा[2] ॥ २ ॥ चतुरो वृणानो महर्त्विजो वृणीते[3]ऽध्वर्युँ ब्रह्माणँ होतारमुद्गातारमिति ॥ ३ ॥ आदित्यो देवो दैव्योऽध्वर्युः स मेऽध्वर्युरस्तु इत्युपाँशु दैव्यमध्वर्युं वृत्वा असौ मानुषः इत्युच्चैर्मानुषं वृणीते ॥ ४ ॥ चन्द्रमा देवो दैव्यो ब्रह्मा स मे ब्रह्मास्तु इत्युपाँशु दैव्यं ब्रह्माणं वृत्वा असौ मानुषः इत्युच्चैर्मानुषं वृणीते ॥ ५ ॥ अग्निर्देवो दैव्यो होता स मे होतास्तु इत्युपाँशु दैव्यँ होतारं वृत्वा असौ मानुषः इत्युच्चैर्मानुषं वृणीते ॥ ६ ॥ पर्जन्यो देवो दैव्य उद्गाता स म उद्गातास्तु इत्युपाँशु दैव्यमुद्गातारं वृत्वा असौ मानुषः इत्युच्चैर्मानुषं वृणीते ॥ ७ ॥ सदस्यं महर्त्विजं पञ्चमं कौषीतकिनः समामनन्ति[4] ॥ ८ ॥ स कृताकृतकर्मणामुपद्रष्टा[5] भवति ॥ ९ ॥ तं वृणीते ॥ १० ॥ आकाशो देवो दैव्यः सदस्यः स मे सदस्योऽस्तु इत्युपाँशु दैव्यँ सदस्यं वृत्वा असौ मानुषः इत्युच्चैर्मानुषं वृणीते ॥ ११ ॥ आपो देवीर्दैव्या होत्राशँसिनस्ते[6] मे होत्राशँसिनः सन्तु इत्युपाँशु दैव्यान्[7] होत्राशँसिनो वृत्वा असौ चासौ च मानुषः इत्युच्चैर्मानुषान् वृणीते ॥ १२ ॥ ॥१॥

रश्मयो देवा दैव्याश्चमसाध्वर्यवस्ते मे चमसाध्वर्यवः सन्तु इत्युपाँशु दैव्याँश्चमसाध्वर्यून् वृत्वा असौ चासौ च मानुषः इत्युच्चैर्मानुषान् वृणीते ॥ १ ॥ यज्ञोपवीतं[8] कृत्वाप आचम्य प्राङ्[9] वोदङ्[9] वा तिष्ठन् जपत्यासीनो वा भूर्भुवः सुवः[10] ॥ आयुर्मे

1. $A_{1-3}$ ॐ वसंते; $B_1$ श्रीः । वसन्ते; $B_2$ अथ दशमप्रश्न आरभ्यते । वसंते; Gopinātha on SatS X.1 (p. 992) cites sūtra 1 up to ऊर्ध्ववाचः verbatim; Vāñcheśvara (4a) on SatS X has cited from यूनः to ऊर्ध्ववाचः.
2. Sūtras 2 and 3 make one sūtra in R.
3. Here ends the sūtra 3 in $B_3$; Gopinātha on SatS X.1 (p. 1003) cites this sūtra verbatim.
4. Gopinātha on SatS X.1 (p. 999) cites this sūtra verbatim.
5. Emended; $A, B_{1,2}$ कृताकृतः कर्म°
6. Thus $A_1, B_{1,2}$; $A_2$ °शंसीनस्तो; $A_3$ °शंसिनस्ता; R °शंसिन्यस्ता
7. $A_1$ दैव्यो
8. $B_2$ घ वृतो यशो°; Gopinātha on SatS VII.1 (p. 567) while citing this sūtra omits वा after प्राङ्. Vāñcheśvara (7b) on SatS VII reads प्राङ्मुखः.

9–9. $A_1$ प्राग्वोद°; $A_{2-3}$ प्राचोदंचो; $B_2$ प्राच वदङ्

10. $A_1$ omitted

प्रावोचो वर्चो मे प्रावोचो यशो मे प्रावोचः श्रियं मे [1]प्रावोचः ॥ आयुष्मानहं वर्चस्वी यशस्वी श्रीमानपचितिमान् भूयासम् ॥ भूर्भुवः सुवः[1] ॥ सर्वं भूयासम् इत्युक्त्वा प्रति वा चष्टे[2] प्रति वा जानीते ॥ २ ॥ स[3] प्रतिज्ञाय 'देवो देवमेतु सोमः सोममेत्वृतस्य पथा ॥ एमि[4] विहाय दौष्कृत्यम् इत्यभिप्रव्रजति ॥ ३ ॥ पद्वा नामासि सुतिः सोमसरणी सोमं गमेयम् इति पन्थानमातिष्ठते ॥ ४ ॥ पितरो भूः इति पितॄन् दक्षिणामुख[5] उपतिष्ठते ॥ ५ ॥ अथैनं गृहानोद्वाह्वयति[6] ॥ ६ ॥ आच्छाद्य चैनं कुण्डलिनं करोति ॥ ७ ॥ एकधनं चास्मै ददाति ॥ ८ ॥ अमावास्यायां[7] दीक्षते पौर्णमास्यां वा ॥ ९ ॥ तस्यापरिमिता दीक्षाः[8] संवत्सरपरार्ध्याः ॥ १० ॥ न दर्शपूर्णमासाभ्यामनिष्ट्वा सोमेन यजेत[9] ॥ ११ ॥ नाग्निष्टोमेनानिष्ट्वेतरैः क्रतुभिरिति[10] ॥ १२ ॥ अतिरात्रमेके प्रथमं यज्ञं समामनन्ति ॥ १३ ॥ न[11] रथन्तरपृष्ठमकृत्वा[11] बृहत्पृष्ठं कुर्वीत ॥ १४ ॥ अमावास्यायां पौर्णमास्यां वा सुत्यमहर्भवति ॥ १५ ॥ ॥२॥

प्राचीनवंशं विमितं मिन्वन्ति पुरस्तादुन्नतम् ॥ १ ॥ तस्य प्रतिदिशं द्वाराणि भवन्ति । उत्तरपूर्वमवान्तरदेशं प्रति पञ्चमं द्वारम् ॥ २ ॥ स्रक्तिष्वारोकान् कुर्वन्तीत्येकेषाम् ॥ ३ ॥ तस्मिन् सप्तहोतारं मनसानुद्रुत्याहवनीये[12] सग्रहं जुहोति ॥ ४ ॥ दीक्षणीयामिष्टिं निर्वपति ॥ ५ ॥ आग्नावैष्णवमेकादशकपालमाग्नावैष्णवं वा घृते चरुम् ॥ ६ ॥ पत्नीसंयाजान्ता दीक्षणीया संतिष्ठते ॥ ७ ॥ यत् प्राग-

---

1. $B_{1,2}$ *omitted*
2. Rudradatta on ĀpŚS X.1.4 and Gopinātha on SatS X.1. (p. 1003) say : भारद्वाजमतात्तु अप्रत्यभिज्ञायतोऽपि मित्रो जपः ।
3. *Thus* $A_1$,$B_{1,2}$; $A_{2-5}$,R *omitted*
4. $A_{2-5}$ एमीति; $B_1$ एमिरि
5. $B_1$ दक्षिणाभिमुख; Gopinātha *on SatS VII.1 (p. 569)* : भारद्वाजस्तु पितॄन् दक्षिणामुख उपतिष्ठत इति स्पष्टमेव दक्षिणामुखतामाह । This sūtra is cited also by Vāñcheśvara.
6. Thus $A_1$; $A_{2-5}$,$B_1$ °ह्वयति; $B_2$ गृहानोऽभ्यानोह्वयति
7. R अमा°
8. $A_{1-5}$,$B_1$ दीक्षिता
9. Rudradatta on ĀpŚS X.1.1, Gopinātha on SatS VII.1 (p. 556) and also Vāñcheśvara have cited this sūtra verbatim. Yajñeśvara Dīkṣita in his commentary *Agniṣṭomacandrikā* on BaudhŚS VI.1 ; तत्र भारद्वाजः दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति ।
10. Gopinātha on SatS VII.1 (p. 560) has cited this sūtra verbatim.

11–11. $B_2$ रथंतरपृष्ठं कृत्वा

12. $A_1$ मनसा जुहोत्या°

अग्नीषोमीयात् सर्वं तदुपांशु क्रियते ॥ ८ ॥ नात्रान्वाहार्यो भवति ॥ ९ ॥ उत्तरेण प्राग्वंशं परिश्रिते यजमानः केशश्मश्रु वापयते ॥ १० ॥ तस्य दक्षिणं गोदानमुनत्ति आप उन्दन्तु जीवसे इति ॥ ११ ॥ त्रेण्या शलल्या विनीय त्रीणि दर्भपुञ्जीला[1]न्यूर्ध्वाग्राण्युपनियच्छति[2] ओषधे त्रायस्वैनम् इति ॥ १२ ॥ स्वधिते मैनं हिंसीः इति स्वधितिनाभिनिदधाति ॥ १३ ॥ देवश्रूरेतानि प्र वपे इति प्रवपति ॥ १४ ॥ स्वस्त्युत्तराण्यशीय इत्येतं मन्त्रं यजमानो जपति ॥ १५ ॥ श्मश्रूण्यग्रे वापयतेऽथोपपक्षावथ केशानिति विज्ञायते ॥ १६ ॥ औदुम्बरेण दन्तधावनेन दतो धावते लोहितमनागमयन्[3] ॥ १७ ॥ दन्तान् प्रक्षाल्याभ्यन्तरं नखानि कारयते ॥ १८ ॥ सव्यस्याग्रे कनिष्ठिकातः । अथ दक्षिणस्य ॥ १९ ॥ हस्त्यान्यग्रेऽथ पद्यानि ॥ २० ॥ यत्रलोमशमवकावलं तीर्थं तस्मिन् स्नाति ॥ २१ ॥ स्थावराः संतता[4] भवन्ति ॥ २२ ॥ ॥३॥

कुण्डे स्नातीत्येकेषाम् ॥ १ ॥ शङ्खिनि[5] ह्रदे हिरण्यमवधाय आपो अस्मान् मातरः शुन्धन्तु इति स्नात उद्गाहते[6] उदाभ्यः शुचिरा पूत एमि इति ॥ २ ॥ अप आचम्य क्षौमं वासोऽहतमन्तरं परिधत्ते सोमस्य तनूरसि तनुवं मे पाहि इति ॥ ३ ॥ सोमस्य नीवीरसि इति नीवीमनुपरिकल्पयते[7] ॥ ४ ॥ यदस्य प्रतिप्रियमन्नं तदश्नाति ऊर्गसि इति ॥ ५ ॥ सर्पिर्मिश्रं दधि मधु चाभ्युपसेकमाशितो भवति ॥ ६[8] ॥ कनीयःकनीयोऽत ऊर्ध्वं व्रतयति ॥ ७ ॥ महीनां पयोऽसि इति दर्भपुञ्जीलाभ्यां[9] नवनीतं संप्लुत्य त्रिः प्राचीनमभ्यङ्क्ते वर्चोधा असि वर्चो मयि धेहि इति ॥ ८ ॥ मुखमग्रेऽनुलोममङ्गानि ॥ ९ ॥ स्वभ्यक्तो भवति ॥ १० ॥ त्रैककुदेनाञ्जनेनाङ्क्ते ॥ ११ ॥ यदि त्रैककुदं नाधिगच्छेद् येनैव केन[10] चाञ्जनेनाञ्जीत[10] ॥ १२ ॥ सतूलया

1. $A_1$,$B_2$ °पुंजीला°; $A_{2-5}$,$B_1$ °पिंजूला°; R पिंजीला°
2. $B_2$ वपते°
3. $B_1$ °मनुगामयन्
4. $A_1$ संहता
5. Thus $A_1$,$B_2$; $A_{2-5}$ शंखिनी; $B_1$ शंखिने; Vāñcheśvara (13b) on ṢatS X reads : शंखिनि ह्रदे शंखी (? शंखौ) ह्रद इति भारद्वाजः ।
6. $A_1$ उद्गत
7. $A_1$,$B_1$ नीवि°
8. R breaks this sūtra after कनीयःकनीयः.
9. $A_1$,$B_2$ °पुंजी°; $A_{2-5}$ °पिंजीला°; $B_1$ °पिंजला°
10. R केनाञ्जने°

शरेषीकया[1] दर्भेषीकया[2] दर्भपुञ्जीलेन[3] वा दक्षिणं पूर्वमनिधावमानः वृत्रस्य कनीनिकासि चक्षुष्पा असि चक्षुर्मे पाहि इति। त्रिर्दक्षिणं द्विरुत्तरम्[4] ॥ १३॥ ॥४॥

अथैनमेकविँशत्या दर्भपुञ्जीलैः[5] सप्तभिः सप्तभिस्त्रिः पवयति चित्पतिस्त्वा पुनातु ॥ वाक्पतिस्त्वा पुनातु ॥ देवस्त्वा[6] सविता पुनातु[6] इत्येतैर्मन्त्रैः ॥ १ ॥ अच्छिद्रेण पवित्रेण इत्येतं मन्त्रँ सर्वत्रानुषजति ॥ २ ॥ द्विरूर्ध्वं नाभेरुन्मार्ष्टि सकृदवाङ् ॥ ३ ॥ पवमानः सुवर्जनः इत्येतमनुवाकं पाव्यमानो जपति[7] ॥ ४ ॥ यद्देवा देवहेडनम् इति च[8]। तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयम् इति चैतं मन्त्रम् ॥ ५ ॥ आ वो देवास ईमहे इति पूर्वया द्वारा प्राग्वँशं प्रविश्यापरेणाहवनीयमतिक्रम्य दक्षिणतस्तिष्ठन्नाहवनीयमभिमन्त्रयते इन्द्राग्नी द्यावापृथिवी इत्यनुवाकशेषेण ॥ ६ ॥ तस्यैष एव संचरो भवत्या सुत्यायाः ॥ ७ ॥ अत्रैके दीक्षणीयामिष्टिँ समामनन्ति ॥ ८ ॥ यद्दीक्षणीयायां ध्रौवमाज्यं ततः स्रुवेण चतस्रो दीक्षाहुतीर्जुहोति आकूत्यै प्रयुजेऽग्नये स्वाहा इत्येतैर्मन्त्रैः ॥ ९ ॥ स्रुचा पञ्चमीम् आपो देवीर्बृहतीर्विश्वशंभुवः इति ॥ १० ॥ चतुर्गृहीतेन स्रुचं पूरयित्वा द्वादशगृहीतेन वा पूर्णाहुतिं जुहोति विश्वे देवस्य नेतुः इत्येतया ॥ ११ ॥ बिलावकाशं कृत्वा जुहोतीत्येकेषाम् ॥ १२ ॥ कृष्णाजिनस्य दक्षिणं पूर्वपादं[9] परिषीव्यति ॥ १३ ॥ द्वे वा समीची माँससँहिते[10] कृत्वा ॥ १४ ॥ अन्तर्वेदि कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य शुक्लां च कृष्णां च[11] राजिं[11] यजमानः संमृशति ऋक्सामयोः शिल्पे स्थः इति ॥ १५ ॥ भसत्तो[12] जान्वक्र[12] आरोहति इमां धियँ शिक्षमाणस्य ॥ सुत्रामाणम् इति द्वाभ्याम् ॥ १६ ॥ ॥५॥

आरूढो जपति इमाँ [illegible] नावमारुहम् इत्येताम् ॥ १ ॥ विष्णोः शर्मासि

---

1. $A_1$,$B_1$ शरेषि°; $B_2$ शरषि°
2. $A_1$,$B_1$ दर्भेषि°; $A_{2-5}$ दर्भैषि°
3. $B_1$ °पिंजलेन
4. $A_1$ द्विरुर्क; $B_{1,2}$ °त्तमम्
5. $A_{2-5}$,R °पिंजीलैः; $B_1$ °पिंजलैः
6-6. $A_{2-5}$,$B_{1,2}$,R omitted
7. Rudradatta on ĀpSS X.7.13: पवमानः सुवर्जन इत्यनुवाकमेव सत्याषाढभारद्वाजौ।
8. $A_{2-5}$,$B_{1,2}$,R च पूतः
9. Thus $B_1$; $A_1$ पूर्वं पदं; $A_{2-5}$ पूर्वं पादं; $B_2$ पूर्वपदां
10. Thus $A_{2-5}$; $A_1$ मासंहिते; $B_1$ मांसं संहिते; $B_2$ मां संहिते
11-11. Thus $A_1$,$B_1$; $A_{2-5}$ च राजि; $B_2$ च राजीं
12-12. Thus $A_{2-5}$; $A_1$ भसतेजान्वकत; $B_1$ भसत्तो जानुक; $B_2$ भसपो जान्वक

शर्म यजमानस्य शर्म मे यच्छ इत्यंसं प्रोर्णुते ॥ २ ॥ नक्षत्राणां मातीकाशात् पाहि इत्युष्णीषेण शिरो वेष्टयते ॥ ३ ॥ सशिरो[1] वा प्रोर्णुते यथासुखु ॥ ४ ॥ पत्न्याः शिरसि कुम्बकुरीरं कल्पयति ॥ ५ ॥ जालं कुरीरमित्याचक्षते ॥ ६ ॥ कृष्णानां जीवोर्णानां भवतीति विज्ञायते ॥ ७ ॥ अथैनां क्षौमेण वाससा प्राचीनमात्रा[2] परिधापयति ॥ ८ ॥ ऊर्ध्ववास्यं व्रुवते ॥ ९ ॥ यजमानमन्यतरतःपाशया मौञ्ज्या मेखलया त्रिवृता पृथ्व्या मध्यतः संनह्यति ऊर्गस्याङ्गिरसी इति ॥ १० ॥ उत्तरेण नाभिं निष्टर्क्यं ग्रन्थिं कृत्वा दक्षिणतो नाभेः पर्यूहते ॥ ११ ॥ योक्त्रेण पत्नीं संनह्यति यथा दर्शपूर्णमासयोः सं त्वा नह्यामि इत्येतया ॥ १२ ॥ अथास्मै त्रिवलिं पञ्चवलिं वा कृष्णविषाणां प्रदक्षिणावर्तां प्रयच्छति[3] इन्द्रस्य योनिरसि मा मा हिंसीः इति ॥ १३ ॥ तामेतेनैव मन्त्रेणावबध्नाति ॥ १४ ॥ तया वेदेर्लोष्टमुद्धन्ति कृष्यै त्वा सुसस्यायै इति ॥ १५ ॥ सुपिप्पलाभ्यस्त्वौषधीभ्यः इति शिरसि कण्डूयते यदास्य कण्डूयति ॥ १६ ॥ विषाणे विष्यैतं ग्रन्थिं यदस्य गुल्फितं[4] हृदि मनो यदस्य गुल्फितम्[5] इत्यक्ष्णु ॥ १७ ॥ अथास्मा औदुम्बरं दीक्षितदण्डं प्रयच्छति मुखेन संमितम् ऊर्ध्वसदसि वानस्पत्यः सुयुम्नो[6] सुम्नं[6] यजमानाय धेहि इति ॥ १८ ॥ यः कश्च यज्ञियो वृक्षः फलग्रहिस्तस्य कार्यं इत्येकेषाम् ॥ १९ ॥ तं प्रतिगृह्णाति[7] सूपस्था अद्य देवो वनस्पतिः इति ॥ २० ॥ ॥६॥

चमसं व्रतप्रदानमभिमन्त्रयते[8] उरुव्यचा असि जनधाः सपत्नो मा पाह्यस्य यज्ञस्योदृचः इति ॥ १ ॥ अथाङ्गुलीर्न्यंचति[9]। स्वाहा यज्ञं मनसा इति द्वे। स्वाहा द्यावापृथिवीभ्याम् इति द्वे। स्वाहोरोरन्तरिक्षात् इति द्वे ॥ २ ॥ स्वाहा यज्ञं वातादारभे इति मुष्टी करोति ॥ ३ ॥ अथैनं संभारयजूंषि वाचयति अग्निर्यजुर्भिः इति ॥ ४ ॥ ततो वाचं यच्छत्या नक्षत्राणामुदयात् ॥ ५ ॥ यदि पुरा नक्षत्रेभ्यो वाचं विसृजेद्

1. $A_1$ शिरो
2. $A_{2-3}$,R °आत्रं
3. Gopinātha on SatS VII.1 (p. 595) cites this sūtra up to प्रयच्छति verbatim. Vāñcheśvara reads प्रदक्षिणावृत्तां.
4. $A_1$,$B_{1,2}$ गुल्फिदं; $A_{2-3}$ गुल्पिदं
5. $A_1$ गुल्कदं; $A_{2-3}$ गुल्फिदं; $B_1$ गुल्पदं
6–6. Thus $B_{1,2}$; $A_1$ सुयम्नो; $A_3$ सुयुम्नं
7. $A_{2-3}$ प्रतिप्रस्थाता गृह्णाति
8. Vāñcheśvara (17b) on SatS VII has cited this much portion verbatim.
9. $A_{2-3}$ °र्न्यंचति; $B_1$ °न्यचति; $B_2$ °र्न्यंचति

वैष्णवीमाग्नावैष्णवी[1] सारस्वतीं बार्हस्पत्यामित्यनूच्य पुनरेव वाचं यच्छेत् ॥ ६ ॥ त्वमग्ने व्रतपा असि इति ब्रूयाद् यदि सुप्ती वाचं वा विसृजेत् ॥ ७ ॥ अथैनमावेदयति- अदीक्षिष्टायं ब्राह्मणोऽसावामुष्यायणोऽमुष्य[2] पुत्रोऽमुष्य पौत्रोऽमुष्य नप्तामुष्याः पुत्रोऽमुष्याः पौत्रोऽमुष्या नप्ता इति। त्रिरुपांशु त्रिरुच्चैः ॥ ८ ॥ यः कश्चन[3] दीक्षेत ब्राह्मण इत्येवैनमावेदयेत् ॥ ९ ॥ अपराह्णे दीक्षते ॥ १० ॥ यं कामयेत तपस्वी स्यादिति तं प्रातर्दीक्षयेत् ॥ ११ ॥ उत्थाय कृष्णाजिनं प्रतिमुञ्चति ॥ १२ ॥ स एतद् व्रतं चरति। न मांसमश्नाति न स्त्रियमुपैति नोपर्यास्ते जुगुप्सेतानृतात् ॥ १३ ॥ परिह्वालं मानुषीं वाचं वदति चनसितं विचक्षणं वानुपजन् ॥ १४ ॥ चनसित इति ब्राह्मणमामन्त्रयीत। विचक्षण इति राजन्यवैश्याविति विज्ञायते ॥ १५ ॥ ब्राह्मणेन चैव क्षत्रियेण वा वैश्येन वा संभाषेत ॥ १६ ॥ तत एवैनमनुप्रयुञ्ज्येरन् ॥ १७ ॥ यद्येनं शूद्रेण संवाद उपपद्येतैतेषामेवैकं[4] ब्रूयात् इमं[5] नु विचक्ष[5] इति ॥ १८ ॥ ॥७॥

न पुरा सोमस्य क्रयादपोर्ण्वीत ॥ १ ॥ न पुरा दक्षिणाभ्यो नेतोः कृष्णविषाणामवचृतेत्[6] ॥ २ ॥ कृष्णविषाणया कण्डूयते ॥ ३ ॥ अपिगृह्य स्मयते ॥ ४ ॥ अमेध्यं दृष्ट्वा जपति अबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषां श्रेष्ठो दीक्षे मा मा हासीः इति ॥ ५ ॥ अभिवृष्यमाणो जपति उन्दतीर्बलं धत्तौजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्ट इति ॥ ६ ॥ न दीक्षितविमितात् प्रवसेत् ॥ ७ ॥ नैनमन्यत्र दीक्षितविमितात् सूर्योऽभ्युदियान्नाभ्यस्तमियात् ॥ ८ ॥ दक्षिणत आहवनीयमभ्यावृत्य शयीत ॥ ९ ॥ न न्यङ् शयीत नोत्तानः। नाग्नेरपपर्यावर्तेत ॥ १० ॥ यथर्तु स्मयेत। यथर्तु निष्क्रामतीति[7] विज्ञायते ॥ ११ ॥ यथाकालं भुवते ॥ १२ ॥ न निष्ठीवेन्न दतो धावेन्न दिवा विचारं कुर्यान्न मूत्रम् ॥ १३ ॥ यदि कुर्याच्छायायां कुर्यात् ॥ १४ ॥ अपो मुञ्चामि न प्रजामंहोमुचः स्वाहाकृताः पृथिवीमाविशत इति मूत्रं विसृजति[8] ॥ १५ ॥ न पचति न ददाति न कांचनाहुतिं जुहोत्यन्यत्र

---

1. $A_{2-5}$ omitted
2. Thus $A_1$; $A_{2-5}$ °सावमुष्य; $B_1$ सावमुष्यायणोमुष्य
3. $A_1$,$B_2$ कश्च; $B_1$ कश्चि
4. $A_1$ उपपद्यते तेषा°
5–5. $A_1$ इमन्नुर्विचक्ष्व; $B_1$ इममनु°; $B_2$ इदमनु°
6. Emended; cf. TS VI. 1.3.8. MSS °विषाणमव°
7. $A_1$,$B_{1,2}$ निष्कामयेदिति
8. $A_{2-5}$ omit portion from here onwards till सक्तून्स्मा अन्वावपेयुः in X.10.8.

सोमाङ्गेभ्यः ॥ १६ ॥ कर्षेदात्मानं यावदस्य कृष्णमक्ष्योर्नेश्यति[1] ॥ १७ ॥ कृष्णाजिनान्न छिद्येत । एवं दण्डात् ॥ १८ ॥ ॥८॥

यद्यन्यत्र कृष्णाजिनादासीत देवाञ्जनमगन् यज्ञस्तस्य माशीरषत् इत्येतदभिमन्त्रयेत[2] ॥ १ ॥ नास्य नाम गृह्णीयात् । न पापं कीर्तयेत् । नैनमभिवदेत् । दीक्षित एवाभिवदेत् ॥ २ ॥ नास्यान्नमद्यादाग्नीषोमीयात्[3] ॥ ३ ॥ कामं संस्थितेऽग्नीषोमीये हुतायां वा वपायां क्रीते वा राजनि ॥ ४ ॥ अपि वादित एव यज्ञार्थमुत्कल्प्य दीक्षेत ॥ ५ ॥ अथेतरतो भुञ्जीरन् ॥ ६ ॥ तान्येतानि व्रतान्यूर्ध्वं दीक्षणीयायाः[4] प्रक्रामन्ति ॥ ७ ॥ अथेमानि द्रव्योपयोगानि यथैतत् कृष्णविषाणया कण्डूयनं कृष्णाजिन[5] आसनं[5] दण्डधारणमिति ॥ ८ ॥ पयोव्रता पत्नी ब्रह्मचारिणी भवति ॥ ९ ॥ एष्टी स्थः इति चतस्रोऽङ्गुलीरुत्सृजति ॥ १० ॥ दुग्धे व्रते नक्षत्रं दृष्ट्वा व्रतं कृणुत इति वाचं विसृजति ॥ ११ ॥ जागर्येतां रात्रिम् ॥ १२ ॥ यवागू राजन्यस्य व्रतमामिक्षा वैश्यस्य पयो ब्राह्मणस्य ॥ १३ ॥ तान्येतानि दैक्षाणि व्रतानि ॥ १४ ॥ सर्वेषां त्वेवोपसत्सु स्तनविभागः ॥ १५ ॥ ॥९॥

गार्हपत्ये यजमानस्य व्रतं श्रपयति । दक्षिणाग्नौ पत्न्याः[6] ॥ १ ॥ याग्निहोत्रस्य स्कन्नस्य[7] प्रायश्चित्तिः सा व्रतस्य ॥ २ ॥ तदु हैके पय एव व्रतयन्ति ॥ ३ ॥ तदु तथा न कुर्यात् । पयस्येव यवागूं श्रपयित्वा व्रतयेत् ॥ ४ ॥ यद्यल्पं स्यादन्यां दुग्ध्वा श्रपयित्वा व्रतयेत् ॥ ५ ॥ यदि पयो न विद्येताप्स्वेव श्रपयित्वा व्रतयेत् ॥ ६ ॥ यदि दधीयादेतदेवास्मै दधि कुर्युः[8] ॥ ७ ॥ यद्यन्नीयाद् धाना अस्मा अन्वावपेयुः सक्तूनस्मा अन्वावपेयुर्घृतमस्मा अन्वानयेयुः । अप्यन्ततः फलान्येव[9] व्रतयेदग्निहोत्रस्याविच्छेदायेति[10] विज्ञायते ॥ ८ ॥ अपरेणाहवनीयं

1. B₂,R omitted
2. B₂ इत्येतेनद°
3. A₁,B₁ °दग्नी°
4. B₂ °णीयायां
5-5. A₁ °जिनमा°
6. Thus A₁,B₁; B₂,R पत्न्यगारे
7. B₂,R omitted
8. Thus A₁,B₁; B₂,R कुर्यात्
9. Thus A₁,B₁,₂; A₂₋₃,R पिप्पलान्येव
10. Rudradatta on ĀpSS X.16.11 and Gopīnātha on SatS X.2 (p. 1055): यथा अग्निहोत्रस्याविच्छेदायेति विज्ञायत इति भारद्वाजः। Similarly Vāñcheśvara (19b) on SatS X. Yajñeśvara Dīkṣita in his commentary *Agniṣṭomacandrikā* on BaudhSS VI.3: यथा अग्निहोत्राविच्छेदायेति विज्ञायत इति भारद्वाजः।

व्रतमत्याहृत्य प्रयच्छति ॥ ९ ॥ अथैनमाह व्रत्य व्रतय[1] व्रतमुपेहि[2] इति ॥ १० ॥ नादीक्षिता दीक्षितं व्रतयन्तं पश्यन्ति ॥ ११ ॥ दैवीं धियं मनामहे इति हस्ताव-नेनिक्ते ॥ १२ ॥ ये देवा मनोजाता मनोयुजः इति मध्यरात्रे व्रतयति ॥ १३ ॥ व्रतयित्वाप आचामति

शिवाः पीता भवथ यूयमापोऽस्माकं योना उदरे[3] सुशेवाः ।
इरावतीरनमीवा अनागसः शिवा[4] नो भवथ जीवसे ॥

इति ॥ १४ ॥ उपोदयं व्रतप्रदो वाचं यमयति अग्नीज्ज्योतिष्मतः कुरुत[5] दीक्षित वाचं यच्छ पत्नि वाचं यच्छ इति ॥ १५ ॥ ॥१०॥

उद्यन्तमादित्यमुपतिष्ठते याः पशूनामृषभे वाचो अग्ने ता अग्ने सूर्यः शुक्रो अग्ने । ता वः प्रहिणोमि यथाभागमत्र शिवा नस्ताः पुनरायन्तु वाचः इति ॥ १ ॥ उदित आदित्ये दुग्धे व्रते व्रतं कृणुत इति वाचं विसृजति ॥ २ ॥ एवं मध्यंदिने व्रतयति ॥ ३ ॥ अभिवृक्षसूर्ये व्रतप्रदो वाचं यमयति अग्नीज्ज्योतिष्मतः कुरुत दीक्षित वाचं यच्छ पत्नि वाचं यच्छ इति ॥ ४ ॥ एवमेवात ऊर्ध्वम् ॥ ५ ॥ मध्यरात्रे मध्यंदिने व्रतयति ॥ ६ ॥ एवमुपोदयम् ॥ ७ ॥ अभिवृक्षसूर्ये व्रतप्रदो वाचं यमयति ॥ ८ ॥ न सुत्येऽहनि व्रतं विद्यत इत्येकम् । विद्यत इत्यपरम् ॥ ९ ॥ स्वप्स्यन्नाहवनीयमभिमन्त्रयते अग्ने त्वँ सु जागृहि वयँ सु मन्दिषीमहि इति ॥ १० ॥ प्रबुध्य जपति त्वमग्ने व्रतपा असि इति प्रतिपद्य विश्वे देवा अभि मामाववृत्रन् इत्यन्तेन ॥ ११ ॥ त्वमग्ने व्रतपा असि इति ब्रूयात् स्वप्स्यन् सुप्त्वा [illegible] प्रतिबुध्य यदि वादीक्षितवाचोऽवावदेत्[6] ॥ १२ ॥ एष एवात ऊर्ध्वं संवेशनप्रतिबोधनानां[7] कल्पो भवति ॥ १३ ॥ पूषा सन्या सोमो राधसा इति ॥ १४ ॥ ॥११॥

सनीहारान्[8] सँशास्ति ॥ १ ॥ ते यद्यदभन्ते तत् प्रतिगृह्णाति देवः सविता वसोर्वसुदावा रास्वेयत्सोमा भूयो भर । मा पृणन् पूर्त्या वि राधि माहमायुषा ॥ चन्द्रमसि मम भोगाय भव इत्येतैर्मन्त्रैर्यथारूपम् ॥ २ ॥ सावित्रेणान्यत् प्रतिगृह्णाति ॥ ३ ॥

---

1. $A_1$ श्वते; $A_{2-5}$,$B_1$ व्रते
2. R °मुपैहि
3. $A_{2-5}$,$B_{1,2}$,R °वुदरे
4. $A_1$ शिवे; $B_1$ शिवो
5-5. $A_{2-5}$ कुरु
6. Thus $B_2$; R वा दीक्षित°; cf. ĀpŚS X.18.2
7. $A_{2-3}$ °बोधानां
8. $A_{3-5}$ सनीहारं; $B_1$ सनिहारं; $B_2$ सनीहारान्

द्वादशाहं दक्षिणार्थं भिक्षते[1] ॥ ४ ॥ वायवे त्वा[2] इति नष्टामनुदिशति ॥ ५ ॥ वरुणाय त्वा इत्यप्सु मग्नाम् ॥ ६ ॥ निर्ऋत्यै त्वा इत्यवसन्नाम् ॥ ७ ॥ रुद्राय त्वा इति[2] महादेवहताम् ॥ ८ ॥ इन्द्राय त्वा[2] इति मेष्कहतां[3] या वा सँशीर्येत ॥ ९ ॥ मरुद्भ्यस्त्वा इति ह्रादुनिहताम्[4] ॥ १० ॥ इन्द्राय त्वा प्रसहने इति यां सेना[5] अभीत्वरी विन्देत ॥ ११ ॥ यमाय त्वा[5] इत्यविज्ञाते ॥ १२ ॥ यद्यनुप्रदिष्टामधिगच्छेन्न गोषु चारयेत्[6] ॥ १३ ॥ अथ यदि प्रयियासेत्[7] पृथगरणीष्वग्नीन् समारोप्य रथेन प्रयायात् ॥ १४ ॥ यदि रथो न विद्येत[8] रथाङ्गमादाय प्रयायात् ॥ १५ ॥ भद्रादभि श्रेयः प्रेहि[9] इत्याहवनीयमभिमन्त्रयते ॥ १६ ॥ देवीरापोऽपां नपात् इत्यपोऽतिगाहते ॥ १७ ॥ अच्छिन्नं तन्तुं पृथिव्या अनु गेषम् इति लोष्टं विमृद्नँस्तरति[10] ॥ १८ ॥ सिकता लोष्टं वा मध्ये पारे[11] च न्यस्यति[11] पृथिव्या सं भव इति ॥ १९ ॥ अथ यदि नाव्यास्तरेदरणीश्च रथं चादाय तरेत् ॥ २० ॥ यदि रथो न विद्येत रथाङ्गमादाय तरेत् ॥ २१ ॥ ॥१२॥

क्षत्रियं याचित्वोदक्रान्ते देवयजनमध्यवस्यति यत्तुदीचीनप्राचीनप्रवणम्[12] एदमगन्म देवयजनं पृथिव्याः इति ॥ १ ॥ न वा देवयजनं याचेत् ॥ २ ॥ आदित्यमेवैतेन मन्त्रेणोपतिष्ठेत सक्षेदं पश्य । विधर्तरिदं पश्य । नाकेदं पश्य । रमतिः पनिष्ठा । ऋतं वर्षिष्ठम् । अमृता यान्याहुः । सूर्यो वरिष्ठो अक्षभिर्विभाति । अनु द्यावापृथिवी देवपुत्रे इति ॥३॥ न पुरस्ताद्देवयजनमात्रमभ्यतिरिच्येत ॥ ४ ॥ आदित एवैके देवयजनस्याध्यवसानँ समामनन्ति ॥ ५ ॥ पुरोहविषि[13] देवयजने याजयेदिति काम्यानि देवयजनानि ब्राह्मणव्याख्यातानि भवन्ति ॥ ६ ॥ कौत्सात्सोमं क्रीणीतेति[14] विज्ञायते

1. $A_3$ श्रीयते (corrected); $A_{2-3}$,$B_1$ भियते; Gopinātha on SatS X.3 (p. 1060): तथा च भरद्वाजः द्वादशाहं दक्षिणार्थं भिक्षेतेति ।
2-2. $A_{2-3}$ omitted
3. $B_2$ मेषक°
4. $B_1$ मादिनी; $B_2$ ह्रादिनि°; R ह्रदिनी°
5-5. $A_1$ सेनां अभीत्वरीं; $B_{1,2}$ सेना अभित्वरि
6. Thus all MSS; R चालयेत्
7. $A_{2-3}$ प्रयेपासेत्; $B_1$ प्रदयासेत्; $B_2$ यियासत्; R प्रयास्येत्
8. $B_2$ विन्देत
9. In R sūtra 15 ends with प्रेहि इति.
10. $A_1$ विमृणस्तेरति; $A_{2-3}$ विमृनणस्त°; $B_1$ विमृनणस्ते°; $B_2$ विमृणंस्त
11-11. A पारेवन्यस्यति; $B_2$ पारे न न्यस्य
12. $A_1$,$B_{1,2}$ °चीनं°
13. R reads पुरो and हविषि separately.
14. $B_1$ क्रीणीते इति; R विक्रीणातीति

॥ ७ ॥ शूद्रादित्येकेषाम् ॥ ८ ॥ उत्तरवेद्यां वोपरवाणां काल आनडुहँ रोहितं चर्म प्राचीनग्रीवमुत्तरलोमास्तीर्य तस्मिन् राजानं न्युप्योत्तरत उदकुम्भं निधाय संप्रेष्यति सोमविक्रयिन् सोमँ शोधय इति ॥ ९ ॥ परिश्रिते सोमविक्रयी राजानं विचिनोति ॥ १० ॥ न विचीयमानस्योपद्रष्टारो भवन्ति ॥ ११ ॥ ॥१३॥

प्रायणीयायास्तन्त्रं प्रक्रमयति ॥ १ ॥ तत्रैतानि न[1] क्रियन्तेऽग्न्यन्वाधानं व्रतोपायनं पत्नीसंनहनमन्वाहार्यं इति ॥ २ ॥ ये के च सोम[2] इष्टिपशुयन्वाः[2] सर्वेष्वेवैतानि[3] न[4] क्रियन्ते ॥ ३ ॥ उदयनीयायामनूबन्ध्यायां[5] व्रतोपायनं पत्नीसंनहनमिति क्रियन्ते ॥ ४ ॥ सर्वाण्युदवसानीयायां क्रियन्तेऽन्यत्रान्वाहार्यात् ॥ ५ ॥ तत्रैपोऽत्यन्तप्रदेशः । यत्किं च प्रतते तन्त्रे हविरागच्छति यानि कृतानि न तानि पुनः क्रियन्ते । यथा पशुपुरोडाशे प्रयाजानूयाजा यानि चान्यान्येवँरूपाणि भवन्ति ॥ ६ ॥ अदित्यै प्रायणीयं चरुं निर्वपति ॥ ७ ॥ पयसि शृतो भवति ॥ ८ ॥ समानमा सादनात् ॥ ९ ॥ उद्धृत्य चरुँ षड्ढोत्रासादयति ॥ १० ॥ एतस्यामेव स्थाल्यां मेक्षणे[6] निष्कासमिति प्रज्ञातं निदधाति ॥ ११ ॥ सप्तदश सामिधेन्यो भवन्ति ॥ १२ ॥ समानमाज्यभागाभ्याम् ॥ १३ ॥ चतुर आज्यभागान् यजति पथ्यॉं स्वस्तिं पुरस्तादग्निं दक्षिणतः सोमं पश्चात् सवितारमुत्तरतः[7] ॥ १४ ॥ हविषादिति मध्ये ॥ १५ ॥ शंयुवन्ता प्रायणीया संतिष्ठते ॥ १६ ॥ अत्रैके राज्ञो निवपनँ समामनन्ति ॥ १७ ॥ यत् प्रायणीयाया ध्रौवमाज्यं ततो जुह्वां चतुर्गृहीत्वा दर्भेण हिरण्यं निष्टर्क्यं बद्ध्वावदधाति इयं ते शुक्र तनूरिदं वर्चः इति ॥ १८ ॥ एषा सोमक्रयणी भवति । अकूटा चेदकर्णाकाणाथोणासप्तशफारुणा पिङ्गाक्ष्येकहायनी द्विहायनी वा । या शुण्ठाषीलोमकर्णी तया षोडशिनः सोमं क्रीणातीति विज्ञायते ॥ १९ ॥ ॥१४॥

---

1. A, तत्
2-2. A, सोमेष्टि°
3. A, सर्वेष्वेवनानि
4. A, omitted
5. Emended. MSS उदवसानीया° probably under the influence of sūtra 5. See, however, the commentary of Rudradatta on ĀpŚS X.4.13 and of Dhūrtasvāmin on ĀpŚS X.4.12.
6. B, मेक्षणं
7. Yajneśvara Dikṣita on BaudhŚS VII.4, Rudradatta on ĀpŚS X.21.11; Gopinātha and Vāncheśvara on SatS VII.2: भारद्वाजस्त्वाह आज्यभागाविष्ट्वा यजेतेत्याश्मरथ्यः । तावेतौ भवत इत्यालेखन इति ।

तामीक्षमाणो जुहोति जूरसि धृता मनसा इति ॥ १ ॥ अपरं चतुर्गृहीतं गृहीत्वा शुक्रमस्यमृतमसि इति हिरण्यं घृतादुद्धरति ॥ २ ॥ वैश्वदेवं हविः इत्याज्यमभिमन्त्रयते ॥ ३ ॥ प्रमुच्य हिरण्यमादित्यमुपतिष्ठते सूर्यस्य चक्षुरारुहम् इति ॥ ४ ॥ सोमक्रयणीमभिमन्त्रयते चिदसि मनासि इति प्रतिपद्य इन्द्राय सोमम् इत्यन्तेन ॥ ५ ॥ अथास्या दक्षिणेन पदा दक्षिणानि षट् पदान्यनुनिक्रामति[1] वस्व्यसि॥ रुद्रासि इत्येतैर्मन्त्रैः ॥ ६ ॥ सप्तमं पदमभिनिगृह्णाति बृहस्पतिस्त्वा सुम्ने रण्वतु इति ॥ ७ ॥ तस्मिन् हिरण्यमुपास्यैतच्चतुर्गृहीतं जुहोति पृथिव्यास्त्वा मूर्धन्ना जिघर्मि देवयजन इडायाः पदे घृतवति स्वाहा इति ॥ ८ ॥ यावद् घृतमनुविसृतं[2] तावत् स्फ्येन परिलिखति परिलिखितं रक्षः परिलिखिता अरातयः इति ॥ ९ ॥ एवमेव कृष्णविषाणयानुपरिलिखति ॥ १० ॥ यावच्छूतं स्थाल्यां संवपति अस्मे रायः इति ॥ ११ ॥ त्वे रायः इत्यध्वर्युर्यजमानाय प्रयच्छति ॥ १२ ॥ तोते रायः इति यजमानः पत्न्यै ॥ १३ ॥ पत्न्यै[3] पदं प्रदीयमानमध्वर्युरभिमन्त्रयते माहं रायस्पोषेण वि योषम् इति ॥ १४ ॥ सोमक्रयण्या पत्नी[3] संख्यापयति सं देवि देव्योर्वश्या पश्यस्व इति ॥ १५ ॥ पद उदपात्रमुपनिनयति[4] उन्नम्भय पृथिवीम् इति ॥ १६ ॥ पदे सहिरण्यौ पाणी प्रक्षाल्य गार्हपत्यस्य शीते भस्मनि पदतृतीयमुपवपति ॥ १७ ॥ एवमाहवनीये तृतीयम्[5] ॥ १८ ॥ तृतीयमक्षोपाञ्जनायावशिनष्टि ॥ १९ ॥ तत् पत्नी गृहेषु निधत्ते ॥ २० ॥ सहिरण्येन पाणिनादित्यमुपतिष्ठते ॥ २१ ॥ ॥१५॥

देव सूर्य सोमं क्रेष्यामस्तं ते प्रब्रूम । ऋतून् कल्पय[6] दक्षिणाः कल्पय यथर्तु यथादेवतम्[6] इति ॥ १ ॥ अत्रैके[7] राज्ञो निवपनं समामनन्ति ॥ २ ॥ शकटेन राज्ञोऽन्तिकं यान्ति अपि पन्थामगस्महि इति ॥ ३ ॥ उद्धृतपूर्वफलकं भवति ॥ ४ ॥ अभितो राजानं विमुच्य मुखेन प्रतिष्ठाप्याभिमन्त्रयते अंशुना ते अंशुः पृच्यताम् इति ॥ ५ ॥ उत्तरेण राजानं चर्मणि द्विगुणं क्षौमं प्राचीनग्रीवदशमुत्तरदशं वास्तीर्य तस्मिन् सहिरण्येन पाणिना राजानं मिमीते अभि त्यं देवं

1. $A_1$,$B_1$ R °न्यनुक्रा°
2. Thus $B_1$; $A_1$ °विसृतं; $A_{2-5}$ °विवृतं
3. $A_1$,$B_1$ omitted
4. $A_{2-5}$ °मुपवपति
5. $A_1$,$B_{1,2}$ omitted; $A_{2-5}$ तृतीये
6-6. Emended; $A_1$ कल्पयय दक्षिणाः कल्पयथर्तुः; $A_{2-5}$ कल्पय यथर्तुः; $B_1$ कल्पय यथ; $B_2$ कल्पयति । दक्षिणाः कल्पय यथर्तुदेवतं
7. $A_{2-5}$ अत्र

सवितारम् इति ॥ ६ ॥ एकयैकयोत्सर्गं[1] मिमीते ॥ ७ ॥ सर्वास्वङ्गुष्ठमुपनिगृह्णाति ॥ ८ ॥ यथा प्रथमं न तथा पञ्चमम्। तथैवोत्तमम्[2] ॥ ९ ॥ पञ्चकृत्वो यजुषा मिमीते पञ्चकृत्वस्तूष्णीम् ॥ १० ॥ प्रजाभ्यस्त्वा इत्यवशिष्टमुपसमूह्य[3] वाससोऽन्तान् समुच्चित्य क्षौमेणोर्ष्णापेणोपनह्यति प्राणाय त्वा इति। व्यानाय त्वा इत्यनुश्रृन्थति[4] ॥ ११ ॥ विस्रस्यावेक्षते प्रजास्त्वमनु प्राणिहि प्रजास्त्वामनु प्राणन्तु इति ॥ १२ ॥ सोमविक्रयिणो राजानं प्रत्तं[5] यजमानोऽभिमन्त्रयते एष ते गायत्रो भाग इति मे सोमाय ब्रूतात् इत्येतैर्मन्त्रैः ॥ १३ ॥ तत आह सोमविक्रयिन् क्रय्यस्ते सोमा३ इति ॥ १४ ॥ क्रय्या३ इत्याह सोमविक्रयी ॥ १५ ॥ तं क्रीणाति सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यावन्तमभिमातिषाहम् ॥ गवा ते क्रीणानि इति ॥ १६ ॥ सा[6] व्याख्याता ॥ १७ ॥ भूय एवातः सोमो राजार्हति इति सोमविक्रय्याह ॥ १८ ॥ भूय एवातः सोमो राजार्हति इत्यध्वर्युः ॥ १९ ॥ ॥१६॥

हिरण्येन क्रीणाति शुक्रं ते शुक्रेण क्रीणामि इति ॥ १ ॥ भूय एवातः सोमो राजार्हति इति सोमविक्रय्याह ॥ २ ॥ भूय एवातः[7] सोमो[7] राजार्हति इत्यध्वर्युः ॥ ३ ॥ अजया क्रीणाति तपसस्तनूरसि इति ॥ ४ ॥ भूय एवातः सोमो राजार्हति इति सोमविक्रय्याह ॥ ५ ॥ भूय एवातः सोमो राजार्हति इत्यध्वर्युः ॥ ६ ॥ धेन्वा क्रीणाति। ऋषभेण क्रीणाति। अनडुहा क्रीणाति। मिथुनाभ्यां क्रीणाति। वाससा क्रीणाति ॥ ७ ॥ दशभिः संपादयत्यपरिमितैर्वा ॥ ८ ॥ त्रिभिः क्रीणातीति विज्ञायते ॥ ९ ॥ चतुर्भिरेके समामनन्ति[8] गवा हिरण्येनाजया वाससेति ॥ १० ॥ अप्येकयैवैकत्रिंशतिदक्षिणस्य[9] सोमं क्रीणीयात् ॥ ११ ॥ अकूटा चेदकर्णाकाणाश्रोणासप्तशफारुणा पिङ्गाक्ष्येकहायनी। कल्याणगवी स्यादित्येके समामनन्ति ॥ १२ ॥ त्रिंशता सहस्रदक्षिणस्य सोमं क्रीणीयाच्छतेन वाजपेयस्य द्वाभ्यां राजसूयस्य सहस्रेणाश्वमेधस्येति विज्ञायते ॥ १३ ॥ सोमविक्रयिणो हिरण्यमपादाय शुक्लामूर्णास्तुकां यजमानाय प्रयच्छति अस्मे ज्योतिः इति ॥ १४ ॥ तां काले

1. Thus $A_1$; $A_{2-3}$,$B_1$ एकयो°
2. $A_1$ तथैवोर्क
3. $A_{2-5}$ °शिष्टं समूह्य
4. $A_{2-3}$,$B_1$ °ग्रंथति
5. $A_1$ प्रातर; $A_{2-5}$ प्रतर; $B_1$ प्रतर; $B_2$ प्रत्तं
6. $A_1$ सा न; $A_{2-3}$ स
7-7. $A_1$ एवातो; $B_1$ एवात सोमो; $B_2$ एवाहातः सोमो
8. $A_1$ सोममामनंति; Rudradatta on ĀpSS X.26.3 cites this sūtra verbatim.
9. Thus $A_1$; $A_{2-3}$,$B_2$ अप्येकवैक°

यजमानो दशापवित्रस्य नाभिं कुरुते ॥ १५ ॥ वलक्ष्याः[1] पवित्रं कार्यम् । अमोतं कार्यमिति विज्ञायते ॥ १६ ॥ कृष्णाग्रुपग्रथ्नाति इदमहँ सर्पाणां दन्दशूकानां ग्रीवा उप ग्रथ्नामि इति ॥ १७ ॥ तया सोमविक्रयिणं विध्यति सोमविक्रयिणि तमः इति ॥ १८ ॥ सोमक्रयणाननुदिशति स्वान भ्राज इत्यनुवाकशेषेण ॥ १९ ॥ ॥१७॥

सोमविक्रयिणो राजानमपादत्ते स्वजा असि स्वभूरस्यस्मै कर्मणे जात ऋतेन त्वा गृह्णाम्यृतेन नः[2] पाहि इति ॥ १ ॥ क्रीते सोमेऽपोर्णुते ॥ २ ॥ यजमानो मैत्रावरुणाय दण्डं[3] प्रयच्छति ॥ ३ ॥ अंशुल्यायां मैत्रावरुणाय[3] दण्डं प्रयच्छतीत्येकेषाम् ॥ ४ ॥ आह्रियमाणे राजानं यजमानोऽभिमन्त्रयते मित्रो न एहि सुमित्रधाः इति ॥ ५ ॥ यजमानस्योरौ दक्षिण आसादयति इन्द्रस्योरुमा विश दक्षिणमुशन्नुशन्तँ स्योनः स्योनम् इति ॥ ६ ॥ पृच्छति यजमानोऽध्वर्युम् अध्वर्यवाशक्तेव इति ॥ ७ ॥ आशाकाम इत्यध्वर्युः ॥ ८ ॥ कथमाशक्तः[4] इति यजमानः ॥ ९ ॥ विष्णुँ स्तोमम-कृष्महि[5] बृहतीछन्दोँस्युक्त्वा[6] यजूँषि वि पर्वता अजिहत सुतरुणा अपोऽवचारिषम् इत्यध्वर्यु-र्नियच्छति ॥ १० ॥ यजमानः सोमक्रयणीमावर्तयति रुद्रस्त्वा वर्तयतु इत्यनुवाक-शेषेण ॥ ११ ॥ तामन्यया गवा परिक्रीय यजमानस्य गोष्ठे विसृजति ॥ १२ ॥ पृषता वत्राकाण्डेनावक्षायँ सोमविक्रयिणं नाशयन्ति[7] ॥ १३ ॥ लोष्टैर्घ्नन्तीत्येकेषां[8] लकुटैरित्येकेषाम् ॥ १४ ॥ ॥१८॥

आदाय राजानमध्वर्युरुत्तिष्ठति उदायुषा स्वायुषा[9] इति ॥ १ ॥ हरति उर्वन्तरिक्षमन्विहि इति ॥ २ ॥ शकटस्य नीडे[10] कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमा-स्तृणाति अदित्याः सदोऽसि इति ॥ ३ ॥ तस्मिन् राजानमासादयति अदित्याः सद आसीद इति ॥ ४ ॥ अथैनं वाससा पर्यानह्यति वनेषु व्यन्तरिक्षं ततान इति ॥ ५ ॥ उदु त्यं जातवेदसम् इति सौर्यर्चा कृष्णाजिनं प्रत्यानह्यति ॥ ६ ॥ उस्रावेतं धूर्षाहौ इत्यनड्वाहावुपाजति ॥ ७ ॥ धुरावभिमृशति यथा दर्शपूर्णमासयोः ॥ ८ ॥

1. $A_1$ वलक्ष्यामः; $A_{2-3}$ वलक्ष्याः; $B_1$ वलक्षाः; $B_2$ वलाक्ष्याः
2. $B_1$ मा
3-3. $A_{2-3}$ omitted
4. $B_1$ कतमा°
5. $A_1$ स्तोमं कर्ष्महि; $A_{2-3},B_{1,2}$ °कृष्महि
6. $B_1$ °छन्दास्युत्थाय; $B_2$ °छन्दांसुक्त्वा; R °छन्दा॰स्युत्थाय
7. $B_2$ नाशयति
8. $B_2$ लोष्टैर्नाशयतीत्ये°
9. $B_1$ omitted
10. $A_1,B_2$ नीडे; $B_1$ नीळे

वारुणमसि इति शकटमाखिदति ॥ ९ ॥ वरुणस्त्वोत्तम्नातु[1] इत्युपस्तभ्नोति[2] ॥ १० ॥ वारुणमसि इति योक्त्रपाशं परिहरति ॥ ११ ॥ वरुणस्य स्कम्भनमसि इति शम्यामवदधाति ॥ १२ ॥ प्रत्यस्तो वरुणस्य पाशः इति बलीवर्दमभिदधाति ॥ १३ ॥ एवमेवोत्तरमनड्वाहं युनक्ति ॥ १४ ॥ हरिणी पलाशशाखे शमीशाखे वा बिभ्रत् सुब्रह्मण्योऽन्तरेपेऽवसर्पति ॥ १५ ॥ ततः संप्रेष्यति सोमाय राज्ञे क्रीताय प्रोह्यमाणायानुब्रूहि । प्रस्तन् वाचं यच्छ । सुब्रह्मण्य सुब्रह्मण्यामाह्वय इति ॥ १६ ॥ त्रिरनूक्तायां प्रथमायाम् ॥ १७ ॥ ॥१९॥

अभिप्रयाति[3] व्यन्तस्व मुञ्चस्व इति प्रतिपद्य यजमानस्य स्वस्त्ययन्यसि इत्यन्तेन ॥ १ ॥ प्राञ्चोऽभिप्रयाय प्रदक्षिणमावर्तन्ते[4] ॥ २ ॥ अपि पन्थामगस्महि इत्युत्तरेण राजानमध्वर्युर्यजमानश्चातिक्रामतः ॥ ३ ॥ अग्नीषोमीयेण कर्णगृहीतेन[5] राजानमोह्यमानं यजमानः प्रतीक्षते नमो मित्रस्य वरुणस्य चैक्षसे इति ॥ ४ ॥ अग्नीन् प्रज्वलयन्ति ॥ ५ ॥ आहवनीये महदभ्यादधति[6] ॥ ६ ॥ अध्वर्यव आसन्दीमुद्गृह्णन्ति ॥ ७ ॥ अरत्निमात्रशीर्षण्यानूच्या नाभिदघ्नपादा मौञ्जविवयन्यौदुम्बरी भवति ॥ ८ ॥ तत्रैषोऽत्यन्तप्रदेशः । यत्र क्व च बहून् कर्तॄन् चोदयेदध्वर्यव एव तत् कुर्युः । यत्र द्वौ प्रतिप्रस्थाता तत्र द्वितीयः स्यात् ॥ ९ ॥ अग्रेण प्राग्वंशं वारुणमसि इति शकटमाखिदति ॥ १० ॥ उदगीषमवस्थापयति ॥ ११ ॥ वरुणस्त्वोत्तम्नातु इत्युत्तभ्नाति[7] ॥ १२ ॥ वारुणमसि इति योक्त्रपाशं विचृतति ॥ १३ ॥ वरुणस्य स्कम्भनमसि इति शम्यामुत्खिदति ॥ १४ ॥ उन्मुक्तो वरुणस्य पाशः इत्यभिधानीमुन्मुञ्चति[8] ॥ १५ ॥ वरुणस्यर्तसदनिरसि इति दक्षिणेनाहवनीयमासन्दीं प्रतिष्ठापयति ॥ १६ ॥ दक्षिणो विमुक्तोऽनड्वान् भवति सव्योऽविमुक्तः ॥ १७ ॥ ॥२०॥

अथातिथ्यायास्तन्त्रं प्रक्रमयति ॥ १ ॥ इक्षुशलाके विधृती आश्वबालं प्रस्तरं बर्हिष्युपसंनह्यति । कार्ष्मर्यमयान् परिधीनिध्मे ॥ २ ॥ द्वाविंशतिदारुमिध्मं करोति ॥ ३ ॥ समानमा निर्वपणात् ॥ ४ ॥ अन्वारब्धायां पत्न्यामातिथ्यं निर्वपति ॥ ५ ॥ पत्न्या वा हस्तेन ॥ ६ ॥ अग्नेरातिथ्यमसि विष्णवे त्वा इत्येतैर्मन्त्रैः पञ्चकृत्वो

1. Thus $B_1$; $A_{2-5}$ वरुणस्त्वोतश्नातु; $B_2$ वरुणस्त्वोत्तभ्नातु; R वरुणः स्तभ्नोतु
2. Thus $B_1$; $A_{2-5}$ °स्तभ्नोति; $B_2$ इत्युत्तभनाति
3. $B_2$ °प्रयाग्नि
4. Emended. MSS,R °मावर्तते. cf. ĀpŚS X.29.1.
5. $A_1$ कंण्ठ°
6. $A_{2-5}$,$B_{1,2}$,R °दधाति
7. Thus A,$B_{1,2}$; R °भ्नोति
8. Thus $B_2$; $A_2$ °धानीयमुन्मु°; $A_{2-5}$,$B_1$ °धानीं मुंचति

गृह्णाति ॥ ७ ॥ सर्वेषु सावित्रं जुष्टं चानुपजेदित्येकम्। त्रिष्वेवेत्यपरम् ॥ ८ ॥ वैष्णवो नवकपालः पुरोडाशो भवति ॥ ९ ॥ वैष्णवा एवात ऊर्ध्वं निगमा भवन्ति ॥ १० ॥ हविष्कृता वाचं विसृज्य तथैवोचरमनड्वाहं विमुञ्चति ॥ ११ ॥ वारुणमसि इति राज्ञो वासोऽपादत्ते ॥ १२ ॥ वरुणोऽसि धृतव्रतः इति राजानम् ॥ १३ ॥ अच्छिद्रपत्रः प्रजा उपावरोहोशन्नुशतीः स्योनः[1] स्योनाः[1]। सोम राजन् विश्वास्त्वं प्रजा उपावरोह विश्वास्त्वां प्रजा उपावरोहन्तु इत्युपावहृत्य[2] हरन्ति[2] उर्वन्तरिक्षं वीहि इति ॥ १४ ॥ पूर्वया द्वारा प्राग्वंशं प्रपादयति या ते धामानि हविषा[3] यजन्ति इति[4] ॥ १५ ॥ ॥२१॥

अपरेणाहवनीयमतिक्रम्यासन्द्यां कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तृणाति अदित्याः सदोऽसि इति ॥ १ ॥ तस्मिन् राजानमासादयति अदित्याः सद आसीद इति ॥ २ ॥ अथैनं वाससा परिश्रयति वरुणोऽसि धृतव्रतः इति ॥ ३ ॥ अथैनं वारुण्यर्चा परिचरति[5]

एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य गोपाम्।
स नः शर्म त्रिवरूथं वियंसद् यूयं पात स्वस्तिभिः सदा नः ॥

इति ॥ ४ ॥ ततः संप्रेष्यति राजानं चाग्निं चान्तरेण मा गात[6] इति ॥ ५ ॥ समानमाज्यानां ग्रहणात् ॥ ६ ॥ चतुर्गृहीतान्याज्यानि गृह्णाति ॥ ७ ॥ चतुर्होत्राविध्यमासाद्य संभारयजूंषि व्याख्याय निर्मन्थ्यस्याहुता निर्मन्थ्येन चरति ॥ ८ ॥ सप्तदश सामिधेन्यो भवन्ति ॥ ९ ॥ समानमा प्रयाजेभ्यः ॥ १० ॥ चतुर्थे सर्वमौपभृतं समानयति ॥ ११ ॥ नाग्नौपभृतमभिघारयति ॥ १२ ॥ इडान्ताविध्या संतिष्ठते ॥ १३ ॥ सर्वं पुरोडाशमिडायामुपह्वयेतेत्येकम्। निरवद्येदित्यपरम् ॥ १४ ॥ ॥२२॥

॥ इति[7] दशमः प्रश्नः[7] ॥

---

1-1. $A_1$,$B_{1,2}$ omitted
2-2. Thus $B_2$; $A_1$ इत्युपाहृत्य हरन्ति; $A_{2-5}$,$B_1$,R इत्युपहृत्याहरन्ति
3. $B_2$ यजुषा
4. $A_{3-5}$ omitted
5. $B_2$ परिहरति
6. A,$B_1$ गत
7-7. $A_{1-4}$ प्रथमः $A_5$ omitted; $B_1$ धीः; $B_2$ इति भारद्वाजसूत्रे दशमः (सोमप्रश्नः) प्रश्नः ॥

## अथैकादशः प्रश्नः

प्रवर्ग्यं[1] संभरिष्यन्नुदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे पौर्णमास्याममावास्यायां वा तूष्णीं काण्टकीं[2] समिधमाधाय युञ्जते मनः इति चतुर्गृहीतं जुहोति यद्यदीक्षितो भवति ॥ १ ॥ अथ यदि दीक्षितः काण्टकीमेवैतया समिधमादध्यात् । न[3] जुहुयाद्[3] यजुरेव वदेदित्यपरम् ॥ २ ॥ ततोऽभ्रिमादत्ते खादिरीमौदुम्बरीं वैणवीं वैकङ्कतीं वा ॥ ३ ॥ तस्यास्तत्प्रमाणं यदाग्नियाः[4] ॥ ४ ॥ देवस्य त्वा सवितुः प्रसवे इत्यभ्रिमादाय ब्रह्माणमामन्त्रयते उत्तिष्ठ ब्रह्मणस्पते इति ॥ ५ ॥ उपोत्तिष्ठति[5] ब्रह्मा ॥ ६ ॥ उभावुत्तरमर्धर्चं जपतः ॥ ७ ॥ आदत्ते कृष्णाजिनम् ॥ ८ ॥ अनुनयन्त्यजां पुंच्छगलामश्वं[6] वृषाणमिति ॥ ९ ॥ अथप्रथमाः प्राञ्चोऽभिप्रव्रजन्ति प्रैतु ब्रह्मणस्पतिः इति ॥ १० ॥ अपि वास्यैते[7] संभाराः परिश्रितेऽभ्युदाहृता भवन्ति ॥ ११ ॥ अग्रेणाहवनीयं मृत्खनः[8] । पूर्वःपूर्वं[8] इतरः ॥ १२ ॥ उत्तरेण मृत्खनं कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य द्यावापृथिवी अभिमन्त्रयते मृत्खनं[9] वा[9] देवी द्यावापृथिवी अनु मे मँसाताम्[10] इति[10] ॥ १३ ॥ मृत्खनेऽभ्रिया प्रहरति ऋध्यासमद्य मखस्य शिरः इति ॥ १४ ॥ हरति मखाय त्वा मखस्य त्वा शीर्ष्णे इति ॥ १५ ॥ तूष्णीं कृष्णाजिने निवपति ॥ १६ ॥ एवमेव द्वितीयँ[11] हरति । एवं तृतीयम्[11] ॥ १७ ॥ तूष्णीं चतुर्थं यावतीं मृदं प्रवर्ग्यपात्रेभ्य आप्तां मन्यते ॥ १८ ॥ ॥ १ ॥

ततो वराहविहतमभिमन्त्रयते इयत्यग्र आसीः इति[12] ॥ १ ॥ समानमत ऊर्ध्वम् ॥ २ ॥ ततो वल्मीकवपां देवीर्वम्रीः इति ॥ ३ ॥ समानमत ऊर्ध्वम् ॥ ४ ॥ ततः पूतीकान्[13] इन्द्रस्यौजोऽसि इति ॥ ५ ॥ समानमत ऊर्ध्वम् ॥ ६ ॥

---

1. $A_1$,$B_1$ begin with ओं; $B_2$ with श्रीः ॥ अथ एकादशः प्रश्नः
2. $A_1$ काणंकीं; $B_2$ कांटकीं
3-3. $A_{2-5}$ omitted
4. $A_1$ यदग्निक्याः; $B_2$ यदाग्नि
5. $B_2$ उपोत्तिष्ठञ्जपति
6. $A_1$,$B_1$ पुंश्चकला°
7. $B_2$ वाह्येते
8-8. $B_1$ मद्धनः पूर्वःपूर्वं; $B_2$ मृत्खनं पूर्वंपूर्वं
9-9. $B_1$ मृद्धनं वा; $B_2$ मृत्खनक्षा
10-10. $A_1$ साथामिति; $B_1$ माथाथामिति; $B_2$ मसायामिति
11-11. $A_{2-5}$,R द्वितीयं तृतीयम्
12. $B_2$ इति समानमासीरिति
13. $A_1$ पुतिकान्

कृष्णाजिनलोमान्यजलोमानि च सँसृज्य अग्निजा असि प्रजापते रेतः इति ॥ ७ ॥ समानमत ऊर्ध्वम् ॥ ८ ॥ अथैनानश्वेनावघ्रापयति[1] आयुर्धेहि[1] प्राणं धेहि इति ॥ ९ ॥ अथैनानजयाभिदोहयति मधु त्वा मधुला करोतु इति ॥ १० ॥ अभिदोहनमेकेऽवघ्रापणात्[2] पूर्वं समामनन्ति ॥ ११ ॥ वहन्त आर्याः परिगृह्य हरन्ति ॥ १२ ॥ उत्तरेण विहारमुद्धतेऽवोक्षिते सिकतोपोप्ते परिश्रिते निदधति ॥ १३ ॥ अथैनान्[3] मदन्तीभिरुपसृजति मधु त्वा मधुला करोतु इति ॥ १४ ॥ ये के[4] चोखासँसर्जनाः संभारा यच्चान्यद् दृढार्थमुपार्धं मन्यते ॥ १५ ॥ तत्रैषोऽत्यन्तप्रदेशः । यत् किं च प्रवर्ग्ये उदककृत्यं मदन्तीभिरेव तत् क्रियते ॥ १६ ॥ नैनँ स्त्री प्रेक्षते न शूद्रः ॥ १७ ॥ न कुर्वन्नभिप्राण्यात् ॥ १८ ॥ अपहाय मुखमनभिप्राणन् वेणुना करोति ॥ १९ ॥ न प्रवर्ग्यं चादित्यं[5] च[5] व्यवेयात्[6] ॥ २० ॥ यत्र क्व च विप्रक्रान्ते प्रवर्ग्ये आदित्योऽस्तमियात् कृतान्तादेव विरमेत् । श्वो भूते शेषँ समाप्नुयात् ॥ २१ ॥ संप्लोम्नाय[7] मृदं पिण्डं करोति मखस्य शिरोऽसि इति ॥ २२ ॥ मखस्य पदे स्थः इत्यङ्गुष्ठाभ्यां निगृह्य महावीरं करोति प्रादेशमात्रमपरिमितं वा[8] वायव्याकृति त्र्युद्धि पञ्चोद्धि वा ॥ २३ ॥ गायत्रेण त्वा छन्दसा करोमि इति प्रथमम् । त्रैष्टुभेन इति द्वितीयम् । जागतेन इति तृतीयम् ॥ २४ ॥ अपि वा सर्वैरेकैकम् ॥ २५ ॥ उपबिलँ रास्नां करोति मखस्य रास्नासि इति ॥ २६ ॥ अदितिस्ते बिलं गृह्णातु इति वेणुपर्वणा बिलं करोति यावद्दैवताय सौविष्टकृतायाग्निहोत्राय भक्षायालं मन्यते ॥ २७ ॥ ॥२॥

तृतीयवेलां प्रतिनयति ॥ १ ॥ उत्तरतः सिकतासु प्रतिष्ठापयति सूर्यस्य हरसा श्राय मखोऽसि इति ॥ २ ॥ एवमेव द्वितीयं प्रतिष्ठापयत्येवं[9] तृतीयम् ॥ ३ ॥ तूष्णीमितराणि ॥ ४ ॥ एतस्या एव मृदो दोग्ध्रे करोति हस्त्योष्ठ्ये प्रसेचनवती यथा स्रुगदण्डैवम् ॥ ५ ॥ वर्षीय आध्वर्यवँ ह्रसीयः प्रतिप्रस्थानम् ॥ ६ ॥ एतस्या

---

1–1. $A_1$ हि

2. $A_{1-3}$ °प्राणात; $B_2$ °प्राणात्

3. $A_1$ अथैनाम; $B_1$ अथैनां; R अथैनां

4. $A_{1-3}$,$B_2$,R omitted

5–5. $B_2$ आदित्यं

6. $B_{1,2}$ व्यपेयाद्

7. Thus A,$B_2$; $B_1$ संप्लोम्नाय; R संप्लोम्नाय; See : XIV.19.3

8. $A_1$,$B_1$ omitted

9. A,$B_1$ प्रतिष्ठाप्यैवं; $B_2$ °प्यैवमेवं

आज्यस्थाली रौहिणकपाले च परिमण्डले घोटप्रकारे[1] ॥ ७ ॥ घर्मेष्टकां कुलायिनी-मिति[2] यदि साग्निचित्यो भवति ॥ ८ ॥ अथैनान्[3] श्लक्ष्णीकरणैः श्लक्ष्णीकुर्वन्त्यहतचण्डातकैर्गवीधुकैः क्षीतकाभिर्वेणुपर्वभिराज्येनेति ॥ ९ ॥ अथैनान्[4] धूपनकाले वृष्णोऽश्वस्य शकृद्गार्हपत्ये प्रदीप्य प्रथमकृतं महावीरँ शफाभ्यां परिगृह्य धूपयति वृष्णो अश्वस्य निष्पदसि इति ॥ १० ॥ एवमेव द्वितीयं धूपयत्येवं तृतीयम् ॥ ११ ॥ तूष्णीमितराणि ॥ १२ ॥ शफाभ्यामेवात ऊर्ध्वं महावीरानादत्ते ॥ १३ ॥ अग्रेण गार्हपत्यमवटं खात्वा लोहितपचनीयैः संभारैरवस्तीर्य तत्र प्रथमकृतं महावीर-मुपावहरति अर्चिरसि इति ॥ १४ ॥ शोचिरसि इति द्वितीयम् । ज्योतिरसि तपोऽसि इति तृतीयम् ॥ १५ ॥ तूष्णीमितराण्यन्ववधाय लोहितपचनीयैः संभारैः प्रच्छाद्य गार्हपत्ये मुञ्जानादीप्योपोषति । अर्चिषे त्वा इति पुरस्तात् । शोचिषे त्वा इति दक्षिणतः । ज्योतिषे त्वा इति पश्चात् । तपसे त्वा इत्युत्तरतः ॥ १६ ॥ ॥३॥

अपि वा सर्वैः सर्वतः ॥ १ ॥ पच्यमानानुपचरति अभीमं महिना दिवम् इत्येतयोत्तरया वा ॥ २ ॥ सर्वाण्युपचारणानि मन्त्रवन्ति भवन्ति ॥ ३ ॥ पक्केषु सिद्ध्यै त्वा इति धृष्टी आदायाध्वर्युः प्रथमकृतं महावीरमुद्वासयति देवस्त्वा सवितोद्वपतु इति ॥ ४ ॥ उत्तरतः सिकतासु प्रतिष्ठापयति अपद्यमानः पृथिव्यामाशा दिश आपृण इति ॥ ५ ॥ अथैनमन्वीक्षते[5] सूर्यस्य त्वा चक्षुषान्वीक्षे इति ॥ ६ ॥ एवमेव द्वितीय-मुद्वासयत्येवं तृतीयम् ॥ ७ ॥ तूष्णीमितराणि ॥ ८ ॥ अथैनान् सिकताभिः प्रदक्षिणं पर्यूहति इदमहममुमामुष्यायणं विशा पशुभिर्ब्रह्मवर्चसेन पर्यूहामि इति ॥ ९ ॥ विशा इति राजन्यस्य । पशुभिः इति वैश्यस्य ॥ १० ॥ अथैनान् प्रभूतेनाजापयसा छृणत्ति[6] गायत्रेण त्वा छन्दसा छृणद्मि इत्येतैर्मन्त्रैः । त्रिभिस्त्रिभिरेकैकम् ॥ ११ ॥ अपि वा सर्वैरेकैकम्[7] ॥ १२ ॥ अथैनान् कृष्णाजिन उपनह्यासजति देव पुरश्चर सघ्यासं त्वा इति ॥ १३ ॥ उपरिष्टात्काल एष मन्त्रो भवतीत्यपरम् ॥ १४ ॥ ॥४॥

प्रवर्ग्येण प्रचरिष्यन्तः संवृण्वन्ति द्वाराणि ॥ १ ॥ परिश्रयन्ति पत्न्याः

---

1. $B_1$ घोपाकारे
2. $A_{2-3}$ कुलायिनीं
3. $A_1$ सथैना; $B_1$ अथैनां; R अथैनं
4. $A_1$ सथैना; $A_{2-3}$,$B_1$,R अथैनां; $B_2$ अथैनं
5. $A_1$ °मन्ववेक्षते; $A_{2-3}$ °मन्यक्षते; $B_1$ °मन्ववक्षते
6. Mahādeva on SatS XXIV.1.22 : अथैनान् प्रभूतेनाजापयसा छृणत्तीति आपस्तम्ब-भारद्वाजौ ।
7. $B_1$ omitted

॥ २ ॥ पश्चाद्धोतोपविशति । पुरस्तादध्वर्युः । दक्षिणतो ब्रह्मा यजमानः प्रस्तोता च । उत्तरत आग्नीध्रः प्रतिप्रस्थाता च ॥ ३ ॥ मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वोत्तरेण विहारं दर्भान् सँस्तीर्य तत्रैतान्[1] महावीरानुपावहरति देव पुरश्चर सघ्यासं त्वा इति ॥ ४ ॥ उपरिष्टात्काल एष मन्त्रो भवतीत्यपरम् ॥ ५ ॥ अत्रैव सर्वं परिघर्म्यमुपावहरति[2] ॥ ६ ॥ औदुम्बरी सम्राडासन्दी नितराम् ॥ ७ ॥ राजासन्द्या वर्षीयसीमेके समामनन्ति ॥ ८ ॥ मौञ्जीभी रज्जुभिरेकसराभिर्व्युताम्[3] ॥ ९ ॥ चतस्र औदुम्बरीः स्रुचः ॥ १० ॥ तासां द्वे अनिष्टब्धे ॥ ११ ॥ निष्टब्धयोर्वर्षीयस्युपयमनी[4] ह्रसीयसी प्रोक्षणीधानी ॥ १२ ॥ औदुम्बरौ स्रुवौ । औदुम्बरौ शफौ महावीरसंमिताग्रस्वयौ । औदुम्बरी धृष्टी । औदुम्बरी मेथी । त्रीनौदुम्बरान् मयूखान् । षडौदुम्बरान् शकलान् ॥ १३ ॥ त्रयोदश वैकङ्कतान् परिधीन् काण्टकीं च समिधम् ॥ १४ ॥ प्रभूतानि घर्मेन्धनानि[5] खादिराण्यौदुम्बराणि वैकङ्कतानि कार्ष्मर्यमयाणि वा ॥ १५ ॥ त्रीणि कार्ष्णाजिनानि पवित्राणि येषाँ शुक्लकृष्णलोमानि स्युः ॥ १६ ॥ वैणवा दण्डा बाहुमात्रा भवन्तीति विज्ञायते ॥ १७ ॥ औदुम्बरदण्डानीत्यपरम् ॥ १८ ॥ द्वौ रुक्मौ रजतसुवर्णौ ॥ १९ ॥ शतमानौ[6] भवतः ॥ २० ॥ मौञ्जौ वेदौ । तयोरन्यतरः परिवासितः ॥ २१ ॥ मौञ्जीमभिधानीम् । मौञ्जे निदाने । त्रीणि मौञ्जानि विशाखदामानि ॥ २२ ॥ द्वयान् मुञ्जप्रलवानप्रतिशीर्णाग्रान्[7] ॥ २३ ॥ रौहिणयोः पिष्टान्यपफलीकृतानाम् ॥ २४ ॥ खरेभ्यः सिकताः ॥ २५ ॥ मौञ्जे पवित्रे इत्येकम्[8] । दर्भमये इत्यपरम् ॥ २६ ॥ ॥५॥

तूष्णीं प्रोक्षणीधान्यां प्रोक्षणीः सँस्कृत्य ब्रह्माणमामन्त्रयते[9] ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामः । होतर्घर्ममभिष्टुहि । अग्नीद्रौहिणौ पुरोडाशावधिश्रय । प्रतिप्रस्थातर्विहर । प्रस्तोतः सामानि गाय इति ॥ १ ॥ ब्रह्मा प्रसौति यजुर्युक्तं सामभिराक्तखम् इत्युपाँशूक्त्वा ओमिन्द्रवन्तः प्रचरत इत्युच्चैः ॥ २ ॥ अपि वा प्रचरत इत्युच्चैः सर्वमन्यदुपाँशु

1. $B_2$ अत्रै°
2. $B_2$ °रोहति
3. $A_1$ °र्युता; $B_1$ °र्युता; $B_2$ °व्युता
4. Thus all MSS; R अनिष्टब्ध°
5. $A_1$ पालाशानि
6. $A_1$ शतमानस्य कृतौ; $B_1$ शतमानस्य; $B_2$ शतमानस्य कृतौ
7. Mahādeva on SatS XXIV.2.6 : प्रभूतान् मुञ्जप्रलवानित्यापस्तम्बभरद्वाजौ ।
8. $A_{2-3}$ omitted
9. Mahādeva on SatS XXIV.2.6 : एवमाह भरद्वाजः प्रोक्षणीः संस्कृत्य ब्रह्माणमामन्त्रयते ।

॥ ३ ॥ प्रसूतो ब्रह्मणा सर्वं परिघर्म्यं प्रोक्षति ॥ ४ ॥ यमाय त्वा ॥ मखाय त्वा इत्येतैर्मन्त्रैस्त्रिः प्रोक्षति ॥ ५ ॥ अभिपूर्वं प्रोक्षति ॥ ६ ॥ प्रोक्षितानि व्यायातयतीति विज्ञायते ॥ ७ ॥ अथैतां सम्राडासन्दीमग्रेणाहवनीयं पर्याहृत्य पुरस्ताद् राजासन्द्याः प्रतिष्ठाप्य तस्यां कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तीर्य तस्मिन्नप्रचरणीयौ महावीरावुपावहरति[1] देव पुरश्चर सघ्यासं त्वा इति ॥ ८ ॥ उपरिष्टात्काल एष मन्त्रो भवतीत्यपरम् ॥ ९ ॥ अथैतां मेथीं मयूखान् विशाखदामानीत्यादायाग्रेण होतारं जघनेन गार्हपत्यं दक्षिणया द्वारोपनिष्क्रम्य दक्षिणेन दक्षिणां[2] द्वारं मेथीं निहन्ति होतुः समीक्षायै ॥ १० ॥ एतस्यैव द्वारस्य पूर्वस्या द्वार्याया दक्षिणतो वत्साय शङ्कुं निहन्ति ॥ ११ ॥ एतस्यैवापरस्यै द्वार्यायै दक्षिणतोऽजायै । उत्तरतोऽभ्यन्तरं शर्कराय ॥ १२ ॥ तेषु त्रीणि[3] विशाखदामानि व्यायातयति ॥ १३ ॥ तैरेनान् काले बध्नन्ति ॥ १४ ॥ ततः खरानुपवपति ॥ १५ ॥ उत्तरेण गार्हपत्यमेकम् । उत्तरेणाहवनीयमेकम् । उत्तरपूर्वमवान्तरदेशं[4] प्रत्युच्छिष्टखरं बाह्यतो निःपेचनवन्तम् ॥ १६ ॥ एवं व्यायातितान्येव भवन्त्योद्वासनात् ॥ १७ ॥ ॥६॥

एतस्मिन् काले प्रतिप्रस्थाता दर्विहोमसँस्कारेणाज्यस्थाल्यामाज्यँ[5] सँस्करोति ॥ १ ॥ नैतस्य सँस्कारो विद्यत इत्यपरम् ॥ २ ॥ अधिश्रयत्याग्नीध्रो रौहिणौ पुरोडाशौ तूष्णीमुपचरितौ ॥ ३ ॥ शफाभ्यां महावीरं परिगृह्य वेदेनापरिवासितेन भस्म संमार्ष्टि देव पुरश्चर सघ्यासं त्वा इति ॥ ४ ॥ स्रुवेणाहवनीये सप्तैकादश वा प्राणाहुतीर्जुहोति प्राणाय स्वाहा ॥ व्यानाय स्वाहा इति ॥ ५ ॥ अथैनमाज्येनानक्ति देवस्त्वा सविता मध्वानक्तु इति ॥ ६ ॥ अपरस्मिन् खरे राजतँ रुक्मं निधाय पृथिवी तपसस्त्रायस्व इति प्रतिष्ठाप्य महावीरमन्यस्मै वा प्रदाय द्वयान् मुञ्जप्रलवानादाय दक्षिणेषामग्राणि गार्हपत्ये प्रदीपयति अर्चिषे त्वा इति ॥ ७ ॥ तेषामग्रैरुत्तरेषां मूलानि शोचिषे त्वा इति ॥ ८ ॥ तेषां मूलैर्दक्षिणेषां मूलानि ज्योतिषे त्वा इति ॥ ९ ॥ तेषां मूलैरुत्तरेषामग्राणि तपसे त्वा इति ॥ १० ॥ तान् व्यत्यस्तानुपरि रुक्मे निदधाति अर्चिरसि शोचिरसि इति ॥ ११ ॥ दक्षिणानुत्तरान् करोतीति विज्ञायते ॥ १२ ॥ तेषूपरिष्टान्महावीरं[6] प्रतिष्ठापयति सँसीदस्व महाँ

1. $B_1$ महावीरावुपावहरति; $B_2$ महावीरावुभावुप°
2. Thus $A_2$; $A_1$,$B_{1,2}$,R दक्षिणं; $A_{3-5}$ दक्षिणा
3. R omitted
4. Rudradatta on ĀpŚS XV.6.22: उत्तरपूर्वमवान्तरदेशं प्रतीत्येव भारद्वाजः । Similarly Mahādeva and Vāñcheśvara on SatS XXIV.2.11.
5. $B_{1,2}$ दर्वी°
6. $A_1$ तेषु महावीरं

असि इति ॥ १३ ॥ अथैनमाज्येनाभिपूरयति अञ्जन्ति यं प्रथयन्तः इति ॥ १४ ॥ अभ्यपि महावीरमसँस्पृशन्[1] यजमानः प्राञ्चं प्रादेशं धारयमाणो जपति अनाधृष्या पुरस्तात् इत्येतैर्मन्त्रैर्यथारूपम् ॥ १५ ॥ मनोरश्वासि भूरिपुत्रा इत्युत्तरतः पृथिवीमभिमृशति ॥ १६ ॥ ॥७॥

सिद्ध्यै त्वा इति धृष्टी आदायाध्वर्युः प्रतिप्रस्थाता च गार्हपत्यादुदीचोऽङ्गारान् निरूहतः तपो ष्वग्ने अन्तराँ अमित्रान् इति ॥ १ ॥ तैरेनं प्रदक्षिणं पर्यूहतः चितः स्थ परिचितः इति ॥ २ ॥ अथैनं त्रयोदशभिर्वैकङ्कतैः परिधिभिः परिधत्तः । मा असि इति प्राञ्चमध्वर्युर्निदधाति । प्रमा असि इत्युदञ्चौ प्रतिप्रस्थाता ॥ ३ ॥ एवमेवोत्तरैरुत्तरैर्मन्त्रैः परिधत्तः । पूर्वेणपूर्वेणाध्वर्युरुत्तरेणोत्तरेण प्रतिप्रस्थाता ॥ ४ ॥ अध्वर्युरेव दक्षिणतस्त्रयोदशं निदधाति अन्तरिक्षस्यान्तर्धिरसि इति ॥ ५ ॥ अथैनँ सौवर्णेन रुक्मेणापिदधाति दिवं तपसस्त्रायस्व इति ॥ ६ ॥ अथैनमभिमन्त्रयते आभिर्गीर्भिः इति तिसृभिः ॥ ७ ॥ ततो धवित्राण्यादत्ते । गायत्रमसि इति प्रथमम् । त्रैष्टुभमसि इति द्वितीयम् । जागतमसि इति तृतीयम् ॥ ८ ॥ तैरेनं त्रिरूर्ध्वमुपवाजयति मधु मधु इति ॥ ९ ॥ तेषामेकं प्रतिप्रस्थात्रे प्रयच्छत्येकमाग्नीध्राय ॥ १० ॥ आग्नीध्रप्रथमास्त्रिः प्रदक्षिणमूर्ध्वं धून्वन्तः[2] परियन्ति ॥ ११ ॥ अथैनं पर्युपविशन्ति पुरस्तादध्वर्युर्दक्षिणतः प्रतिप्रस्थातोत्तरत आग्नीध्रः ॥ १२ ॥ अव्यविषक्तं धून्वन्तः प्रणवैः सँराधयन्त इन्धानाः समञ्जन्त आसते ॥ १३ ॥ प्रज्वलिते रुक्ममपादत्त इति विज्ञायते ॥ १४ ॥ यत्राभिजानाति याभिर्वर्तिका ग्रसितामुञ्चतम् इति तदध्वर्युर्महावीरमामन्त्रयते दश प्राचीर्दश भासि दक्षिणाः इत्यनुवाकेन ॥ १५ ॥ यत्राभिजानाति अप्नस्वतीमश्विना वाचमस्मे इति तदुपोत्तिष्ठन्नध्वर्युराह रुचितो घर्मः इति ॥ १६ ॥ ततोऽध्वर्युप्रथमास्त्रिरनभिधून्वन्तः प्रतिपरियन्ति[3] ॥ १७ ॥ धवित्राण्यादाय प्रतिप्रस्थात्रे प्रयच्छति ॥ १८ ॥ तत् प्रतिप्रस्थाताग्रेणाहवनीयं पर्याहृत्य सम्राडासन्द्यां निदधाति ॥ १९ ॥ यथालोकमवस्थाय सर्वं ऋत्विजो यजमानश्चाधीयन्तो महावीरमवेक्षन्ते अपश्यं गोपाम् इति ॥ २० ॥ अनु-

1. B, °संस्पर्शयन्
2. A, धुन्वंतः; Mahādeva on SatS XXIV.3.4: आग्नीध्रः प्रथममिति भरद्वाजापस्तम्बाभ्यामपि समाम्नानात् ।
3. Mahādeva on SatS XXIV.3.7: अध्वर्युप्रथमा अनभिधून्वन्तस्त्रिः परियन्ति इति भरद्वाजापस्तम्बौ ।

वाक्शेषं तु[1] प्रतिप्रस्थाता परिश्रिते पत्नीं वाचयति त्वष्टीमती ते सपेय इति ॥ २१ ॥ ॥८॥

ततः संप्रेष्यति अग्नीद्रौहिणौ पुरोडाशावासादय इति ॥ १ ॥ अनिष्टुभयोः स्रुचोरुपस्तीर्णाभिघारितौ पुरोडाशावासादयति ॥ २ ॥ दक्षिणं परिधिसंधिमन्वेकम् । उत्तरं परिधिसंधिमन्वितरम् ॥ ३ ॥ सावित्रेण रशनामादाय पूर्वया द्वारोपनिष्क्रम्य[2] त्रिरुपांशु घर्मदुघमाह्वयति इड एह्यदित एहि सरस्वत्येहि इति ॥ ४ ॥ प्रत्येत्य दोग्ध्रे निदाने इत्यादाय दक्षिणया[3] द्वारोपनिष्क्रम्य त्रिरुच्चैः असावेह्यसावेहि इति यथानामा भवति ॥ ५ ॥ अदित्या उष्णीषमसि इति रशनया घर्मदुघमभिदधाति । वायुरस्यैडः इति वत्सम् ॥ ६ ॥ पूषा त्वोपावसृजतु इत्युपावसृजति ॥ ७ ॥ यस्ते स्तनः शशयः इति घर्मदुघमभिमन्त्रयते ॥ ८ ॥ उस्र घर्मं शिंष[4] इति[4] निदाय वत्समुपसीदति बृहस्पतिस्त्वोपसीदतु इति ॥ ९ ॥ दानवः स्थ पेरवः इति स्तनान् संमृशति ॥ १० ॥ वर्षीयसि दोग्ध्रे दोग्धि अश्विभ्यां पिन्वस्व सरस्वत्यै पिन्वस्व इति ॥ ११ ॥ तूष्णीं प्रतिप्रस्थाता हसीयस्यजाम् ॥ १२ ॥ अग्नीधे पयसी प्रदाय पूर्वावतिद्रुत्य शफोपयमानाददाते । गायत्रोऽसि इति प्रथमम् । त्रैष्टुभोऽसि इति द्वितीयम् । जागतमसि इत्युपयमनं प्रतिप्रस्थाता ॥ १३ ॥ यत्राभिजानाति उत्तिष्ठ ब्रह्मणस्पते इति तदाग्नीध्र उपोत्तिष्ठति ॥ १४ ॥ यत्राभिजानाति उपद्रव पयसा गोधुगोषम्[5] इति तत् पय आहरति ॥ १५ ॥ आह्रियमाणमभिमन्त्रयते सहोर्जो भागेनोप मेहि इति ॥ १६ ॥ इन्द्राश्विना मधुनः सारघस्य इति महावीरे गोपय आनयति ॥ १७ ॥ स्वाहा त्वा सूर्यस्य रश्मये वृष्टिवनये जुहोमि इत्यूष्माणमुद्यन्तमभिमन्त्रयते ॥ १८ ॥ मधु हविरसि इत्यजापयः ॥ १९ ॥ ॥९॥

अजापयस एके पूर्वमानयनं समामनन्ति ॥ १ ॥ द्यावापृथिवीभ्यां त्वा परिगृह्णामि इति शफाभ्यां महावीरं परिगृह्य वेदेन परिवासितेन भस्म प्रमृज्य प्रतिप्रस्थातोपयमनेनोपयच्छति अन्तरिक्षेण त्वोपयच्छामि इति ॥ २ ॥ देवानां त्वा पितॄणामनुमतो भर्तुं शकेयम् इत्युद्यम्य हरति तेजोऽसि तेजोऽनु प्रेहि इति ॥ ३ ॥ गच्छन्नेवानवानं[6] पञ्च वातनामानि व्याचष्टे समुद्राय त्वा वाताय स्वाहा इति

1. $A_{2-5}$ omitted
2. $B_2$ °निष्काम्य
3. Thus $A_{2-5}$; $B_1$ दक्षिणाया; R दक्षिणा
4–4. $A_1$,$B_1$ शिश्वेति; $A_{2-5}$ शिषेति
5. $A_1$ गोधुनोधुम्
6. Thus $B_2$; $A_1$ गच्छन्नवानां; $A_{2-5}$,$B_1$,R गच्छन्ननवानं

॥ ४ ॥ अपान्य पञ्चोत्तराणि अग्नये त्वा वसुमते स्वाहा इति ॥ ५ ॥ एतस्मिन् काले प्रतिप्रस्थाता दक्षिणं रौहिणं स्रुचा प्रतिष्ठितं जुहोति[1] अहर्ज्योतिः केतुना जुषतां सुज्योतिर्ज्योतिषां स्वाहा इति ॥ ६ ॥ दक्षिणातिक्रामन्नध्वर्युर्ब्रह्माणमीक्षते[2] विश्वा आशा दक्षिणसत् इति ॥ ७ ॥ विश्वान् देवानयाडिह इति होतारम् ॥ ८ ॥ स्वाहाकृतस्य घर्मस्य इति घर्ममभिमन्त्र्याश्राव्य प्रत्याश्राविते संप्रेष्यति घर्मस्य यज इति ॥ ९ ॥ वषट्कृते जुहोति अश्विना घर्मं पातम् इति ॥ १० ॥ अनुवषट्कृते द्वितीयम् स्वाहेन्द्रा वट् इति ॥ ११ ॥ हुतं यजमानोऽनुमन्त्रयते घर्मगपातमश्विना इत्यनुवाकशेषेण ॥ १२ ॥ अथैनमुपर्याहवनीये धारयन् शृतदध्नाभिपूरयति ॥ १३ ॥ विक्षरन्तमभिमन्त्रयते इषे पीपिह्यूर्जे पीपिहि इति ॥ १४ ॥ अथैनं दिशोऽनुप्रहापयति[3] । त्विष्यै त्वा इति पुरस्तात् । द्युम्नाय त्वा इति दक्षिणतः । इन्द्रियाय[4] त्वा इति पश्चात् । भूत्यै त्वा इत्युत्तरतः ॥ १५ ॥ प्रत्याक्रम्योपयमने क्षेपमानीयान्तर्वेद्युपयमनं निधाय पूर्वस्मिन् खरे राजतं रुक्मं निधाय तस्मिन् महावीरं प्रतिष्ठापयति ॥ १६ ॥ ॥१०॥

धर्मासि सुधर्मा मे न्यस्मे ब्रह्माणि धारय इति ॥ १ ॥ क्षत्राणि धारय इति राजन्यस्य । विशं धारय इति वैश्यस्य ॥ २ ॥ नेत् त्वा वातः स्कन्दयात् इति ॥ ३ ॥ यद्यभिचरेत् अमुष्य त्वा प्राणे सादयाम्यमुना सह निरयं[5] गच्छ इति ब्रूयाद्यं द्विष्यात् ॥ ४ ॥ अत्र[6] प्रतिप्रस्थाता पूर्ववदुत्तरं रौहिणं जुहोति ॥ ५ ॥ उपयमनेऽङ्गारान् शकलानादधाति पूष्णे शरसे स्वाहा इत्येतैः प्रतिमन्त्रम् ॥ ६ ॥ षष्ठं शकलं सर्वेषु लेपेष्वक्त्वानन्वीक्षमाण उदञ्चं निरस्यति रुद्राय रुद्रहोत्रे स्वाहा इति ॥ ७ ॥ अप उपस्पृशति[7] ॥ ८ ॥ पुरस्ताद्रौहिणहोमाच्छकलानेके[8] समामनन्ति ॥ ९ ॥ तूष्णीं काण्टकीं समिधमाधाय तूष्णीमग्निहोत्रं जुहोति ॥ १० ॥

---

1. Rudradatta on ĀpŚS XV.10.10: स्रुचा प्रतिष्ठितं जुहोतीत्येव भारद्वाजः। Vāñcheśvara on SatŚ XXIV.4.8: स्रुचानिष्क्रम्य प्रतिष्ठितं जुहोतीति भारद्वाजः।
2. $B_{1,2}$ °ब्रह्मण°
3. $A_1$ °प्रहानयति; $B_2$ प्रवाहयमिति; Vāñcheśvara on SatŚ XXIV.4.11: भारद्वाजोऽप्यध्वर्युं कर्तारमाह। अथैनमुपर्याहवनीये धारयन् शृतदध्नाभिपूरयति। विक्षरन्तमनुमन्त्रयत इषे पीपिहीति। अथैनं दिशोऽनुप्रहापयतीति।
4. $A_1$,$B_{1,2}$ इंद्राय
5. $B_2$,R निरस्तं
6. $A_1$ omitted
7. $B_2$ उपस्पृश्य
8. Thus $B_2$; $A_1$ °होमशकला°

भूः स्वाहा इति वा ॥ ११ ॥ उपयमने शेषं सर्वे समुपहूय भक्षयन्ति । होताग्रेऽथाध्वर्युरथ ब्रह्माथ प्रतिप्रस्थाताथाग्नीध्रोऽथ यजमानः ॥ १२ ॥ सर्वे प्रत्यक्षम् । अपि वा यजमान एव प्रत्यक्षमवघ्रेणेतरे ॥ १३ ॥ हुतँ हविर्मधु हविः इति भक्षयित्वोपयमनं प्रतिप्रस्थात्रे प्रयच्छति[1] ॥ १४ ॥ तत्[2] प्रतिप्रस्थातोच्छिष्टखरे मार्जयित्वान्तर्वेद्युपयमनं निधाय तस्मिन् राजतसुवर्णौ[3] रुक्माववधाय[3] मदन्तीरानीयोत्तमेनानुवाकेन शान्तिं कृत्वा निनीयाप[4] उपयमने[4] सर्वं परिधर्म्यं[*] समवधाय संप्रेष्यति ॥ १५ ॥ ॥११॥

घर्माय सँस्त्रभानायानुब्रूहि इति ॥ १ ॥ आ यस्मिन्त्सप्त वासवाः इत्यभिज्ञायाग्रेणाहवनीयं पर्याहृत्य सम्राडासन्द्यां सादयति । स्वाहा त्वा सूर्यस्य रश्मिभ्यः इति प्रातः । स्वाहा त्वा नक्षत्रेभ्यः इति सायम् ॥ २ ॥ यत्राभिजानाति अद्धि तृणमघ्निये विश्वदानीम् इति तद्गामवसृजति ॥ ३ ॥ एवमेव सायंप्रातः प्रवर्ग्येण प्रचरति ॥ ४ ॥ त्र्युपसत्के षट्कृत्वः षडुपसत्के द्वादशकृत्वो द्वादशोपसत्के चतुर्विंशतिकृत्वः ॥ ५ ॥ एतावन्नाना ॥ ६ ॥ उत्तरेण मन्त्रेण सायँ रौहिणं जुहोति ॥ ७ ॥ अपीपरो माह्नो रात्रियै[5] मा पाहि इति सायं काण्टकीं[6] समिधमादधाति । अपीपरो मा रात्रिया[7] अह्नो मा पाहि इति प्रातः ॥ ८ ॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा इति सायमग्निहोत्रं जुहोति । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा इति प्रातः ॥ ९ ॥ सँसृष्टहोमं वा ॥ १० ॥ अग्निष्टोमे प्रवृणक्ति ॥ ११ ॥ नोक्थ्ये प्रवृञ्ज्यात् ॥ १२ ॥ विश्वजिति सर्वपृष्ठे प्रवृणक्ति ॥ १३ ॥ न प्रथमयज्ञे प्रवृञ्ज्यात् ॥ १४ ॥ प्रवृञ्ज्याद्वा ॥ १५ ॥ योऽनूचानः श्रोत्रियस्तस्य प्रवृञ्ज्यात् ॥ १६ ॥ प्रवृञ्ज्याद् दुर्ब्राह्मणस्य ॥ १७ ॥ ब्रह्मवर्चसकामस्येत्येकेषाम् ॥ १८ ॥ तं प्रवृज्य संवत्सरं न माँसमश्नीयान्न रामामुपेयान्न मृन्मयेन[8] पिबेन्नास्य राम उच्छिष्टं पिबेत् ॥ १९ ॥ तेज एव तत् सँश्यतीति विज्ञायते ॥ २० ॥ ॥१२॥

प्रवर्ग्यमुद्वासयिष्यन्नजामग्नीधे ददाति पष्ठौहीं ब्रह्मणे धेनुं होत्रे रुक्मा-

---

1. $B_2$ प्रचरति
2. $B_2$ ततः
3–3. $B_2$ रजतसुवर्णरुक्मा°
4–4. $A_2$ निनीय पात्रेपयमने; $A_{3-5}$ निनीयापात्रेपयमने; $B_2$ निनायाप उपयमने
5. $A_1,B_{1,2}$ रात्र्यै
6. $B_2$ कांडकीं; R reads काण्टकीं समिधमादधाति as a separate sūtra.
7. $A_1,B_{1,2}$ रात्र्या
8. $A_1,B_{1,2}$ मृण्म°

वध्वर्यवे ॥ १ ॥ समोप्यापरं खरं पूर्वस्मिन् खरे निवपति[1] ॥ २ ॥ अथैतौ सम्राडासन्दीमुत्तरेणाहवनीयं प्रतिष्ठाप्य तस्यां सर्वं परिघर्म्यं समवदधाति ॥ ३ ॥ औदुम्बर्या[2] स्रुचि[2] चतुर्गृहीतं गृहीत्वाहवनीये तिस्र आहुतीर्जुहोति घर्म या ते दिवि शुक् इत्येतैर्मन्त्रैः ॥ ४ ॥ अपि वा प्रतिप्रस्थाता त्रीन् संनखान् शलाकामुष्टीनादाय तेषामेकमाहवनीये प्रदीप्यास्यदघ्ने धारयति। तमध्वर्युरभिजुहोति घर्म या ते दिवि शुक् इति ॥ ५ ॥ तस्मिन्नपरं प्रदीप्याहवनीये पूर्वं प्रहृत्य नाभिदघ्ने धारयति। तमध्वर्युरभिजुहोति घर्म या तेऽन्तरिक्षे शुक् इति ॥ ६ ॥ तस्मिन्नपरं प्रदीप्याहवनीये पूर्वं प्रहृत्य जानुदघ्ने धारयति। तमध्वर्युरभिजुहोति घर्म या ते पृथिव्यां शुक् इति ॥ ७ ॥ आहवनीय एवैनमनुप्रहरति ॥ ८ ॥ एतस्मिन् काले प्रतिप्रस्थाता परिश्रिते पत्नीमुदानयति अनु नोऽद्यानुमतिः इति ॥ ९ ॥ अन्विदनुमते त्वम् इत्युपनिष्क्रामन्ति[3] ॥ १० ॥ आहरन्ति[3] मेथीम्। अनुहरन्ति मयूखान्। आददते खरौ[4] ॥ ११ ॥ दक्षिणत उच्छिष्टखरं परिहरति ॥ १२ ॥ अथैतस्याः सम्राडासन्द्या प्रावन्तर्वेदि पादौ द्वौ बहिर्वेदि प्रतिष्ठाप्य संप्रेष्यति प्रस्तोतः सामानि[5] गाय इति ॥ १३ ॥ सह पत्न्या त्रिः साम्नो निधनमुपयन्ति ॥ १४ ॥ अर्धाध्वे[6] द्वितीयम्। अपरेणोत्तरवेदि तृतीयम् ॥ १५ ॥ दिवस्त्वा परस्पायाः इति प्रथमेऽभिप्रव्रजन्ति। ब्रह्मणस्त्वा परस्पायाः इति द्वितीये। प्राणस्य त्वा परस्पायाः इति तृतीये ॥ १६ ॥ ॥१३॥

अथैतौ[7] सम्राडासन्दीमुत्तरेणोत्तरवेदिं प्रतिष्ठाप्य संप्रेष्यति प्रस्तोतर्वार्षाहरं साम गाय। इडाहोत्रीयं साम गाय इति ॥ १ ॥ इडाहोत्रीयस्य साम्नो निधनमुपयन्ति न वार्षाहरस्य ॥ २ ॥ यद्युपरिष्टात् परिपिञ्चेत् तत्र वार्षाहरं चोदयेत् ॥ ३ ॥ उदकुम्भमादाय प्रदक्षिणमुत्तरवेदिं त्रिः परिषिञ्चन् पर्येति वस्तुरसि शंयुधायाः इति ॥ ४ ॥ त्रिरपरिषिञ्चन् प्रतिपर्येति शं च वक्षि परि च वक्षि इति ॥ ५ ॥ चतुःस्रक्तिर्नाभिर्ऋतस्य इत्युत्तरवेदिमभिमृश्योत्तरेणोत्तरनाभि खरौ न्युप्यानुव्यूहति सदो विश्वायुः इति ॥ ६ ॥ मार्जालीयदेश उच्छिष्टखरं निवपति अप द्वेषो अप ह्वरः

1. A₁ निवपति
2–2. A₁ औदुंबर्या स्रुचा; B₁ औदुम्बर्यैर्वा
3–3. B₂ °निष्कामत्याहरति
4. A₁ खरेण
5. B₂ साम
6. Thus B₂; A,B₁ अर्धार्धे
7. A₁ अपरस्तात्

इति ॥ ७ ॥ अथ उपस्पृश्योत्तरेणोत्तरनाभिं खरे हिरण्यं निधाय तस्मिन् प्रचरणीयं महावीरमुपावहृत्येतरावुपावहरति[1] पूर्वापरौ दक्षिणोत्तरौ वा ॥ ८ ॥ अथैतस्मिन् प्रचरणीये गोपय आनयति महीनां पयोऽसि विहितं देवत्रा इति ॥ ९ ॥ ज्योतिर्भा असि वनस्पतीनामोषधीनाँ रसः इति मधु[2] ॥ १० ॥ वाजिनं त्वा वाजिनोऽवनयामः इति दधि ॥ ११ ॥ एवमेव द्वितीयं पूरयत्येवं तृतीयम् ॥ १२ ॥ अपि वाज्यमेव प्रथम आनयेन्मधु द्वितीये दधि तृतीये[3] ॥ १३ ॥ घर्मैतत् तेऽन्नमेतत् पुरीषम् इति दध्ना मधुमिश्रेण यान्यासेचनवन्ति तानि पूरयति ॥ १४ ॥ अभ्युक्षतीतराण्यरिक्ततायै[4] ॥ १५ ॥ आदित्याकृतिं करोति ॥ १६ ॥ ॥१४॥

अथ यदि पुरुषाकृतिं चिकीर्षेदत्रैनेतरावुपावहृत्य शिरसो रूपं करोति ॥ १ ॥ उपरिष्टान्मौञ्जवेदमप्रच्छिन्नाग्रं[5] शिखायै रूपम् ॥ २ ॥ हिरण्यशकलावाज्यस्रुवौ चाक्ष्यो रूपम् ॥ ३ ॥ स्रुवौ नासिकयो रूपम् ॥ ४ ॥ दोग्ध्रे[6] कर्णयो[6] रूपम् ॥ ५ ॥ प्रोक्षणीधानीं मुखस्य[7] रूपम् ॥ ६ ॥ आज्यस्थालीं ग्रीवाणाँ रूपम् ॥ ७ ॥ धृष्टी जत्रूणाँ रूपम् ॥ ८ ॥ शफावंसयो रूपम् ॥ ९ ॥ रौहिणहवन्यौ बाह्वो रूपम् ॥ १० ॥ दशौदुम्बरीः समिधोऽङ्गुलीनाँ रूपम् ॥ ११ ॥ प्राचीं मेथीं पृष्टीनाँ रूपम् ॥ १२ ॥ अभितो धवित्रे पार्श्वयो रूपम् ॥ १३ ॥ मध्ये तृतीयमुरसो रूपम् ॥ १४ ॥ मध्य उपयमनमुदरस्य रूपम् ॥ १५ ॥ तस्मिन् सर्वँ रज्जुमयँ समवदधात्यान्त्राणाँ रूपम् ॥ १६ ॥ पश्चादभ्रिं तिरश्चीँ श्रोण्यो रूपम् ॥ १७ ॥ अभितः शङ्कू सक्थ्यो रूपम् ॥ १८ ॥ मध्ये तृतीयं मेढ्रस्य रूपम् ॥ १९ ॥ रौहिणकपाले पाष्ण्योः रूपम् ॥ २० ॥ दशौदुम्बरीः समिधोऽङ्गुलीनाँ रूपम् ॥ २१ ॥ रौहिणपिष्टलेपमभिप्रध्वंसयति मज्ज्ञानाँ रूपम् ॥ २२ ॥ उपरिष्टान्मौञ्जवेदं विस्रस्य निदधाति स्नाव्नाँ रूपम् ॥ २३ ॥ अवकाभिर्धूपतृणैरिति प्रच्छादयति माँसस्य रूपम् ॥ २४ ॥ दध्ना मधुमिश्रेणावोक्षति लोहितस्य रूपम्

---

1. Thus $B_1$; $A_{3-8}$,$B_2$ महावीरमुपावहरति; Mahādeva on SatS XXIV.6.8: प्रचरणीयं महावीरमुपावहरतीति भरद्वाजः ।
2. $A_{2-8}$ omitted
3. Mahādeva on SatS XXIV.6.8: यथा पूर्वं प्रचरणीयेन महावीरे दध्यानयतीति भरद्वाजः ।
4. $A_1$ °व्यतिरिक्तायां
5. $B_2$ °प्रतिछिन्नाग्रं
6-6. $A_1$ दोग्ध्रकर्णयो
7. $A_{3-8}$ मुख

॥ २५ ॥ कृष्णाजिनेन प्राचीनग्रीवेणोत्तरलोम्ना प्रच्छादयति त्वचो लोम्नाँ रूपम् ॥ २६ ॥ उपरिष्टात् सम्राडासन्दीं विस्रस्य निदधाति। साम्राज्यस्य रूपं करोति ॥ २७ ॥ ॥१५॥

उत्तरवेद्यामुद्वासयेत् तेजस्कामस्य। उत्तरवेद्यामन्नाद्यकामस्य ॥ १ ॥ पुरो वा पश्चाद्वोद्वासयेत् ॥ २ ॥ नदीद्वीप उद्वासयेत् ॥ ३ ॥ यदि नदीद्वीप उद्वासयेन्न परिषिञ्चेत् ॥ ४ ॥ यं द्विष्याद्यत्र स स्यात् तस्यां दिश्यौदुम्बर्याः शाखायामुद्वासयेत् इदमहममुष्यामुष्यायणस्य[1] शुचा प्राणमपिदधामि इति ॥ ५ ॥ शुचैवास्य[2] प्राणमपिदधाति। ताजगार्तिमार्छतीति विज्ञायते ॥ ६ ॥ यत्र दर्भा उपदीकसंतताः स्युस्तदुद्वासयेद् वृष्टिकामस्य ॥ ७ ॥ उत्तरवेद्यां[3] नित्यं कल्पं[3] ब्रुवते ॥ ८ ॥ नैनमुद्वासितं वयाँसि पर्यासीरन्नाग्नेः[4] प्रणयनात्[4] ॥ ९ ॥ अत्रैके परिषेचनँ समामनन्ति ॥ १० ॥ अथैनमुपतिष्ठन्ते रन्तिर्नामासि दिव्यो गन्धर्वः इति प्रतिपद्य सह प्रजया सह रायस्पोषेण इत्यन्तेन ॥ ११ ॥ मार्जालीयदेश उच्छिष्टखरे मार्जयन्ते सुमित्रा न आप ओषधयः सन्तु इति ॥ १२ ॥ उद्वयं तमसस्परि इत्यादित्यमुपस्थाय उदु त्यम्॥ चित्रम् इति द्वाभ्यां[5] गार्हपत्ये हुत्वोपतिष्ठन्ते[6] इमम् षु त्यमस्मभ्यम् इति ॥ १३ ॥ ॥१६॥

यदि घर्मः स्कन्देत् अस्कान् द्यौः पृथिवीम् इति द्वाभ्यामेनमभिमन्त्रयेत[7] ॥ १ ॥ यदि घर्मेण चरत्सु विद्युदापतेत्[8] यां[8] पुरस्ताद्विद्युदापतत् इत्येतैर्यथालिङ्गं जुहुयात् ॥ २ ॥ अथ यदि सर्वतः सर्वा जुहुयात् ॥ ३ ॥ अथैतानि घर्मप्रायश्चित्तानि जुहोति प्राणाय स्वाहा॥ पूष्णे स्वाहा इत्यनुवाकाभ्याम् ॥ ४ ॥ घर्मेष्टकामुपदधाति उदस्य शुष्माद्भानुः इत्यनुवाकेन ॥ ५ ॥ कुलायिनीं यास्ते अग्ने आर्द्रा योनयः इत्यनुवाकेन ॥ ६ ॥ संचितमग्निमैडिकयाभिमृशति अग्निरसि वैश्वानरोऽसि इत्यनुवाकेन ॥ ७ ॥ भूर्भुवः सुवः इति सर्वप्रायश्चित्तानि ॥ ८ ॥ यदि महावीरः पद्येत ऊर्ध्व ऊ षु ण ऊतये इति द्वाभ्यामेनमुच्छ्रयेत् ॥ ९ ॥ यदि भिद्येत विधुं दद्राणम्

1. $A_{2-5}$,$B_1$ omit अमुष्य.
2. $A_{2-5}$ स्रुवा
3-3. Thus all MSS; R उत्तरवेद्यामुत्तरकल्पं
4-4. $B_{1,2}$ °न्नाभिप्र°
5. $A_1$ omitted
6. $A_1$ repeats हुत्वा.
7. $A_{2-5}$,$B_1$ °मंत्रयते
8-8. $A_1$,$B_2$ omitted

इति संधाय यानि दृढार्थे सँश्लेषणानि वैरेनमभिदिह्येद्यदन्यन्मापेभ्यो[1] माँसाच्च यदते चिदभिश्रिय: इति ॥ १० ॥ यद्यप्रचरणीयः संपद्येतान्यस्मै[2] स्थानमपिदध्यात् ॥ ११ ॥ यदि घर्ममविपरीयुः न वा प्रतिपरीयुः पुनरूर्जा॥ सह रय्या इत्येताभ्यामेनं प्रतिपरीयुः ॥ १२ ॥ ॥१७॥

अथैतानि घर्मे व्यथिते प्रायश्चित्तानि जुहोति मा नो घर्म व्यथितो विव्यथो नः इत्यष्टौ ॥ १ ॥ यदि घर्मेण[3] चरत्स्वादित्योऽस्तमियादपरस्यां द्वारि दर्भेण हिरण्यं प्रबध्य उद्वयं तमसस्परि इत्युपस्थाय उदु त्यम्॥ चित्रम् इति द्वाभ्यां गार्हपत्ये हुत्वा प्रवृज्य श्वो भूत आदित्यमुपतिष्ठते वयः सुपर्णाः इत्येतया ॥ २ ॥ दधिघर्मं भक्षयन्ति भूर्भुवः सुवः इत्यनुवाकेन ॥ ३ ॥ यदि घर्मधुग् दोहनकाले नागच्छेदन्यां दुग्ध्वा प्रवृज्य ताँ सुत्यायां ब्राह्मणाय दद्यात् ॥ ४ ॥ यदि घर्मदुघि पयो न स्याद् दतेश्चतुर्थं पादँ स्तनं कृत्वा पिन्वयेत् ॥ ५ ॥ यदि दधि दुहीत बार्हस्पत्यँ शँसेत् । यदि पय आश्विनँ सोदकम् ॥ ६ ॥ यदि लोहितं दुह्येतान्यद्वा विवर्णमन्वाहार्यपचनं परिश्रित्य अग्नये रुद्रवते स्वाहा इति जुहुयात् ॥ ७ ॥ यदि निर्धयेद्द्वात्रिँशतमृग्भ्यां जुहुयात् ॥ ८ ॥ यद्यमेध्यमयज्ञियं वाम्युपविशेदाग्निवारुण्यर्चा[4] जुहुयात् । आग्नेय्या वा ॥ ९ ॥ यद्येनां वयोऽभिविक्षिपेद्वायव्यर्चा जुहुयात् ॥ १० ॥ यद्युद्वा पतेत् प्र वा मीयेत सं वा शीर्येत शार्दूलो वा हन्यादर्कक्षीरमजाक्षीर आश्चोत्य प्रचरेत् ॥ ११ ॥ ॥१८॥

अथातः सुत्यायां प्रवृञ्जनम् ॥ १ ॥ यदि पुरस्तादरुणा स्यादथ प्रवृज्यः ॥ २ ॥ उपकाश उपव्युषं समयाविषित उदितानुदित उदिते वा ॥ ३ ॥ प्रातः संगवे वा ॥ ४ ॥ माध्यंदिने वा पवमाने स्तुते ॥ ५ ॥ सकृदेवाग्नीध्रे प्रवृज्य इति विज्ञायते ॥ ६ ॥ तान्येतानि प्रवृञ्जनान्यौपसदैः प्रवृञ्जनैर्विकल्पेरन् ॥ ७ ॥ व्याख्याता घोरास्तन्वः । अरण्येऽनुवाकयश्च गण उत्तरौ चानुवाकौ ॥ ८ ॥ यदि घर्मेण चरत्स्वेकस्रुक उच्छिष्येत् वि मा इन्द्र विचरन् स्पाशयस्व इत्येनमभिमन्त्रयेत ॥ ९ ॥ उभयत आदीप्योल्मुकमस्मै प्रत्यस्येत् अग्ने अग्निना संवदस्व इति ॥ १० ॥ अथैनमभिमन्त्रयते सकृत् ते अग्ने नमः इत्यनुवाकशेषेण ॥ ११ ॥ यदि गृध्रः

1. R omits यद्.
2. $A_1$, $B_{1,2}$ °न्यमस्मै
3. $A_1$,$B_1$ घर्मो
4. Thus $B_2$; R °विशेद् वारुण्यर्चा

सालावृकी भयेडको दीर्घमुख्युल्को भूतोपसृष्टः शकुनिर्वा वदेत् असृङ्मुखः ॥ यदेतत् ॥ यदीपितः ॥ दीर्घमुखि ॥ इत्यादुल्कः ॥ यदेतद्भूतान्यन्वाविश्य ॥ प्रसार्य संबध्यौ इत्येतैर्यथालिङ्गमभिमन्त्र्योल्मुकमत्यसनादि समानम् ॥ १२ ॥ ॥१९॥

यदि घर्मधुक् क्रिमीणा[1] स्यात् अत्रिणा त्वा क्रिमे हन्मि इत्यनुवाकेनास्याः क्रिमीन् हन्यात् ॥ १ ॥ अपि वा सार्वत्रिकमेवैतत् प्रायश्चित्तं क्रियेत[2] ॥ २ ॥ यमभिचरेत् तस्य लोहितमवदानं जुहुयात् आहरावद्य शृतस्य[3] इत्यनुवाकेन ॥ ३ ॥ यमभिव्याहरिष्यन् स्यात् त्रिरात्रावरं ब्रह्मचर्यं चरित्वा गत्वैनमभिव्याहरेत् ब्रह्मणा त्वा शपामि इत्यनुवाकेन ॥ ४ ॥ यं द्विष्यात् तस्य गोष्ठं गत्वा स्वजमोपधीं निखनेत् तृन्तुद शिमिजावरि इत्यनुवाकेन ॥ ५ ॥ अपि वा गोष्ठस्यैव दक्षिणां द्वारस्थूणां विचालयेत् ॥ ६ ॥ यद्युद्गाता पुरुषसाम न गायेत् स्वयमेवाध्वर्युरुद्गायेत् भूर्भुवः सुवः इत्यनुवाकेन ॥ ७ ॥ ॥२०॥

अथातोऽवान्तरदीक्षां[4] व्याख्यास्यामः ॥ १ ॥ पर्वण्युदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रेऽपराह्णे केशश्मश्रु[5] वापयित्वा प्राचीं वोदीचीं[6] वा दिशमुपनिष्क्रम्य खिलेऽछदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य पूर्ववदुपाकृत्य मदन्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वा चतस्र औदुम्बरीः समिधो घृतान्यक्ता आदधाति पृथिवी समित् इत्येतैर्मन्त्रैः ॥ २ ॥ अथ देवता उपतिष्ठते अग्ने व्रतपते व्रतं चरिष्यामि[7] इति ॥ ३ ॥ अथैनं सर्वेषामनुवाकानां प्रभृतीरभिव्याहारयति[8] । प्रथमोत्तमयोर्वा ॥ ४ ॥ उत्तमेनानुवाकेन शान्तिं कृत्वा ततः संमीलति[9] वाचं च यच्छति ॥ ५ ॥ अथास्याहतेन वाससा शिरः संमुखं वेष्टयित्वास्तमिते[10] ग्रामं प्रपादयति ॥ ६ ॥

---

1. $A_1$,$B_2$ कृमिणा; $B_1$ कृमीणा
2. $A_1$,$B_2$,R क्रियते
3. $A_1$ शृतस्य; $B_1$ श्रितस्य
4. BhārGS III.6–7 describes the Avāntaradīkṣā, the first part of which closely agrees with the text of BhārSS XI.21. The variants found in BhārGS in the corresponding portions are recorded here.
5. BhārGS °श्मश्रू
6. BhārGS उदीचीं
7. In BhārGS the formula is different.
8. Thus $A_{2-3}$,$B_1$; $A_1$ प्रभृतिनिर°; $B_2$,R प्रभृतिभिरभि°; cf. ĀpSS XV.20.4
9. BhārGS संमीलयति
10. BhārGS वेष्टयत्यस्तमित आदित्ये

वाग्यत एतां रात्रिं तिष्ठत्यास्ते वा ॥ ७ ॥ श्वो भूते खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्याथास्य षट्त्रयमभिविदर्शयति । सप्तत्रयमित्येके । अग्निमादित्यमुदकुम्भमश्मानं वत्सं महानग्नीं हिरण्यं सप्तमम् ॥ ८ ॥ अपि वादितस्त्रीण्यभिविदर्शयति । यथोपपातमितराण्यभिविदर्शयति[1] ॥ ९ ॥ तत आदित्यमुपतिष्ठते वयः सुपर्णाः इत्येतया ॥ १० ॥ अत्रैतद्वासो गुरवे दत्त्वा ॥ ११ ॥ अथास्य ब्रह्मचर्यमधि ॥ १२ ॥ नित्ये ॥ १३ ॥ न नक्तं भुञ्जीत ॥ १४ ॥ यदि भुञ्जीतापज्वलितं भुञ्जीत ॥ १५ ॥ न मृन्मयं प्रविधयीत ॥ १६ ॥ न स्त्रिया न शूद्रेण वा[2] संभाषेत ॥ १७ ॥ न चक्रीवदारोहेत्[3] ॥ १८ ॥ नोपानहौ न छत्रं धारयीत ॥ १९ ॥ न समाजमीक्षेत न हर्म्याणि न शरीराणि न शवं नान्तावसायिनम् ॥ २० ॥ ॥२१॥

अष्टम्यां[4] पर्वणि[5] चोपवसति वाग्यतः ॥ १ ॥ न च संविशेत् ॥ २ ॥ संवत्सरमेतद् व्रतं चरेत् ॥ ३ ॥ एतस्मिन्नेव संवत्सरेऽधीयीत ॥ ४ ॥ यद्येतस्मिन् संवत्सरे नाधीयीत यावदध्ययनमेतद् व्रतं चरेत् ॥ ५ ॥ संवत्सरस्य परस्तात् खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्य पूर्ववद्विसृज्याहुतैर्मन्त्रैः समिध आधायाहुतैर्देवता उपस्थायात्र गुरवे वरं दत्त्वा केशश्मश्रु वापयते ॥ ६ ॥ अथास्य स्वाध्यायमधि ॥ ७ ॥ नित्ये ॥ ८ ॥ नानुत्सृष्टाध्यायोऽधीयीत न नक्तं नाभिदोपमब्रह्मचर्यमापद्य न मांसं खादित्वा न केशश्मश्रु वापयित्वा न लोमानि कारयित्वा न नखानि न दतः प्रक्षाल्य ॥ ९ ॥ नाक्तो नाभ्यक्तो नार्द्रो नार्द्रे नानवसृष्टे न हरितयवान् प्रेक्षमाणः[6] ॥ १० ॥ न ग्राम्यस्य[7] पशोरन्ते नारण्यस्य नापां[8] नाभ्रे न छायायां[9] न[9] पर्यावृत्त आदित्ये ॥ ११ ॥ नाभ्रतमुत्पतितं न लोहितं दृष्ट्वा न हर्म्याणि न शरीराणि न शवं नान्तावसायिनम् ॥ १२ ॥ खिलेऽच्छदिर्दर्शेऽग्निमुपसमाधाय संपरिस्तीर्यापरेणाग्निं दर्भेष्वासीनो दर्भान् दूर्वा वा

1. $A_1$,$B_2$, BhārGS omitted
2. BhārGS omitted.
3. BhārGS चक्रीवन्तमा°; it further adds न कुम्भवरोहेत् ।
4. Thus $B_2$; $A_1$ अष्टम्यः; $A_2$ अष्टम्याः; $A_{3-5}$,$B_1$,R अष्टम्यः
5. A,R पर्वाणि
6. $A_1$ प्रोक्षमाणः
7. $A_{2-5}$ ग्रामस्य
8. $A_1$ च नप्सु; $A_{2-5}$ च वापन
9–9. $A_1$ छायाच

धारयमाणः पराचीनमधीयीत ॥ १३ ॥ वरं वा दत्त्वौपासने[1] ॥ १४ ॥ अध्येष्य-माणः[1] प्रथमेनानुवाकेन शान्तिं कृत्वाधीयीत ॥ १५ ॥ अधीत्य चोत्तमेन[2] ॥ १६ ॥ अधीयानो नान्या वाचो वदेत् ॥ १७ ॥ यत्र क्व चाशान्तिं कृतं पश्येत् पुनरेव शान्तिं कृत्वाधीयीत ॥ १८ ॥ प्रवर्ग्यायोपनिष्क्रम्य नाप्रतिप्रविश्यान्यदधीयीतान्य-दधीयीत[3] ॥ १९ ॥ ॥२२॥

॥ इत्येकादशः[4] प्रश्नः[4] ॥

---

1–1. $A, B_2$ दत्त्वोपासनेऽध्येष्य°; $B_1$ दत्त्वोपासनेऽध्येष्य°; R दत्त्वोपासने ? ॥ १४ ॥ अध्येष्य°
2. $B_2$ चोत्तमेनानुवाकेन
3. $A_{1-3}$ नाप्रतिविश्य°
4–4. $A_1, B_2$ omitted; $A_{2-3}$ प्रवर्ग्यप्रश्नः

## अथ द्वादशः प्रश्नः

यदातिथ्यायां ध्रौवमाज्यं तत् कंसे चमसे वा पञ्चगृहीतं तानूनप्त्रं समवद्यति आपतये त्वा गृह्णामि इत्येतैर्मन्त्रैः ॥ १ ॥ तद्यजमानसप्तदशा ऋत्विजः संमृशन्ति यजमानपञ्चमा वा महर्त्विजः अनाधृष्टमस्यनाधृष्यं देवानामोजोऽभिशस्तिपा अनभिशस्तेन्यम् इति ॥ २ ॥ अनु मे दीक्षां[2] दीक्षापतिर्मन्यताम् इति यजमानोऽवमृशति ॥ ३ ॥ तद्यजमानस्त्रिरवजिघ्रेत् प्रजापतौ त्वा मनसि जुहोमि इति ॥ ४ ॥ अपि वान्वहमेकैकस्मिन् व्रते[3] प्रतिनयेत् ॥ ५ ॥ ततः संप्रेष्यति अग्नीन्मदन्त्यापा३ इति ॥ ६ ॥ मदन्ति देवीरमृता ऋतावृधः इत्याग्नीध्रः ॥ ७ ॥ ताभिराव्रव इत्यध्वर्युः ॥ ८ ॥ मदन्तीभिर्मार्जयित्वा विस्रस्य राजानं सहिरण्यैः पाणिभिराप्याययन्ति ये तानूनप्त्रं समवमृशन्ति अंशुरंशुस्ते देव सोमाप्यायताम् इति प्रतिपद्य स्वस्ति ते देव सोम सुत्यामशीय इत्यन्तेन ॥ ९ ॥ दक्षिणे वेद्यन्ते प्रस्तरे निह्नवन्ते[4] दक्षिणानुत्तानान् पाणीन् कृत्वा सव्यान् नीचः एष्टा रायः प्रेषे भगाय इति ॥ १० ॥ ततः संप्रेष्यति सुब्रह्मण्य सुब्रह्मण्यामाह्वय इति ॥ ११ ॥ एवमेव सर्वासु सुब्रह्मण्यासु संप्रेष्यति ॥ १२ ॥ सुब्रह्मण्यायां यजमानं वाचयति सासि सुब्रह्मण्ये तस्यास्ते पृथिवी पादः। सासि सुब्रह्मण्ये तस्यास्तेऽन्तरिक्षं पादः। सासि सुब्रह्मण्ये तस्यास्ते द्यौः पादः। सासि सुब्रह्मण्ये तस्यास्ते दिशः पादः। परोरजास्ते पञ्चमः पादः। सा न इषमूर्जं धुक्ष्व तेज इन्द्रियं ब्रह्मवर्चसमन्नाद्यम् इति ॥ १३ ॥ एवमेव सर्वासु सुब्रह्मण्यासु यजमानं वाचयति ॥ १४ ॥　॥१[5]॥

ततोऽवान्तरदीक्षामुपैति ॥ १ ॥ दक्षिणतस्तिष्ठन्नाहवनीयमभिमन्त्रयते अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि इति ॥ २ ॥ संतरां मेखलां समायच्छते ॥ ३ ॥ संतरां मुष्टिं कर्षते ॥ ४ ॥ तप्तव्रतो भवति ॥ ५ ॥ मदन्तीभिर्मार्जयते ॥ ६ ॥ या ते अग्ने रुद्रिया तनूः इति व्रतयति ॥ ७ ॥ यदातिथ्याया बर्हिस्तदुपसदां तदग्नीषोमीयस्य। तदेव प्रस्तरपरिधीति विज्ञायते ॥ ८ ॥ प्रवर्ग्येण प्रचर्योपसद्स्तन्त्रं प्रक्रमयति। उपसदा वा पूर्वम् ॥ ९ ॥ तत्स्तीर्णमेव बर्हिर्भवति। तत्परिहिताः परिधयः ॥ १० ॥ दशदारुमिध्मं करोति ॥ ११ ॥ वेदं कृत्वाग्नीन् परिस्तीर्य

---

1. $A_{1-3}$,$B_1$ begin with ॐ.
2. $A_{2-3}$ omitted; $B_{1,2}$ दीक्षा
3. $A_1$ वृते
4. Emended. MSS,R निह्नवते; however compare XII.3 20; 4.4.
5. $B_2$ ॥ ३३ ॥

हस्ताववनिज्य पात्राणि प्रयुज्योलपराजीं[1] स्तीर्त्वा पवित्रे कृत्वा संप्रेष्यति यजमान वाचं यच्छ इति ॥ १२ ॥ वाग्यतः पात्राणि संमृशति ॥ १३ ॥ प्रोक्षणीः[2] सँस्कृत्य ब्रह्माणमामन्त्र्य पात्राणि प्रोक्ष्य हविष्कृता वाचं विसृज्य बर्हिषो दर्भानेव स्तम्बयजुर्हरति[3] ॥ १४ ॥ स्फ्यँ स्तब्ध्वा संप्रेष्यति प्रोक्षणीरासादयेध्ममुपसादय[4] स्रुवं च स्रुचश्च संमृड्ढ्याज्येनोदेहि इति ॥ १५ ॥ समानमाज्यानां ग्रहणात् ॥ १६ ॥ ध्रुवायामेव गृह्णाति ॥ १७ ॥ प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्येध्मं वेदिं च प्रोक्ष्य प्रोक्षण्यवशेषं निनीयाग्निमभिमन्त्र्य पूर्वामाघारसमिधमाधायान्तर्वेदि ध्रुवाँ सादयित्वा स्रुवँ सादयति। एषासदत्[5] इति मन्त्रँ संनमति ॥ १८ ॥ विष्णवसि वैष्णवं धाम[6] प्राजापत्यम् इत्याज्यमभिमन्त्रयते ॥ १९ ॥ ॥२[7]॥

अग्रेण ध्रुवां वेदँ सादयित्वा सामिधेनीभ्यः संप्रेष्यति ॥ १ ॥ नव सामिधेन्यो भवन्ति ॥ २ ॥ स्रौवमाघारमाघार्य संप्रेष्यति अग्नीत् परिधीँश्चाग्निं च त्रिस्त्रिः संमृड्ढि इति ॥ ३ ॥ समानमा प्रवरात् ॥ ४ ॥ आश्राव्याह[8] सीद होतः इति ॥ ५ ॥ एतावान् प्रवरः ॥ ६ ॥ यत्राभिजानाति घृतवतीमध्वर्यो स्रुचमास्यस्व इति तद्[8] ध्रुवाया[9] गृह्णात्यष्टगृहीतं जुह्वां चतुर्गृहीतमुपभृति ॥ ७ ॥ गृह्णन् संप्रेष्यति अग्नयेऽनुब्रूहि इति ॥ ८ ॥ अत्याक्रम्याश्राव्याह अग्निं यज इति ॥ ९ ॥ वषट्कृतेऽर्धं जुह्वा जुहोति ॥ १० ॥ अपुनरतिक्रामन् संप्रेष्यति सोमायानुब्रूहि इति ॥ ११ ॥ आश्राव्याह सोमं यज इति ॥ १२ ॥ वषट्कृते सर्वं[10] जुहोति ॥ १३ ॥ अत्रैव तिष्ठन् संप्रेष्यति विष्णवेऽनुब्रूहि इति ॥ १४ ॥ जुह्वामौपभृतं पर्यासिच्याश्राव्याह[11] विष्णुं यज इति ॥ १५ ॥ वषट्कृते जुहोति[12] ॥ १६ ॥ प्रत्याक्रम्य स्रुवेणोपसदं जुहोति या ते अग्नेऽयाशया तनूः इत्येताम् ॥ १७ ॥ यदि पुरो युष्येयुरयः प्रथमायामवधाय जुहुयाद्रजतं मध्यमायाँ हरितमुत्तमायामिति विज्ञायते ॥ १८ ॥

---

1. B₁ °राजि
2. B₂ प्रोक्षणीनामावृता प्रोक्षणीः
3. B₂ °यजुर्भिरिति
4. B₂ °येध्मावर्हिरुप°
5. A₂₋₃ एषासद्; B₂ एतावद्
6. A₁,B₁,₂ धामासि
7. B₂ ॥ २४ ॥
8. Thus MSS; R omitted
9. A₁,B₁ ध्रुवायां
10. B₂ omitted
11. B₂ विपर्यो°
12. A₂₋₃,R omitted

यदि संग्रामं[1] युध्येयुरित्येकेषाम् ॥ १९ ॥ उपसदँ हुत्वा तथैव राजानमाप्याययन्ति तथा निह्नवन्ते[2] ॥ २० ॥ अथोपसदा[2] चरन्ति ॥ २१ ॥ ततः संप्रेष्यति अग्नीद् देवपत्नीर्व्याचक्ष्व सुब्रह्मण्य सुब्रह्मण्यामाह्वय इति ॥ २२ ॥ अपरेण गार्हपत्यमुपविश्याग्नीध्रो देवपत्नीर्व्याचष्टे सेनेन्द्रस्य इत्येतमनुवाकम् ॥ २३ ॥ आह्वयति सुब्रह्मण्यः सुब्रह्मण्याम् ॥ २४ ॥ संविष्ठत उपसत् ॥ २५ ॥ ॥३[3]॥

स्वपराह्ण आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां[4] प्रचरन्ति[5] ॥ १ ॥ अयाशयामेव जुहोति ॥ २ ॥ एतावन्नाना । याः प्रातर्याज्याः स्युस्ताः सायं पुरोनुवाक्याः कुर्यात् । याः पुरोनुवाक्यास्ता याज्याः ॥ ३ ॥ सव्यानुत्तानान् पाणीन् कृत्वा निह्नवन्ते दक्षिणाञ्चीचः ॥ ४ ॥ चतुःस्तनं मध्यरात्रे व्रतयति ॥ ५ ॥ जागर्त्येतां रात्रिम् ॥ ६ ॥ सुपूर्वाह्णे पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरन्ति ॥ ७ ॥ रजाशयामग्रोपसदं जुहोति ॥ ८ ॥ सँस्थितायामुपसदि महावेदिं विमिमीते

विमिमे त्वा पयस्वतीं देवानां धेनुँ सुदुघामनपस्फुरन्तीम् ।

इन्द्रः सोमं पिबतु क्षेमो अस्तु नः ॥

इति ॥ ९ ॥ अग्रेण प्राग्वँशं त्रीन् प्राचः प्रक्रमान् प्रक्रम्य शङ्कुं[6] निहन्ति ॥ १० ॥ स वेदेः पश्चार्ध्यः शङ्कुः ॥ ११ ॥ ततः षट्त्रिँशतं प्राचः प्रक्रमान् प्रक्रम्य शङ्कुं निहन्ति ॥ १२ ॥ स यूपावटयः शङ्कुः ॥ १३ ॥ पश्चार्ध्याच्छङ्कोः पञ्चदश दक्षिणा प्रक्रमान् प्रक्रम्य[6] पञ्चदशोत्तरतस्तच्छङ्कुं निहन्ति ॥ १४ ॥ ते श्रोणी भवतः ॥ १५ ॥ यूपावटयाच्छङ्कोर्द्वादश दक्षिणा प्रक्रमान् प्रक्रम्य द्वादशोत्तरतस्तच्छङ्कुं निहन्ति[7] ॥ १६ ॥ तावँसौ भवतः ॥ १७ ॥ अथैनमक्ष्णया[8] प्रमाणेन प्रमाय[8] स्पन्द्यया[9] पर्यातनोति ॥ १८ ॥ अन्वातनोति पृष्ठ्याम् ॥ १९ ॥ अथैनाँ स्फ्येन विघनेन पर्श्वा परशुनेति कुर्वन्ति ॥ २० ॥ ॥४[10]॥

---

1. $B_2$ संग्रामं ह्युयेत्यपरेण गार्हपत्यमुपविश्याग्नीध्रो दधे
2-2. $A_{2-5}$ निह्नवंतेथ; $B_1$ निनिह्नवंतेय; $B_2$ निह्नवंतोय उप°; B निह्नवन्ते ॥ २० ॥ उपसदा
3. $B_2$ ॥ २५ ॥
4. $A_{2-5}$ omitted
5. $B_2$ चरति
6-6. $A_1$ omitted
7. $B_2$ निहंति स यूपावट्यः
8-8. $A_1$ अथैनमक्ष्णया प्रमाणेन प्रमा; $A_{2-5}$ अथैनं मक्ष्णया प्रमाणेन प्रमाणेन; $B_1$ अथेनमक्षिणया प्रमाणेन प्रमाय
9. $A_{2-5}$ स्पंद्यया वा
10. $B_2$ ॥ २६ ॥

अथैनां दर्शपौर्णमासिकेन[1] संस्कारेण संस्करोति यदन्यत् संनमनात् ॥ १ ॥ यत् प्रागुत्तरस्मात् परिग्राहात् तत्[2] कृत्वापरेण यूपावटदेशं शम्ययोत्तरवेदिं परिमिमीते शम्यामात्रीं युगमात्रीं वा। सर्वतो वा दशपदाम्[3] ॥ २ ॥ एतामुत्तरस्माद्[3] वेद्यंसादुदञ्चं प्रक्रमं[2] प्रक्रम्य शङ्कुं निहन्ति ॥ ३ ॥ स चात्वालो भवति ॥ ४ ॥ अपरेण चात्वालं द्वादशसु प्रक्रमेषु तावत्युदगुत्करः[4] ॥ ५ ॥ [5]अपरेणोत्करं च[5] पद्स्वाग्नीध्रः ॥ ६ ॥ अन्तरेण चात्वालोत्करौ संचरो भवति। अन्तरेण चात्वालं चाग्नीध्रं चेत्येकेषाम् ॥ ७ ॥ यत् किं च वेदिमन्ववहरिष्यन् स्यादेतेनैवान्ववहरेत्[6] ॥ ८ ॥ उत्तरवेद्या आवृतोत्तरवेदिमुपोप्य प्रोक्षान्तां[7] कृत्वौदुम्बरशाखाभिश्छन्नां परिवासयति ॥ ९ ॥ त्रिस्तनं मध्यंदिने व्रतयति ॥ १० ॥ स्वपराह्ण आपराह्णिकीभ्यां[8] प्रचरन्ति ॥ ११ ॥ रजाशयामेव जुहोति ॥ १२ ॥ द्विस्तनं मध्यरात्रे व्रतयति ॥ १३ ॥ सुपूर्वाह्णे पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरन्ति ॥ १४ ॥ हराशयामग्रोपसदं[9] जुहोति ॥ १५ ॥ तदानीमेवापराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरन्ति ॥ १६ ॥ हराशयामेव जुहोति ॥ १७ ॥ एकस्तनं मध्यंदिने व्रतयति ॥ १८ ॥ संतिष्ठन्त उपसदः ॥ १९ ॥ ॥५[10]॥

प्रवर्ग्यमुद्वास्याग्नेराहृताग्निं प्रणीयामिक्षायै दधिघर्मायेति वत्सानपाकरोति ॥ १ ॥ मित्रावरुणाभ्याम् इत्यामिक्षायामुपलक्षयेदिन्द्रं[11] दधिघर्मे ॥ २ ॥ अथाध्वर्यवो महावेदिकं[12] बर्हिः प्रभूतमाहरन्ति यथा दर्शपूर्णमासयोः ॥ ३ ॥ तत उत्तरं परिग्राहं परिगृह्णाति यथा दर्शपूर्णमासयोः ॥ ४ ॥ न परिगृहीतामभिचरन्त्या[13]

1. $A_3$ दार्शपौर्ण°
2-2. $A_{2-3}$ omitted
3-3. $A_1B_1$ °पदावितामु°; $B_2$ पदायस्यामु°; Rudradatta on ApSS VII.3.10 : तथा सर्वतो दशपदामित्येव भारद्वाजः।
4. $A_1$ तावत्युत्करो
5. $A_1, B_1$ omitted
6. $A_{2-3}$ °न्वाहरेत्
7. $A_3$ प्रोक्ष्यान्तां; $B_{1,2}$ प्रोक्षांतं
8. $B_2$ omitted
9. $A_{2-3}$ °मात्रो°
10. $B_2$ ॥ २७ ॥
11. $B_2$ °लक्षयतींद्रं
12. $A_{2-4}$ महावेदीकं; $A_5$ महावेदिको
13. $A_{2-5}$ °मावर्तया; Rudradatta on ApSS XI.6.2 : तथा न परिगृहीतामभिचरन्त्या-मित्येव सत्याषाढभारद्वाजौ।

प्रोक्षणात् ॥ ५ ॥ प्रोक्षणीनामावृता प्रोक्षणीः सँस्कृत्य ब्रह्माणमामन्त्र्य वेदिं[1] बर्हिरिति त्रिः प्रोक्षति यथा दर्शपूर्णमासयोः ॥ ६ ॥ अथैतद्बर्हिः सर्वस्यां[2] महावेद्याँ[2] स्तृणन्ति यथा दर्शपूर्णमासयोः ॥ ७ ॥

आ धा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।

येषामिन्द्रो युवा सखा ॥

इत्येतामेके स्तरणीं समामनन्ति ॥ ८ ॥ अपरेण वेदिमभितः[3] प्राग्वँशँ हविर्धाने समावर्तयन्ति प्रक्षालिते विषितग्रन्थिनी नद्धयुगे अवहितशम्ये छदिष्मती[4] ॥ ९ ॥ तत औत्तरवेदिक आहुतिं जुहोति युञ्जते मनः इति ॥ १० ॥ एतस्मिन्नेवात ऊर्ध्वमाहवनीयकर्माणि क्रियन्ते ॥ ११ ॥ पत्नी पदतृतीयेन दक्षिणस्य हविर्धानस्य दक्षिणामक्षधुरं[5] प्राचा हस्तेन त्रिः पराचीनमुपानक्ति आ नो वीरो जायतां कर्मण्यः[6] इति । नोत्तराम् । उभयत्र उपानक्तीत्येकेषाम् ॥ १२ ॥ एवमेवोत्तरस्योपानक्ति ॥ १३ ॥ ततः संप्रेष्यति ॥ १४ ॥　॥६॥

हविर्धानाभ्यां प्रोह्यमाणाभ्यामनुब्रूहि इति ॥ १ ॥ त्रिरनूक्तायां प्रथमायामुद्गृह्णन्तः[7] प्रवर्तयन्ति प्राची प्रेतमध्वरं कल्पयन्ती इति ॥ २ ॥ यद्यक्ष उत्सर्जेत्[8] सुवाग्देव दुर्यां आवद इत्येतदभिमन्त्रयेत[9] ॥ ३ ॥ अध्वर्युर्दक्षिणस्य[9] हविर्धानस्य दक्षिणे वर्त्मनि हिरण्यमुपास्य जुहोति इदं विष्णुर्वि चक्रमे इति ॥ ४ ॥ एवं प्रतिप्रस्थातोत्तरस्योत्तरे वर्त्मनि हिरण्यमुपास्य जुहोति इरावती धेनुमती हि भूतम् इति ॥ ५ ॥ तत्रैषोऽत्यन्तप्रदेशः । यानि दक्षिणस्य कर्माण्यध्वर्युस्तानि कुर्यादुत्तरस्य प्रतिप्रस्थाता ॥ ६ ॥ विवृतीयदेशे होता मनसा पदा जन्यं भयं प्रतिनुदति

अप जन्यं भयं नुदाप चक्राणि[10] वर्तय ।

गृहँ सोमस्य गच्छतम् ॥

इति । अध्वर्युरित्येकेषां ब्रह्मेत्येकेषां यजमान इत्येकेषाम् ॥ ७ ॥ अपरेणोत्तरवेदिं

1. $A_{2-5}$,$B_1$ omitted
2–2. Thus $A_1$,$B_1$; $A_{2-5}$ सर्वस्यामहावेद्यां; $B_2$ सर्वस्यां वेद्यां
3. Thus $B_2$; $A_1$,$B_1$ वेदिमाहितः; $A_{2-5}$ माहितः
4. Thus $B_2$; $A_1$ छर्दिषु; $A_2$ छदिष; $A_{3-5}$ छदिष; $B_1$ °च्छदिष; R ends here.
5. A °मक्षधुरां; $B_1$ °मधुरां; $B_2$ °मधुरं
6. $A_{4,5}$ कर्मोण्य
7. $A_{4,5}$ °मुद्गृह्णंतः; $B_1$ °मुद्गृह्णतः; $B_2$ °मुद्गृणंतः
8. $B_1$ उत्सज्जेत; $B_2$ उत्सजेत्
9–9. $A_{2-5}$ °येतोध्वर्यु°; $B_1$ °यतोध्वर्यु°
10. $A_{2-5}$ चक्रा

त्रिपु प्रक्रमेष्वपरिमिते वाभितः पृष्ठ्यां नभ्यस्थे स्थापयतः अत्र रमेथां वर्ष्मन् पृथिव्याः इति[1] ॥ ८ ॥ यथार्थं हविर्धानयोरन्तरालं भवति ॥ ९ ॥ वैष्णवमसि विष्णुस्त्वोत्तम्नातु इत्युपस्तम्नीतः ॥ १० ॥ पुरस्तादुन्नते भवतः ॥ ११ ॥ अध्वर्युर्दक्षिणस्य हविर्धानस्य दक्षिणं कर्णातर्दं प्रति मेथीं निहन्ति दिवो वा विष्णवुत[2] वा पृथिव्याः इति ॥ १२ ॥ एवं प्रतिप्रस्थाता ॥ १३ ॥ ॥७॥

उत्तरस्योत्तरं कर्णातर्दं प्रति मेथीं निहन्ति विष्णोर्नु कं वीर्याणि प्रवोचम् इति ॥ १ ॥ तयोर्हविर्धाने निनभीतः विष्णो स्यूरसि इति ॥ २ ॥ विष्णोर्ध्रुवमसि इति ग्रन्थिं करोति ॥ ३ ॥ यं प्रथमं ग्रन्थिं ग्रथ्नीयात् स प्रज्ञातः परिशयीत ॥ ४ ॥ पश्चादुपमिन्वन्ति ॥ ५ ॥ ऊर्ध्वाः शम्या उद्वृह्योपरिष्टात्[3] परिवेष्टयन्ति ॥ ६ ॥ अग्रेण हविर्धाने स्थूणे निहत्य तयोरुदगग्रं वँशं निधाय तस्मिन् रराटीं[4] प्रतिष्ठापयति विष्णो रराटमसि इति ॥ ७ ॥ रराट्यां तिर्यञ्चं वँशं निपीव्यति[5] विष्णो स्यूरसि इति ॥ ८ ॥ विष्णोर्ध्रुवमसि इति ग्रन्थिं करोति ॥ ९ ॥ यं प्रथमं ग्रन्थिं ग्रथ्नीयात् स प्रज्ञातः परिशयीत ॥ १० ॥ विष्णोः पृष्ठमसि इति मध्यमं छदिरधिनिदधाति ॥ ११ ॥ विष्णो श्नप्त्रे[6] स्थः इति रराट्या अन्तौ व्यवास्यति[7] ॥ १२ ॥ कटाँस्तेजनीरिति प्रवर्तमन्तरालेषूपास्यति ॥ १३ ॥ तानन्तर्वर्ता[8] इत्याचक्षते ॥ १४ ॥ परि त्वा गिर्वणो गिरः इति परिश्रयति[9] ॥ १५ ॥ द्वे द्वारे उत्सृजन्ति[10] । पूर्वं चापरं च ॥ १६ ॥ शालामुखीयो होत्रीय औत्तरवेदिक इति समानँ सांकाशिनं भवति ॥ १७ ॥ दक्षिणे द्वार्यध्वर्युः[11] परिपीव्यत्युत्तरे प्रतिप्रस्थाता विष्णो[12] स्यूरसि इति[12] ॥ १८ ॥ विष्णोर्ध्रुवमसि इति ग्रन्थिं करोति ॥ १९ ॥ यं प्रथमं ग्रन्थिं ग्रथ्नीयात स प्रज्ञातः परिशयीत ॥ २० ॥ ॥ ८ ॥

---

1. Rudradatta on ĀpŚS XI.7.4 : तथा अत्र रमेथामिति स्थापयत इत्येव सांवापाद्भारद्वाजौ ।
2. $A_1$ विष्णु उत; $B_{1,2}$ विष्णुवत
3. Thus $A_1,B_{1,2}$; $A_{2-5}$ उद्वृत्यो°
4. $A_1$ रारटीं; $A_{2,3}$ रराटीं; $A_{4,5}$ रराहीं; $B_1$ विराटं; $B_2$ रराटिं
5. $A_{2-5},B_1$ निर्वीव्य
6. $A_{2,3}$ प्त्रे; $A_{4,5}$ प्रे; $B_1$ श्नप्त्रे
7. $A_{1-5}$ व्यस्यति
8. Thus $B_2$; $A_1$ °र्वेता; $A_{2-5}$ °वर्ता; $B_1$ तानन्तर्वर्ता
9. $A_1,B_2$ परिश्रयंति
10. $A_{2-5}$ उत्सर्जति
11. $B_2$ द्वार्यध्वर्यु
12-12. Thus $A_1,B_1$; $A_{2-5}$ omitted

संमितमभिमृशति वैष्णवमसि विष्णवे त्वा इति ॥ १ ॥ संमिताद्यजमानं प्राञ्चमुपनिष्क्रामति[1]

प्र तद्विष्णुः स्तवते वीर्याय मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥

इति । त्रिः प्रक्रामयतीति विज्ञायते[2] ॥ २ ॥ उपनिष्क्रामतीत्येकेषाम् ॥ ३ ॥ प्राचीनवँशँ हविर्धानं मिन्वन्ति ॥ ४ ॥ प्राचीनवँशमाग्नीध्रं दक्षिणाद्वारमर्धमन्तर्वेद्यर्धं बहिर्वेदि ॥ ५ ॥ तिरश्चीनमुदगायतँ सदः ॥ ६ ॥ तत्रैषोऽत्यन्तप्रदेशः । न प्राङ् हविर्धाने अतीयादध्वर्युः ॥ ७ ॥ यद्यतीयाद्वैष्णव्यर्चा संचरेत् क्षेत्रपत्या वा ॥ ८ ॥ न प्रत्यक्सदोऽतीयात् ॥ ९ ॥ यद्यतीयादैन्द्र्यर्चा संचरेदिति विज्ञायते ॥ १० ॥ पश्चार्ध्याच्छङ्कोस्त्रीन् प्राचः प्रक्रमान्[3] प्रक्रम्य शङ्कुं निहन्ति । स सदसः पश्चार्ध्यः ॥ ११ ॥ दक्षिणेन पृष्ठ्यां प्रक्रम औदुम्बरी[3] सर्वस्य सदसो मध्यतो मिनोति ॥ १२ ॥ नवारत्नि तिर्यक् सप्तविँशतिरुदगायतमिति सदसो विज्ञायते । अष्टादशेत्येकेषाम् ॥ १३ ॥ यावदृत्विग्भ्यो धिष्णियेभ्यः प्रसर्पकेभ्य आप्तं मन्यते तावत् सदः करोतीत्येकेषाम् ॥ १४ ॥ सावित्रेणाभ्रिमादायौदुम्बर्या अवटं परिलिखति परिलिखितँ रक्षः परिलिखिता अरातयः इति ॥ १५ ॥ खात्वा यवमतीभिः प्रोक्षणीभिरौदुम्बरीं प्रोक्षति[4] । दिवे त्वा इत्यग्रम् । अन्तरिक्षाय त्वा इति मध्यम् । पृथिव्यै त्वा इति मूलम्[5] ॥ १६ ॥ अपामवनयनं[5] यवस्य प्रासनं बर्हिषोऽवस्तरणमिति यूपे व्याख्यातम् ॥ १७ ॥ ॥९॥

प्राचीनकर्णां सहोद्गात्रोच्छ्रयति उद्दिवँ स्तभानान्तरिक्षं पृण इति ॥ १ ॥ प्राचीनकर्णां सहोद्गात्रा मिनोति द्युतानस्त्वा मारुतो मिनोतु इति ॥ २ ॥ पर्यूहणं परिदृँहणं परिषेचनमिति यूपे व्याख्यातम् ॥ ३ ॥ अथास्या अन्तरेण कर्णौ हिरण्यं निधायाभिजुहोति घृतेन द्यावापृथिवी आपृणेथाँ स्वाहा इति । आन्तमन्ववस्रावयति ॥ ४ ॥ [6]यजमानमात्र्यौदुम्बरी वर्षिष्ठा स्थूणानां भवति[6] । यथासुखु-

1. $B_2$ प्राञ्च परिक्रामयति
2. Rudradatta on ĀpSS XI.9 1 and Gopinātha on SatS VII 5 (p. 702) cite : त्रिः प्रक्रामतीति विज्ञायत इति भारद्वाजेन व्यक्तवचनाच्च ।
3. $A_{2-3}$ omitted
4. Gopinātha on SatS VII.7 (p.716) : उक्तं च यवमतीभिः प्रोक्षणीभिरौदुम्बरीं प्रोक्षतीति भारद्वाजेन । and again with regard to the formulas prescribed for the sprinkling he cites . भरद्वाजादिभिः स्पष्टमेवोक्तम् ।
5-5. $A_1$ मूलं आपामव°; $A_{2-3}$ °मपाव°
6. Gopinātha on SatS VII.7 (p. 719) : यजमानमात्र्यौदुम्बरी वर्षिष्ठा स्थूणानां भवतीति भारद्वाजेन स्पष्टमेवोक्तम् ।

पर्यन्तां[1] मिन्वन्ति ॥ ५ ॥ यजमानमात्रँ ह्रसीयो वा सदः संमिनोति ॥ ६ ॥ यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैस्तरां मिनुयात् । यदि कामयेतावर्षुकः स्यादित्युच्चैस्तराम् । नाभिदघ्नपर्यन्तां मिन्वन्तीति विज्ञायते ॥ ७ ॥ ऐन्द्रमसि इत्येकैकं मध्यमानि छर्दींष्यभिनिदधाति[2] ॥ ८ ॥ इन्द्रस्य सदोऽसि इति दक्षिणानि ॥ ९ ॥ विश्वजनस्य छाया इत्युत्तराणि ॥ १० ॥ दक्षिणान्युत्तराणि[3] करोति ॥ ११ ॥ औदुम्बरीमभि संमुखानि भवन्ति ॥ १२ ॥ नवच्छदमग्निष्टोमस्य मिनुयात्[4] । पञ्चदशच्छदमुक्थ्यस्य । सप्तदशच्छदमतिरात्रस्य । नवच्छदि पञ्चदशच्छदि वा षोडशिनः ॥ १३ ॥ नवच्छदि तेजस्कामस्य मिनुयादिति काम्याश्छदिःकल्पा[5] ब्राह्मणव्याख्याताः ॥ १४ ॥ अन्तर्वर्तान् परिश्रयणँ सांकाशिनं परिषीवणं[6] ग्रन्थिकरणमभिमर्शनमिति । एतावन्नाना । ऐन्द्रा एते[7] मन्त्रा भवन्ति ॥ १५ ॥ ॥१०॥

उपरवान् व्याख्यास्यामः ॥ १ ॥ दक्षिणस्य हविर्धानस्याधस्तात् पुरोऽक्षं[8] चत्वारोऽवान्तरदेशेषु प्रादेशमुखाः प्रादेशान्तराला भवन्ति । असंभिन्ना उपरिष्टात् संतृण्णा अधस्तात् ॥ २ ॥ सावित्रेणाभ्रिमादाय परिलिखति परिलिखितँ रक्षः परिलिखिता अरातयः इति ॥ ३ ॥ दक्षिणयोः पूर्वं ततोऽपरं तत उत्तरतस्ततः[9] पूर्वम् ॥ ४ ॥ एवमनुपूर्वाण्येवैभ्यत ऊर्ध्वं कर्माणि क्रियन्ते ॥ ५ ॥ बाहुमात्रान् खात्वाऽभ्या[10] प्रहरति रक्षोहणो वलगहनो वैष्णवान् खनामि इति । सकृदेव मन्त्रं जपति ॥ ६ ॥ विराडसि सपत्नहा इति बाहुमुपावहृत्य पुरीषमुद्वपति इदमहं तं वलगमुद्वपामि यं नः समानो यमसमानो निचखान इति ॥ ७ ॥ उपरवबिले न्युप्यावबाधते इदमेनमधरं करोमि यो नः समानो योऽसमानोऽरातीयति गायत्रेण छन्दसा इति ॥ ८ ॥ एवमेवोत्तरेणोत्तरेण[11] मन्त्रेणोत्तरेषु बाहुमुपावहृत्य पुरीषमुद्वपत्युत्तरेणोत्तरेण

---

1. $A_1$ °पर्यंता
2. Gopinātha on SatS VII.7 (p. 720) cites this sūtra verbatim, so also Rudradatta on ĀpSS XI.10.8 except the last word.
3. Thus $B_2$; $A, B_1$ omitted
4. Gopinātha on SatS VII.7 (p. 720): नवच्छदमग्निष्टोमस्य मिनुयादिति भरद्वाजोक्तेः ।
5. $A_1$ काम्यछदि°; $A_{2-5}$ कामछदि°; $B_1$ काम्याच्छदिःकल्पाः; $B_2$ काम्याच्छदिःकल्प°
6. $A_1, B_2$ °षेवणं; $B_1$ °षेवणं
7. $A_{2-5}$ एवा
8. $B_{1,2}$ परोक्षं
9. Emended; $A_1$ उत्तरतस्तत्; $A_{2-5}$ उत्तरतस्तात्; $B_1$ उत्तरस्तत्
10. $A_1, B_1$ खात्वाभ्याः; $A_2$ खात्वाऽभ्याः; $A_3$ खीत्वाऽभ्याः; $A_{4,5}$ खनित्वाभ्याः; $B_2$ खात्वाभ्रिया
11. $A_1$ °त्तरेण छंदसा; Vāñchesvara (27b) on SatS X: उत्तरेणोत्तरेणावबाधत इति भारद्वाजः ।

छन्दसावबाधते । त्रैष्टुभं जागतमानुष्टुभं पाङ्क्तमित्येतान्याम्नातानि भवन्ति ॥ ९ ॥ निरस्तो वलगः इति पुरीषँ हरति ॥ १० ॥ अवबाढो दुरस्युः इति खरे न्युप्यावबाधते ॥ ११ ॥ ॥११॥

अथ संमृशतेऽध्वर्युर्यजमानश्च ॥ १ ॥ यः पूर्वयोर्दक्षिणस्तं यजमानोऽवमृशति योऽपरयोरुत्तरस्तमध्वर्युः[1] ॥ २ ॥ अधस्ताद्धस्तौ सँस्पर्शयतः ॥ ३ ॥ स यजमानः पृच्छति अध्वर्यो किमत्र इति ॥ ४ ॥ भद्रम् इत्यध्वर्युः ॥ ५ ॥ तन्नौ[2] सह इति यजमानः ॥ ६ ॥ अथ विपरिसर्पतः ॥ ७ ॥ यः पूर्वयोरुत्तरस्तं यजमानोऽवमृशति योऽपरयोर्दक्षिणस्तमध्वर्युः ॥ ८ ॥ अधस्ताद्धस्तौ सँस्पर्शयतः ॥ ९ ॥ स यजमानः पृच्छति अध्वर्यो किमत्र इति ॥ १० ॥ भद्रम् इत्यध्वर्युः[2] ॥ ११ ॥ तन्मयि इति यजमानः ॥ १२ ॥ अथैनान् संमृशति विराडसि सपत्नहा इत्येतैर्मन्त्रैः ॥ १३ ॥ अथैनान् यवमतीभिः प्रोक्षणीभिः प्रोक्षति रक्षोहणो वलगहनः प्रोक्षामि वैष्णवान् इति ॥ १४ ॥ अवसिञ्चति रक्षोहणो वलगहनोऽवनयामि वैष्णवान् इति ॥ १५ ॥ यवोऽसि यवयास्मद्द्वेषः इति यवं प्रास्यति ॥ १६ ॥ बर्हिरवस्तृणाति रक्षोहणो वलगहनोऽवस्तृणामि वैष्णवान् इति ॥ १७ ॥ आज्येन व्याघारयति रक्षोहणो वलगहनोऽभिजुहोमि वैष्णवान् इति ॥ १८ ॥ एवमुपरवमन्त्रानेके समामनन्ति ॥ १९ ॥ रक्षोहणौ वलगहनौ वैष्णवी प्रोक्षामि इत्यधिषवणफलके प्रोक्षति । औदुम्बरे पालाशे कार्ष्मर्यमये वा । असंतृण्णे[3] भवतः संतृण्णे[3] वा ॥ २० ॥ ॥१२॥

प्रधिमुखे[4] पुरस्तात्सँहिते समावकृचे पश्चाद्‌घ्यङ्गुल उत्तराधिषवणफलके भवति चतुरङ्गुलं वा ॥ १ ॥ पुरस्ताद्दँहीयसी भवतः पश्चात् प्रथीयसी ॥ २ ॥ द्वौ दक्षिणेनापिदधाति द्वावुत्तरेण रक्षोहणौ वलगहनावुपदधामि वैष्णवी इति ॥ ३ ॥ पर्यूहति रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी इति ॥ ४ ॥ परिस्तृणाति रक्षोहणौ वलगहनौ परिस्तृणामि वैष्णवी इति ॥ ५ ॥ अभिमन्त्रयते रक्षोहणौ वलगहनौ वैष्णवी इति ॥ ६ ॥ रक्षोहणं त्वा वलगहनं वैष्णवं प्रोक्षामि इत्यधिषवणचर्म प्रोक्षत्यानडुहँ रोहितम् ॥ ७ ॥ अधिषवणफलकयोरधिषवणचर्मास्तृणात्युत्तरलोमासेचनवत् रक्षोहा त्वा वलगहा वैष्णवमास्तृणामि इति ॥ ८ ॥ तस्मिँश्चतुरो ग्राव्णः सादयत्यूर्ध्वसानू-

---

1. $A_{2,3}$ °त्तरतस्त°; $A_{4,5}$ °त्तरतः स्त°
2-2. Thus in $A_1$,$B_1$; $A_{2-5}$ omitted
3-3. $A_1$ संतृण्णा भवत संतृण्णो; $A_2$ ऽसंतृणे भवतः संतृण्णे; $A_3$ ऽसंतृणे भवतः संतृण्ण्ये; $A_{4,5}$ ऽसंतृणे भवतः संतृण्णे; $B_1$ संत्रण्णे भवतस्संत्रण्णे; $B_2$ संतृण्णे वा
4. $A_1$ प्रतिमुखे

नाहननप्रकारानुपरं ग्रथितं मध्ये पञ्चमं बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचं वद इत्येकैकम् ॥ ९ ॥ औपरवात् पुरीषाद्दक्षिणस्य हविर्धानस्याग्रेणोपस्तम्भनं चतुःस्रक्ति खरं[1] करोति यावन्तं पात्रेभ्य आप्तं मन्यते ॥ १० ॥ ॥१३॥

चात्वालाद्धिष्णियानुपवपति ॥ १ ॥ आग्नीध्रागारेऽन्तर्वेद्याग्नीध्रीयं विभूरसि प्रवाहणः इति ॥ २ ॥ रौद्रेणानीकेन इत्येनं मन्त्रं सर्वत्रानुषजति ॥ ३ ॥ अपरेण सदोबिलं पृष्ठ्यायां होत्रीयं[2] वह्निरसि हव्यवाहनः इति ॥ ४ ॥ दक्षिणेन होत्रीयं[3] प्रशास्त्रीयं श्वात्रोऽसि प्रचेताः इति ॥ ५ ॥ उत्तरेण होत्रीयमुदीच इतरान्[4] ॥ ६ ॥ तुथोऽसि विश्ववेदाः इति ब्राह्मणाच्छंसिनः ॥ ७ ॥ उशिगसि कविः इति पोतुः ॥ ८ ॥ अङ्घारिरसि बम्भारिः इति नेष्टुः ॥ ९ ॥ अवस्युरसि[5] दुवस्वान् इत्यच्छावाकस्य ॥ १० ॥ दक्षिणार्धे वेदेर्मार्जालीयं प्रतिष्ठमाग्नीध्रीयेण[6] शुन्ध्यूरसि [7]मार्जालीयः इति[7] ॥ ११ ॥ ॥१४॥

तत इतरानुपतिष्ठते ॥ १ ॥ सम्राडसि कृशानुः इत्याहवनीयम् ॥ २ ॥ परिषद्योऽसि पवमानः इति यत्र बहिष्पवमानं स्तुवते ॥ ३ ॥ प्रतक्वाऽसि नभस्वान् इति चात्वालम् ॥ ४ ॥ असंमृष्टोऽसि हव्यसूदः इति शामित्रदेशम् ॥ ५ ॥ ऋतधामासि सुवर्ज्योतिः इत्यौदुम्बरीम् ॥ ६ ॥ ब्रह्मज्योतिरसि सुवर्धाम इति ब्रह्मसदनम् ॥ ७ ॥ समुद्रोऽसि विश्वव्यचाः इति सदः ॥ ८ ॥ अजोऽस्येकपात् इति शालामुखीयम् ॥ ९ ॥ अहिरसि बुध्नियः इति प्राजहितम् ॥ १० ॥ कव्योऽसि[8] कव्यवाहनः इत्यन्वाहार्यपचनम् ॥ ११ ॥ अग्नेके बर्हिषः स्तरणं समामनन्ति ॥ १२ ॥ ततः संप्रेष्यति स्तृणीत बर्हिः प्र क्तं यच्छत समपिबतान् ब्रयध्वम् इति ॥ १३ ॥ न खरमधिस्तृणन्ति[9] । न धिष्णियान् ॥ १४ ॥ अत्रास्मा एकस्तनव्रतं प्रयच्छति ॥ १५ ॥ ॥१५॥

अग्नीषोमीयस्य पशोस्तन्त्रं प्रक्रमयति ॥ १ ॥ प्लक्षशाखामातिथ्याबर्हिष्युपसंनह्यति । आतिथ्यापरिधीनिध्मे ॥ २ ॥ त्रयोविंशतिदारुमिध्मं करोति

1. $A_{2-5}$,B, omitted
2. $A_1$,B, होत्रियं
3. $A_1$,B, होत्रियं
4. $A_1$ उत्तरान्
5. $A_1$ अवस्यूरसि
6. A,B, पृष्ठ°
7-7. $A_{2-5}$ इति मार्जालीयं
8. $A_{2-5}$ कव्यो
9. A,B, °स्तृणाति

॥ ३ ॥ समानमाज्यानां ग्रहणात् ॥ ४ ॥ शालामुखीये पाशुकान्याज्यानि गृह्णाति ॥ ५ ॥ एतस्मिन्नेवात ऊर्ध्वं गार्हपत्यकर्माणि क्रियन्ते[1] ॥ ६ ॥ आ सोमं ददत आ ग्राव्ण आ वायव्यान्या द्रोणकलशमुत् पत्नीमानयन्त्यन्वनाँसि प्रवर्तयन्ति ॥ ७ ॥ शालामुखीयं गार्हपत्यकर्मभ्योऽन्ववस्यन्ति ॥ ८ ॥ प्राची पत्नी पूर्वमग्निमभ्युदैति प्रैतु ब्रह्मणस्पत्नी इति ॥ ९ ॥ अग्ने गृहपत उप मा ह्वयस्व इत्येतदादि शालामुखीये कुरुत आ गार्हपत्याभिमन्त्रणात् ॥ १० ॥ उपस्थे ब्रह्मा राजानं कुरुते ॥ ११ ॥ सँह्वयन्ति यजमानस्यामात्यान् ॥ १२ ॥ अध्वर्युं यजमानोऽन्वारभते यजमानं पत्नी पत्नीमितरे पुत्रभ्रातरः ॥ १३ ॥ अहतेन वाससामात्यान् संप्रच्छाद्य वाससोऽन्तँ[2] स्रुग्दण्ड उपनियम्य[3] जुहोति वैसर्जनानि त्वँ सोम तनूकृद्भ्यः इति ॥ १४ ॥ जुषाणो अप्तुराज्यस्य वेतु स्वाहा इति द्वितीयामाहुतिँ हुत्वा ॥ १५ ॥ ॥१६॥

शालामुखीय इध्ममादीप्य संप्रेष्यति अग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहि इति ॥ १ ॥ त्रिरनूक्तायां प्रथमायामग्निप्रथमाः प्राञ्चोऽभिप्रव्रजन्ति ॥ २ ॥ अथैनमनुहरन्त्याज्यान्यनुहरन्तीध्माबर्हिरनुहरन्ति[4] प्रोक्षणीरनुनयन्त्यग्नीषोमीयम् ॥ ३ ॥ आग्नीध्र एतमिध्मँ सादयित्वा नयवत्यर्चाभिजुहोति अयं नो अग्निर्वरिवः कृणोतु इति ॥ ४ ॥ अत्रैव ग्राव्णो वायव्यानि द्रोणकलशमाग्नीध्र उपवासयति[5] ॥ ५ ॥ सोमप्रथमाः प्राञ्चोऽभिप्रव्रजन्ति ॥ ६ ॥ उरु विष्णो वि क्रमस्व इत्याहवनीये हुत्वापरया द्वारा हविर्धाने राजानं प्रपादयति सोमो जिगाति गातुवित् इति । पूर्वया वा ॥ ७ ॥ पूर्वया तु यजमानः प्रपद्यते ॥ ८ ॥ यदि गतश्रीः स्यात् पूर्वयैव द्वारा राजानं प्रपादयेत् ॥ ९ ॥ दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमास्तृणाति अदित्याः सदोऽसि इति ॥ १० ॥ तस्मिन् राजानमासादयति[6] अदित्याः[6] सद आसीद इति ॥ ११ ॥ ॥१७॥

आसन्नँ राजानं यजमानोऽभिमन्त्रयते[7] एष वो देव सवितः सोमस्तँ

1. Rudradatta on ĀpŚS XI.5.10 and Gopinātha on SatS VII.8 (p. 738): सत्य.षाढभारद्वाजयोस्तु सताद्ग्नीप्रणयनात्परत एव तत्र गार्हपत्यकर्माणीति द्रष्टव्यमिति ।
2. $A_{2-5}$ वाससातं
3. $A_{2-5}$,$B_1$ उपनियदं
4. $A_{2-5}$ °रनुनयंति
5. $B_2$ °सादयति
6–6. $A_{2-5}$ सादयत्या
7. Rudradatta on ĀpŚS XI.17.2 says with reference to the formula in this sūtra: यद्यपि सत्याषाढभारद्वाजाभ्यां यजमानत्वमेव व्यक्तोक्तम् etc.

रक्षध्वं मा वो दभदेतत्त्वँ सोम देवो देवानुपागाः इति ॥ १ ॥ प्रदक्षिणमावर्तते इदमहं मनुष्यो मनुष्यान् सह[1] प्रजया[1] सह रायस्पोषेण इति ॥ २ ॥ नमो देवेभ्यः इति प्राचीनमञ्जलिं करोति ॥ ३ ॥ स्वधा पितृभ्यः इति दक्षिणतः ॥ ४ ॥ उपनिष्क्रामति इदमहं निर्वरुणस्य पाशात् इति ॥ ५ ॥ विहारमभिवीक्षते सुवरभि वि ख्येषं वैश्वानरं ज्योतिः इति ॥ ६ ॥ ततोऽवान्तरदीक्षां विसृजते ॥ ७ ॥ दक्षिणतस्तिष्ठन्नाहवनीयमभिमन्त्रयते अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि इति ॥ ८ ॥ नितरां मेखलां मृध्नीते[2] ॥ ९ ॥ ततो मुष्टी विसृजते। स्वाहा यज्ञं मनसा इति द्वे। स्वाहा द्यावापृथिवीभ्याम् इति द्वे। स्वाहोरोरन्तरिक्षात् इति द्वे। स्वाहा यज्ञं वातादारभे इति द्वे ॥ १० ॥ स्वाहा वाचि यातो विसृजे इति वाचं विसृजते ॥ ११ ॥ निवर्तते व्रतम् ॥ १२ ॥ सोमान् हविःशेषानिति सुत्येऽहनि भक्षयति ॥ १३ ॥ उत इध्मं[3] बर्हिरिति प्रोक्षति यथा दर्शपूर्णमासयोः ॥ १४ ॥ अथैतद्बर्हिः सर्वस्यां महावेद्यां[4] स्तृणीयादित्येकम्। अपरेणोत्तरवेदिमित्यपरम् ॥ १५ ॥ यत् किं चात ऊर्ध्वं बर्हिरागच्छेदेवमेवैनं[5] स्तृणीयात् ॥ १६ ॥ समानमा स्रुचां सादनात् ॥ १७ ॥ स्रुचः[6] सादयित्वा[7] ॥ १८ ॥ ॥ १८ ॥

यूपं छिनत्ति ॥ १ ॥ दीक्षासु यूपं छिनत्त्युपसत्सु वा ॥ २ ॥ विज्ञायते यदि दीक्षितस्याप्रवृक्णो यूपः स्यादरणी चाज्यं चादाय यूपस्यान्तेऽग्निं[8] मथित्वा[8] जुहुयादिति ॥ ३ ॥ अथ यदि क्रीतः सोमः स्यादाहवनीय एव जुहुयात् ॥ ४ ॥ समानमा[9] पशूपाकरणात् ॥ ५ ॥ अग्नीषोमीयं पशुमुपाकरोति ॥ ६ ॥ समानमा प्रवरात् ॥ ७ ॥ प्राकृतेन प्रवरेण[10] होतारं वृत्वा पुनराश्राव्योपांशुनामधेयग्राहमस्य[11] उत्तरानृत्विजो वृणीते ॥ ८ ॥ इन्द्रं होत्रादसौ मानुषः इति होतारम्

---

1–1. $A_1$ omitted
2. $A_1$,$B_2$ मृध्नीते; $B_1$ गृध्नीते
3. Thus $B_2$; A,$B_1$ इध्मा
4. $A_{2-5}$ वेद्यां
5. Thus all MSS; °मेवैतद् ?
6. $A_{2-5}$,$B_1$ omitted
7. $B_2$ ends here.
8–8. $A_{2-5}$ °मिर्मथित्वा
9. $A_{2-5}$ समानमेव
10. $A_1$,$B_1$ वरणेन
11. $A_{2,3}$ °धेयमहस्य; $A_{4,5}$ °धेयमस्य

॥ ९ ॥ अग्निमाग्नीध्रादसौ[1] मानुषः इत्याग्नीध्रम् ॥ १० ॥ अश्विनाध्वर्यू[2] आध्वर्यवादहं चासौ च मानुषौ इत्यात्मानं प्रतिप्रस्थातारं च ॥ ११ ॥ मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादसौ मानुषः इति मैत्रावरुणम् ॥ १२ ॥ इन्द्रो ब्रह्मा ब्राह्मणादसौ मानुषः इति ब्राह्मणाच्छँसिनम् ॥ १३ ॥ मरुतः पोत्रादसौ मानुषः इति पोतारम् ॥ १४ ॥ ग्नावो नेष्ट्रादसौ मानुषः इति नेष्टारम् ॥ १५ ॥ ततो[3] यजमानं[3] वृणीते अग्निर्देवीनां विशां पुरएतायँ सुन्वन् यजमानो मनुष्याणां तयोर्नावस्थूरि गार्हपत्यानि सन्तु शतँ हिमा द्वा यू राधाँसीत्संपृञ्चानावसंपृञ्चानौ तन्वः इति ॥ १६ ॥ सवनीय एके वृणते[4] । तत्र सुन्वन्[5] इति[5] ब्रूयात् ॥ १७ ॥ अयं यजमानो मनुष्याणाम् इत्यग्नीषोमीये वृणानः ॥ १८ ॥ ॥१९॥

प्रभूतः प्रभूतः प्रभूतहोमौ जुहोति जुष्टो वाचो भूयासम् ॥ ऋचा स्तोमँ समर्धय इत्येताभ्याम् ॥ १ ॥ प्रभूतः प्रभूतो जुहुयादित्येकम् । अध्वर्युरेव जुहुयादित्यपरम् ॥ २ ॥ समानमा वपाया होमात् ॥ ३ ॥ हुतायां वपायामाह्वयति सुब्रह्मण्यः सुब्रह्मण्यां पितापुत्रीयाम् ॥ ४ ॥ अपराह्णे वसतीवरीर्गृह्णाति वहन्तीनां प्रतीपं तिष्ठन् ॥ ५ ॥ कुम्भमुपमारयति हविष्मतीरिमा आपः इति ॥ ६ ॥ नान्वमा वहन्तीरतीयात् ॥ ७ ॥ छायायै चातपतश्च संधौ गृह्णाति । वृक्षस्य वात्मनो वा छायायाम् ॥ ८ ॥ यस्यागृहीता अभिनिम्रोचेज्ज्योतिषा[6] वा गृह्णीयाद्धिरण्यं वावधाय ॥ ९ ॥ यो वा ब्राह्मणो बहुयाजी तस्य कुम्भ्यानां गृह्णीयात् ॥ १० ॥ वरं दत्त्वा गृह्णीयादित्येकेषाम् ॥ ११ ॥ अथैना अपरेण[7] गार्हपत्यमुपसादयति अग्नेर्वोऽपन्नगृहस्य सदसि सादयामि इति ॥ १२ ॥ समानमेडायाः ॥ १३ ॥ दक्षिणेन हविर्धाने समवत्तँ हरत्युत्तरेण वा ॥ १४ ॥ ततः संप्रेष्यति अग्नीदौपयजानङ्गारानाहर इति ॥ १५ ॥ शामित्रादाग्नीध्राद्वाङ्गारानाहृत्याग्नीध्रो होत्रीये निवपति ॥ १६ ॥ प्रतिप्रस्थातोपयजति ॥ १७ ॥ नात्रानूयाजान्ते स्वरुं जुहोति । न सवनीये । अनूबन्ध्यायामेव जुहोति ॥ १८ ॥ तं दिवोपाकृत्य नक्तँ संस्थापयति[8] ॥ १९ ॥

1. $A_{2-5}$ अग्निरा°
2. $A_{2-5}$ अश्विना अध्वर्यू
3–3. $A_{2-5}$ तयोर्यज°
4. $A_{2-5}$, $B_1$ वृणुते
5–5. $A_{2-5}$ °षिति; Vāñcheśvara (53b) on SatS VII: तस्मिन्नेव पक्षे सुन्वन् शब्दः प्रयोक्तव्य इत्याहापस्तम्बो भारद्वाजश्च ।
6. Thus $A_5$; $A_{1,2,3,4,5}$, $B_1$ °ज्ज्योतिष्या
7. $A_3$ अपराह्णे, corrected in the margin as अपरेण; others अपराह्णे
8. Vāñcheśvara (55a) on SatS VII: आह भारद्वाजः दिवोपाकृत्य नक्तं संस्थापयेदिति ।

पत्नीसंयाजान्तः संतिष्ठते ॥ २० ॥ हृदयशूलेन चरित्वा न यूपमुपतिष्ठते ॥ २१ ॥ नाग्नीषोमीये न सवनीये हृदयशूलेन चरन्ति। अनूबन्ध्यायामेव चरन्तीत्येकेषाम् ॥ २२ ॥ ॥२०॥

निशायामन्तर्वेद्यासीनौ यजमानं पत्नीं च वसतीवरीभिरभिपरिहरन्ति ॥ १ ॥ नादीक्षितं वसतीवरीभिरभिपरिहरेयुः ॥ २ ॥ आदाय कुम्भं[1] सव्ये ऽसे[2] निधाय[2] दक्षिणया[3] द्वारोपनिष्क्रम्य दक्षिणं वेद्यन्तमनुपरीत्य दक्षिणस्यामुत्तर-वेदिश्रोण्यां सादयति इन्द्राग्नियोर्भागधेयी स्थ इति ॥ ३ ॥ आदाय कुम्भं दक्षिणे ऽसे निधाय यथेतं प्रतिपरीत्योत्तरया द्वारोपनिष्क्रम्योत्तरं वेद्यन्तमनुपरीत्योत्तरस्याम्[3] उत्तरवेदिश्रोण्यां सादयति मित्रावरुणयोर्भागधेयी स्थ इति ॥ ४ ॥ आदाय कुम्भं[3] सव्ये ऽसे निधाय यथेतं प्रतिपरीत्य पूर्वया द्वारोपनिष्क्रम्याग्नीध्रे सादयति विश्वेषां देवानां भागधेयी स्थ यज्ञे जागृत इति ॥ ५ ॥ अत्रैता उपवासयति ॥ ६ ॥ आह्वयति सुब्रह्मण्यः सुब्रह्मण्यां पितापुत्रीयाम् ॥ ७ ॥ ततः पयांसि विशास्ति। या यजमानस्य व्रतधुक् तस्या आशिरं कुरुत या पत्नियै तस्यै दधिग्रहाय या घर्मधुक् तस्यै दधिघर्माय[5] तमनानक्तं मैत्रावरुणाय शृतातङ्कं कुरुतादित्यग्रहाय इति ॥ ८ ॥ यथाचोदितं कुर्वन्ति ॥ ९ ॥ अत्रामिक्षायाः सायंदोहं दोहयति ॥ १० ॥ हविर्धाने यजमानं जागरयन्ति। प्राग्वंशे पत्नीम् ॥ ११ ॥ आग्नीध्र ऋत्विजो वसन्ति। न सदसि कश्चन वसति[6] ॥ १२ ॥ यजमान एवैतां रात्रिं राजानं गोपायतीति विज्ञायते ॥ १३ ॥ ॥२१[7]॥

॥ इति द्वादशः प्रश्नः ॥

---

1. $A_1$ कुम्भं
2-2. $A_1$ omitted
3-3. Thus in $A_1$,$B_2$ with minor scribal errors; $A_{2-5}$ omitted
4. $B_1$ वेदिमनु°
5. $A_{2-5}$ °धर्माय
6. Vāñcheśvara (57a) on SatS VII : न कश्चन सदसि वसतीति भारद्वाजः ।
7. $A_{2-5}$ read द्वितीयः after this.

## अथ त्रयोदशः प्रश्नः

महारात्रे[1] बुध्यन्ते[2] ॥ १ ॥ आग्नेय्यर्चाग्नीध्रमभिमृशेत् । वैष्णव्या हविर्धानम् । आग्नेय्या स्रुचः । वायव्यया वायव्यानि । ऐन्द्र्या सदः ॥ २ ॥ अत्रैवाभिमृशेदित्येकम् । कर्मागमे[3] कर्माङ्गमित्यपरम् ॥ ३ ॥ आग्नीध्रे यज्ञतनूर्जुहोति प्रजापतिर्मनसान्धोऽच्छेतः इत्येतास्त्रयस्त्रिँशतम्[4] । यज्ञार्तिं च प्रतिजुहोति[5] । पूर्वामनुद्रुत्योत्तरया जुहोतीति विज्ञायते ॥ ४ ॥ एकया तु प्रथमम् ॥ ५ ॥ खरे पात्राणि प्रयुनक्ति अग्निर्देवता गायत्री छन्द उपाँशोः पात्रमसि इत्येतैर्मन्त्रैर्यथारूपम् ॥ ६ ॥ दक्षिणेऽस्य उपाँश्वन्तर्यामयोः पात्रे प्रयुनक्ति । पूर्वमुपाँशोरपरमन्तर्यामस्य ॥ ७ ॥ अपि वा दक्षिणमुपाँशोरुत्तरमन्तर्यामस्य ॥ ८ ॥ ते अन्तरेणोपाँशुसवनँ[6] सँस्पृष्टँ सादयति ॥ ९ ॥ प्रत्यञ्चि द्विदेवत्यपात्राणि । परिप्लुगैन्द्रवायवस्याजगावं[7] मैत्रावरुणस्य द्विस्रक्त्याश्विनस्य ॥ १० ॥ ततोऽपरे शुक्रामन्थिनोः पात्रे । दक्षिणं बैल्वँ शुक्रपात्रमुत्तरं वैकङ्कतं मन्थिपात्रम् ॥ ११ ॥ ततोऽपरे आश्वत्थे अश्वशफबुध्ने उभयतोमुखे ऋतुपात्रे । दक्षिणमध्वर्योरुत्तरं प्रतिप्रस्थातुः ॥ १२ ॥ दक्षिणस्यां श्रोण्यामाग्रयणस्थालीं प्रयुनक्ति । उत्तरस्यामुक्थ्यस्थालीं चोक्थ्यपात्रं चाश्वशफबुध्नम् ॥ १३ ॥ ते अन्तरेण ॥ १४ ॥ ॥१॥

त्रीण्यतिग्राह्यपात्राणि प्रयुनक्ति ॥ १ ॥ दक्षिणस्य हविर्धानस्याग्रेणोपस्तम्भनमादित्यस्थालीं चादित्यपात्रं[8] च । उत्तरस्याग्रेणोपस्तम्भनमनुपोसे ध्रुवस्थालीम् ॥ २ ॥ उत्तरेऽस्य औदुम्बरं चतुःस्रक्ति दधिग्रहपात्रम् ॥ ३ ॥ मध्ये परिप्लवां यथा स्रुगदण्डा[9] ॥ ४ ॥ यथावकाशं खादिरं चतुःस्रक्ति षोडशिपात्रं यदि षोडशी भवति ॥ ५ ॥ प्रादेशमात्राण्यूर्ध्वसानूनि मध्ये संनतानि[10] वायव्यान्यासेचनवन्ति भवन्ति ॥ ६ ॥ यान्यनादिष्टवृक्षाणि[11] यः कश्च[12] यज्ञियो[12] वृक्षस्तस्य

---

1. $A_{2-5}$,$B_1$ ॐ महारात्रे
2. $B_1$ बुद्ध्वा
3. A omitted
4. $A_{2-5}$ °स्त्रयस्त्रिंशतिं
5. $B_1$ जुहोति
6. $B_1$ °पाऽ शोऽसवनं
7. $A_{2-5}$ परिप्ल°
8. $B_1$ omitted
9. Thus $A_2$; $A_{1,3-5}$ स्रुग्दंडा; $B_1$ स्रुग्दंडा
10. $A_1$,$B_1$ संततानि
11. $A_1$ यथान्यना°
12–12. $B_1$ कश्चन यज्ञीयो

स्युरित्याश्मरथ्यः। वैकङ्कतानीत्यालेखनः ॥ ७ ॥ एतेन चमसानां वृक्षनियोगो व्याख्यातः। नैयग्रोधा एव स्युरित्यपरम्[1] ॥ ८ ॥ त्सरुमन्तोऽत्सरुका[1] वा दश चमसा भवन्ति ॥ ९ ॥ दश चमसाध्वर्यवः ॥ १० ॥ होतुर्ब्रह्मण उद्गातुर्यजमानस्य मैत्रावरुणस्य ब्राह्मणाच्छंसिनः पोतुर्नेष्टुरच्छावाकस्याग्नीध्रस्येत्येतेषामेते[2] चमसा भवन्ति। तान् खरे यथावकाशं प्रयुनक्ति ॥ ११ ॥ दक्षिणस्य हविर्धानस्याधस्तात् पश्चादक्षं द्रोणकलशं सदशापवित्रं प्रयुनक्ति युनज्मि ते पृथिवीं ज्योतिषा सह इति ॥ १२ ॥ उत्तरस्य नीड आधवनीयं युनज्मि वायुमन्तरिक्षेण ते सह इति ॥ १३ ॥ प्रउगे पूतभृतं युनज्मि वाचं सह सूर्येण ते इति ॥ १४ ॥ अत्रैकेऽधिषवणचर्मणो[3] ग्राव्णामिति[3] प्रयोजनं[4] समामनन्ति ॥ १५ ॥ उपरमभि संमुखा भवन्ति ॥ १६ ॥ ॥२[5]॥

अथैनान् संमृशति अपां क्षया ऋतस्य गर्भाः। भुवनस्य गोपाः श्येना अतिथयः। पर्वतानां ककुभः प्रयुतो न पातारः। वग्नुनेन्द्रं ह्वयत। घोषेणामीवांश्चातयत। युक्ताः स्थ वहत। स्वर्गं लोकमभिवहत यजमानम् इति ॥ १ ॥ सवनीयस्य तन्त्रं प्रक्रमयति ॥ २ ॥ समानमाज्यानां ग्रहणात् ॥ ३ ॥ लौकिकादाज्यात्[6] प्रचरण्यामग्रे गृह्णाति ॥ ४ ॥ सहेध्मेनैधान् प्रोक्षति यानेतदहरभ्याधास्यन्[7] भवति ॥ ५ ॥ यत् किंचाभि तयोराघारसमिधोरादध्यात् प्रोक्षितमेवादध्यात्[8] ॥ ६ ॥ समानत्रा स्रुचौ सादनात् ॥ ७ ॥ स्रुचः सत्रा अभिमृशति युनज्मि तिस्रो विपृचः सूर्यस्य ते इति ॥ ८ ॥ अत्रैके पात्रप्रयोजनं समामनन्ति ॥ ९ ॥ आसन्यान्मा मन्त्रात् पाहि कस्याश्चिदभिशस्त्याः इत्याग्नीध्रे हुत्वान्तरेषे रावाणं ग्रावमपावहरति[9] ह्वदे त्वा ॥ सोम राजन्नेह्यवरोह इति द्वाभ्याम् ॥ १० ॥ आग्नीध्रे पञ्चहोतारं हुत्वा होत्रे[10] प्रातरनुवाकाय संप्रेष्यति देवेभ्यः प्रातर्यावभ्योऽनुब्रूहि ब्रह्मन् वाचं यच्छ सुब्रह्मण्य सुब्रह्मण्यामाह्वय प्रतिप्रस्थातः

1–1. Emended; $A_1$ °स्यपरमत्सरुका; $A_{2-3}$ °स्यपरमत्सरुमंतोत्सरुका; $B_1$ °स्यपरंमत्सरुमन्तो-त्सरुका
2. $A_{2-3}$ °स्यैतेषा°
3–3. Emended; A अत्रैतेधि°; $B_1$ अत्रैते ग्राव्णामधिषवणचर्मण इति
4. $A_{2-3}$ प्रयोजनमेके
5. $B_1$ इति द्वितीया खण्डिका ॥ २ ॥
6. $A_{2-3}$ लौकिकाज्यात्
7. $A_1$ यानेकरहरभ्याधास्यान्; $B_1$ यानेकरहरभ्याधास्याद्
8. $A_{2-3}$,$B_1$ °मेव दध्यात्
9. $A_1$ °हरति
10. Thus $B_1$; $A_1$ महात्रे; $A_{2,3}$ = °होत्रे; $A_{4,9}$ महोत्रे

सवनीयान्निर्वपामिक्षां दोहय इति ॥ ११ ॥ यं धिष्ण्यात्तस्य प्रवदितासु वाक्सूपाकुर्यात् ॥ १२ ॥ आह्वयति सुब्रह्मण्यः सुब्रह्मण्यां पितापुत्रीयाम् ॥ १३ ॥ अत्र सवनीयान्निर्वपेदामिक्षां दोहयेदित्येकम् । उपरितरामित्यपरम् ॥ १४ ॥ ॥३॥

यत्राभिजानाति अभूदुषा रुशत्पशुः इति तत् प्रचरण्या जुहोति शृणोत्वग्निः समिधा हवं मे इति ॥ १ ॥[1] अपरं चतुर्गृहीतं गृहीत्वा दर्भानादायोपनिष्क्रम्य[1] संप्रेष्यति अप इष्य होतर्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन आद्रवत नेष्टः पत्नीमुदानयोन्नेतर्होतृचमसेन[2] वसतीवरीभिश्चात्वालं प्रत्युपास्व इति ॥ २ ॥ व्यवराध्या अयुज एकधना भवन्ति ॥ ३ ॥ यथाचोदितं कुर्वन्ति ॥ ४ ॥ प्रेह्युदेहि इति नेष्टा[2] पत्नीमुदानयति ॥ ५ ॥ यत्र होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयात्तदपोऽध्वर्युर्गृह्णीयात् । यदि[3] न शृणुयाद्बधिरः स्यात् । वाचोपछिद्येत[4] ॥ ६ ॥ यदि दूरे स्युः प्रत्युदूह्य[5] गृह्णीयात्[3] ॥ ७ ॥ वहन्तीषु तृणं प्रास्यैतच्चतुर्गृहीतं जुहोति देवीरापो अपां नपात् इति ॥ ८ ॥ यदि वा पुरा तृणं भवति तस्मिन्नेव[6] जुहोति ॥ ९ ॥ कार्षिरसि इति दर्भैराहुतिमपप्लाव्य घृतलिप्तानां[7] मैत्रावरुणचमसेनोन्नयति समुद्रस्य वोऽक्षित्या उन्नये इति[8] ॥ १० ॥ एवमेवैकधना उन्नयति । सोमस्य वो मूजवतो रसं गृह्णामि इति वा ॥ ११ ॥ पत्नी[9] पन्नेजनीर्गृह्णाति वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः पन्नेजनीर्गृह्णामि यज्ञाय वः पन्नेजनीर्गृह्णामि इति[10] ॥ १२ ॥ आहरन्त्यपः ॥ १३ ॥ प्रेह्युदेहि इत्येव नेष्टा पत्नीमुदानयति ॥ १४ ॥ ॥४॥

अपरेण नेष्टुर्धिष्णियं पत्नी पन्नेजनीः सादयति वसुभ्यो रुद्रेभ्य आदित्येभ्यो

---

1. $A_1$,$B_1$ °निष्क्राम्यन्. Vāñcheśvara (9a.) on SatS VIII : अपरं चतुर्गृहीतं गृहीत्वा दर्भानादायोपनिष्क्रम्य संप्रेष्यतीति भारद्वाजः ।
2-2. $A_1$ omitted
3-3. $B_1$ omitted
4. $A_{1-3}$ °छिद्येत
5. Emended; $A_1$ प्रत्युद्धृह्य; $A_{2-3}$ प्रत्युद्धृत्य; cf. ĀpŚS XII.5.7; SatS VIII.1.
6. *$B_1$ तस्मिंस्तस्मिन्नेव*
7. Rudradatta on ĀpŚS XIII.4.10 : तथा अपप्लाव्य घृतप्लुतानामित्येव सत्याषाढभारद्वाजौ । Yajñeśvara Dīkṣita in his commentary *Agniṣṭomacandrikā* on BaudhŚS VI.10 : अप्लाव्य घृतप्लुतानामित्येव सत्याषाढभारद्वाजौ ।
8. Vāñcheśvara (9b) on SatS VIII : तथा च वैखानसभारद्वाजौ समुद्रस्य वोक्षित्या इत्यघृतलिप्ताभिहुता अपो मैत्रावरुणस्य चमसेन गृह्णातीति ।
9. $A_{2-3}$,$B_1$ omitted
10. With reference to the formula quoted in this sūtra Rudradatta on ĀpŚS XII.5.12 says : तथैव पेठतुः बोधायनभारद्वाजौ । Gopīnātha on SatS VIII.1 (p. 793) also cites this sūtra.

विश्वेभ्यो वो[1] देवेभ्यः पन्नेजनीः सादयामि यज्ञाय[2] वः पन्नेजनीः सादयामि[2] इति ॥ १ ॥ उपरि चात्वालेऽध्वर्युर्होतृचमसं च[3] मैत्रावरुणचमसं च सँस्पृश्य वसतीवरी-र्व्यानयति समापो अद्भिरग्मत समोषधीभिरोषधयः सं ब्रतैर्व्रतचारिणः इति ॥ २ ॥ होतृचमस आनीय मैत्रावरुणचमसं पूरयति । मैत्रावरुणचमसाद्धोतृचमसम् । होतृचमसान्मैत्रा-वरुणचमसम् ॥ ३ ॥ अथैनाः प्रचरण्या समनक्ति

सं वोऽनक्तु वरुणः समिन्द्रः सं बृहस्पतिः ।
त्वष्टा विष्णुः प्रजया सँरराणो यजमानाय द्रविणं दधातु ॥

इति । यथायथं धुरो[4] धूर्भिः[4] कल्पन्ताम् इति च ॥ ४ ॥ पृच्छति होताध्वर्युम् अध्वर्यो-ऽवेरपा[5] इति ॥ ५ ॥ उतेमनन्नमुः इति प्रत्याह ॥ ६ ॥ ततः ऋतुकरणं जुहोति यमग्ने पृत्सु मर्त्यम् इत्येतया यद्यग्निष्टोमः[6] ॥ ७ ॥ यद्युक्थ्यो हुत्वा परिधौ लेपं निमार्ष्टि ॥ ८ ॥ यदि षोडशी हुत्वा परिधौ लेपं निमृज्य द्रोणकलशमुपस्पृशति ररार्टी वा ॥ ९ ॥ न जुहोति न निमार्ष्टि नोपस्पृशति वाजपेयेऽतिरात्रे वा । एतद्यजुर्वेदन् प्रपद्यते ॥ १० ॥ दक्षिणस्य हविर्धानस्य प्रधुरे[7] प्रचरणी[7] सादयति ॥ ११ ॥ यं द्विष्यात्तमुपस्पृशेत् ॥ १२ ॥ ॥५॥

अपरया द्वारा हविर्धानेऽपः प्रपादयति[8] पूर्वया वा । पूर्वया तु यजमानः प्रपद्यते ॥ १ ॥ उत्तरस्य हविर्धानस्याधस्ताद्वसतीवरीरेकधना मैत्रावरुणचमसीया इति सादयति ॥ २ ॥ दक्षिणस्य हविर्धानस्याधस्तात् धुरोऽर्धं[9] होतृचमसँ सादयित्वा दधिग्रहेण चरति ॥ ३ ॥ औदुम्बरेण पात्रेण[10] चतुःस्रक्तिना दधि गृह्णाति उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामि इति ॥ ४ ॥ हरति अपेन्द्र द्विषतो मनः इति ॥ ५ ॥ जुहोति प्राणाय त्वा इत्यनुवाकशेषेण ॥ ६ ॥ आज्यग्रहं[11] गृह्णीयात् तेजस्कामस्य । सोमग्रहं गृह्णीयाद् ब्रह्मवर्चसकामस्य । दधिग्रहं गृह्णीयात् पशुकामस्य ॥ ७ ॥ आज्यग्रहस्यैष एव कल्पः ॥ ८ ॥ सोमग्रहं ग्रहीष्य-

1. By conjecture; omitted in all MSS. cf. TS III.5.6.2.
2-2. A$_{2-3}$ omitted
3. B$_1$ omitted
4-4. A$_1$ धुरोद्दुर्भिः; A$_{2-3}$ धुरोधुर्भिः; B$_1$ धुरोधुर्भिः
5. Thus B$_1$; A$_1$ °वेरप्या; A$_{2-3}$ °वेरपाम्
6. B$_1$ °ष्टोमेव
7. B$_1$ प्रधुरे
8. A$_{2-3}$,B$_1$ प्रपादयंति
9. B$_1$ परोर्धं
10. A$_{2-3}$ omitted
11. A$_1$,B$_1$ आज्यं

न्वधिषवणचर्मणि राजानं निवपति यावन्तमेकग्रहायामं मन्यते ॥ ९ ॥ प्रत्युपनह्येतरं वसतीवरीभिर्होतृचमसं पूरयित्वा निग्राभ्यासु यजमानं वाचयति निग्राभ्या स्थ देवश्रुतः इति प्रतिपद्य गणा मे मा वि तृषन् इत्यन्तेन ॥ १० ॥ वसतीवरीभिरुपसृज्याभिषोष्यन्नभिमन्त्रयते[1] अवीवृधं वो मनसा सुजाताः इति ॥ ११ ॥ यत्र क्व चाभिषुणुयादेवमेवाभिमन्त्रयेत ॥ १२ ॥ अथैनमुपरे[2] ग्राव्णाभिषुणोति ॥ १३ ॥ ॥ ६ ॥

तिस्रो यह्वस्य समिधः परिज्मनो देवा अकृण्वन्नुशिजो अमर्त्ये। तासामेनामद्धुर्मर्त्ये[3] भुजं छोकमिद् द्वे उप जामी ईयतुः[4] इति ॥ १ ॥ यत्र क्व चाभिषुणुयादुपर एव ग्राव्णाभिषुणुयात् ॥ २ ॥ एतस्यैवैषोऽभिषवमन्त्रः ॥ ३ ॥ योऽभिषूयमाणस्य प्रथमोंऽशुः स्कन्दति तमभिमन्त्रयेत आ मा स्कान् सह प्रजया सह रायस्पोषेण इति ॥ ४ ॥ अभिषवेऽभिषवेऽभिमन्त्रयेतेत्येकम्। य एव सर्वप्रथम इत्यपरम् ॥ ५ ॥ द्रप्सश्चस्कन्द इति विप्रुषोऽभिमन्त्रयेत ॥ ६ ॥ अभिषवेऽभिषवेऽभिमन्त्रयेतेत्येकम्[5]। य एव सर्वान्तत[6] इत्यपरम् ॥ ७ ॥ अत्र यजमानो दशापवित्रस्य नाभिं कुरुते ॥ ८ ॥ अथैनँ सहिरण्येन पाणिना तिरः पवित्रमच्छिन्नां धारां स्रावयन् दधिग्रहपात्रेण[7] गृह्णाति। वायव्येनैव गृह्णीयादित्यपरम् ॥ ९ ॥ अथैनं खरे सादयति एष ते योनिः इति ॥ १० ॥ अथैनँ सहिरण्येन पाणिना प्राङ्मुखो[8] जुहोति। तस्य दधिग्रहेण मन्त्रा व्याख्याताः ॥ ११ ॥ अनभिकृतो वा सोमधर्मैर्दधिग्रहविकारत्वात्[9] ॥ १२ ॥ तत्रार्थग्रहणोऽभिषवः[10] पत्रसंयोगात्। सोमकरणी[11] चास्याभिषवमन्त्रः ॥ १३ ॥ तत्रैषोऽत्यन्तप्रदेशः[12] ॥ १४ ॥ ॥७॥

सर्वान् सोमान् सहिरण्येन पाणिना गृह्णाति च जुहोति च ॥ १ ॥

---

1. Emended; $A_1$ °षोभ्यंतभि°; $A_{2-5}$,$B_1$ °षोऽयन्भि°
2. $B_1$ °मपरेण
3. ĀpŚS XII.7.10 तासामेका°
4. cf. ṚV III.2.9; MS I.3.35; ĀpŚS XII.7.10
5. The repetition of अभिषवे only in $A_1$; $A_{2-5}$ °मन्त्रयते°
6. $A_{4,5}$ सर्वांतत
7. $B_1$ दधिपात्रेण. This sūtra is partially cited by Vāñcheśvara (20a) on SatS VIII.
8. $B_1$ omitted
9. $A_1$ सोमधर्मेदधि°; $A_2$ सोमधर्मैदधि°
10. $A_{2-5}$ °ग्रहणाभि°
11. $B_1$ सोमंकरणि
12. $A_1$ °भ्यंत°; $A_{2-5}$ °त्यन्तः प्रदेशः

सर्वाः सोमाहुतीः[1] प्राङ्मुखो जुहोति ॥ २ ॥ हुत्वा सदसि[2] शेषं[2] भक्षयति ॥ ३ ॥ मार्जालीये पात्रं प्रक्षालयति ॥ ४ ॥ सदस्येवात ऊर्ध्वं[3] सोमभक्षान् भक्षयन्ति । आग्नीध्रे हविर्भक्षान् ॥ ५ ॥ मार्जालीय उच्छिष्टपात्राणि प्रक्षालयति[3] ॥ ६ ॥ ततोऽदाभ्यं गृह्णाति ॥ ७ ॥ उपनद्धस्य राज्ञस्त्रीनँशून् प्रवृहति[4] वसवस्त्वा प्र वृहन्तु गायत्रेण छन्दसा इत्येतैर्मन्त्रैः ॥ ८ ॥ निग्राभ्याणां[5] दध्नः पयसो वा चमसे निःषिच्यांशूनाधूनोति मन्दासु ते शुक्र शुक्रमा धूनोमि इत्येतैर्मन्त्रैः ॥ ९ ॥ त्रिभिराधूनोतीत्येकेषाम् । पञ्चभिरित्येकेषाम् । सप्तभिरित्येकेषाम् ॥ १० ॥ अथैनं दधिग्रहपात्रेण गृह्णाति शुक्रं ते शुक्रेण गृह्णामि ॥ अग्निः प्रातःसवने पात्वस्मान् इति चैताभिस्तिसृभिः[6] ॥ ११ ॥ हरति आस्मिन्नुग्रा[6] अचुच्यवुः इति ॥ १२ ॥ जुहोति सोमः सोमस्य पुरोगाः इति ॥ १३ ॥ ततोऽशूँस्त्रीनपिसृजति उशिक् त्वं देव सोम गायत्रेण छन्दसा इत्येतैः प्रतिमन्त्रम् ॥ १४ ॥ अनुसवनमपिसृजेदित्येकम्[7] । तदानीमेवैकैकमपिसृजेदित्यपरम् ॥ १५ ॥ द्वादश पष्ठौहीर्दक्षिणा[8] ददाति कृत्य-धीवासं च ॥ १६ ॥ ततोंऽशुं गृह्णाति ॥ १७ ॥ अधिषवणचर्मणि राजानं निवपति यावन्तमेकग्रहापासं[9] मन्यते ॥ १८ ॥ ॥८॥

अथैनमनवानँ[10] सकृदभिपुत्य तिरः पवित्रमच्छिन्नां धारां स्रावयन्नदाभ्य-पात्रेणानवानँ सकृद् गृह्णाति ॥ १ ॥ वामदेव्यं मनसा गायमानो गृह्णातीति विज्ञायते ॥ २ ॥ वामदेव्यस्यर्चा गृह्णीयादित्येकेषां कया नश्चित्र आ भुवत् इत्येतया ॥ ३ ॥ प्राणता ग्राह्योऽपानता[11] ग्राह्यः प्राण्यापान्य व्यनता[12] गृहीतव्य इति विज्ञायते ॥ ४ ॥ गृहीत्वा शतमानं हिरण्यमभिव्यनिति आ नः प्राण एतु परावतः इति ॥ ५ ॥ हिरण्येन ग्रहमपिधायाप उपस्पृशति इन्द्राग्नी मे वर्चः कृणुताम् इति

---

1. $A_{1,2}$ सोमाहुतिः; $B_1$ सोमाहुति
2. $B_1$ सदसिशेषं
3. Gopinatha on SatS VIII.2 (p. 808): भक्षितानामुच्छिष्टानां मार्जालीये प्रक्षालनमिति भारद्वाजसूत्रे ।
4. $A_1$ प्रवहती; $A_2$ प्रवहति
5. $A_1$ निर्ग्राह्याणां; $A_{4,5}$ निग्राभ्याणां; $B_1$ निग्राह्याणां
6–6. $A_{2-5}$ °निरस्यास्मि°
7. $B_1$ अनुसवनं omitted
8. $B_1$ °र्दक्षिणा
9. $A_1$ °ग्रहायापम; $A_2$ °ग्रहायार्द; $A_3$ °ग्रहायास; $A_{4,5}$ °ग्रहायाभर्य; $B_1$ °ग्रहायासं
10. $B_1$ °वानं
11. Emended; MSS ग्राह्यः प्राणता; cf. ApSS XII.8.6
12. Emended; $A_1$ व्यपतो; $A_{2-5}$ व्यनतो; $B_1$ व्यतो

॥ ६ ॥ अथैनमनवानँ सकृज्जुहोति दधन्वे वा यदीम् इति ॥ ७ ॥ यद्यनवानं[1] न शक्नुयाद्धोतुं गृहीतुं वा वरे दत्ते जुहुयात् ॥ ८ ॥ हुत्वा सदसि शेषं भक्षयति यथा पुरस्तात् ॥ ९ ॥ द्वादश पष्ठौहीर्दक्षिणा[2] ददाति कृत्यधीवासं च ॥ १० ॥ तत उपाँशुसवनं ग्रावाणमादत्ते देवस्य त्वा सवितुः प्रसवे इति प्रतिपद्य वृष्टिवनिम् इत्यन्तेन ॥ ११ ॥ तमादाय वाचं यच्छत्याग्रयणात्[3] ॥ १२ ॥ अथैनदूर्ध्वसानुं[3] सहिरण्येन पाणिना राज्ञोऽभिमिमीते इन्द्राय त्वा वृत्रघ्ने इत्येतैर्मन्त्रैः ॥ १३ ॥ तत्र स एव मानकल्पो यः क्रयेऽन्यत्रोपसमूहनात् ॥ १४ ॥ तत उपाँशुं गृह्णाति ॥ १५ ॥ अधिषवणचर्मणि राजानं निवपति यावन्तमेकग्रहायाप्तं मन्यते[4] ॥ १६ ॥ ॥९॥

श्वात्रा स्थ वृत्रतुरः इत्याप्याय्याभिमन्त्रयते यत्ते सोम दिवि ज्योतिः इति ॥ १ ॥ अधिषवणफलके अभिमन्त्रयते धिषणे वीडू सती वीडयेथाम् इति ॥ २ ॥ उपरिष्टाद् ग्रावा भवत्यधस्तादँशवः ॥ ३ ॥ अथ होतृचमसे[5] प्रदक्षिणं परिप्लावय-न्निग्राभमुपैति[6] प्रागपागुदगधराक्तास्त्वा दिश आधावन्त्वम्ब[7] नि ष्वर[7] इति[8] ॥ ४ ॥ पडँशूनुपयच्छति । आर्द्राः सन्तोऽसँश्लिष्टा भवन्ति ॥ ५ ॥ मा भेर्मा सं विक्थाः इति ग्रावाणमुद्यम्य वदन्ति ॥ ६ ॥ यत्र तृणं मूलं वा पश्यति तत्प्रत्यभिषुणोति अनागसस्त्वा वयमिन्द्रेण प्रेपिता उप वायुष्टे अस्त्वँशभूर्मित्रस्ते अस्त्वँशभूर्वरुणस्ते अस्त्वँ-शभूरहतः सोमो राजा मया इति ॥ ७ ॥ एतयैवात ऊर्ध्वमभिषुणुयात् ॥ ८ ॥ अष्टौकृत्वोऽग्रेऽभिषुत्य पुनरेव निग्राभमुपैति ॥ ९ ॥ द्विरादितोऽन्ततो वा । चतुर्निग्राभमुपैति ॥ १० ॥ त्रिरुदचनेन[9] संभृत्योदश्चतीति[10] विज्ञायते ॥ ११ ॥ अपात्तानामँशूनां द्वाभ्यां[11] प्रतिप्रस्थातोपाँशुपात्रमपिधायोत्तरव[12] उपयच्छति ॥ १२ ॥ अञ्जलिना राजानमादायाध्वर्युरुपाँशुपात्रं नयति वाचस्पतये पवस्व वाजिन् इति

1. $B_1$ यद्यवाह
2. $B_1$ °र्दक्षिणां
3-3. $A_1$ °प्रयणायेन°; $A_{2,3}$ °प्रणादथैन°; $A_{4,5}$ °पाणादथैन°; $B_1$ °प्रयणादथैनम्°
4. $A_{2-5}$ मन्यंते
5. Thus $B_1$; $A_1$ °चमसं; $A_{2-5}$ °चमसो
6. $B_1$ °ग्रिभाद°
7-7. $A_1$ °त्वमव; $A_{2-5}$ °त्वव
8. Rudradatta on ĀpŚS XII.9.9 indirectly refers to this sūtra in the view of *kalpāntarakāra.*
9. Emended; $A_1$ त्रिरुदंच; $A_{2-5}$ त्रिरुदंचा; $B_1$ त्रिरुदंचः
10. Emended; $A_1$ संभृत्य इश्चतीति; $A_{2-5}$ संभृत्य दुहचिति; $B_1$ संभृत्योदचिति
11. Emended; MSS चाभ्यां
12. $A_{1,2}$ °अभिधायो°

॥ १३ ॥ एवंविहितावपरौ[1] द्वावभिषवौ भवतः[1] ॥ १४ ॥ अपि वैकादशकृत्वो द्वितीयमभिषुणुयाद् द्वादशकृत्वस्तृतीयम् ॥ १५ ॥ ॥१०॥

अन्याभ्यामन्याभ्यामँशुभ्यां प्रतिप्रस्थाता पात्रमपिदधाति ॥ १ ॥ असादयित्वा ग्रहमादायाध्वर्युरुत्तिष्ठति स्वाङ्कृतोऽसि मधुमतीर्न[2] इषस्कृधि इति ॥ २ ॥ उत्तरेण होतारँ हरति उर्वन्तरिक्षमन्विहि इति ॥ ३ ॥ मनस्त्वाष्टु इत्युत्तरं परिधिसंधिमन्ववतिष्ठतः ॥ ४ ॥ ऋजुस्तिष्ठन् दक्षिणाप्राश्चँ संततं जुहोति स्वाहा त्वा सुभवः[3] सूर्याय इति ॥ ५ ॥ देवेभ्यस्त्वा मरीचिपेभ्यः इति हुत्वा परिधौ लेपं निमार्ष्टि ॥ ६ ॥ यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचा हस्तेन निमृज्यात् ॥ ७ ॥ यदि कामयेतावर्षुकः स्यादित्युत्तानेन निमृज्यात् ॥ ८ ॥ आग्रयणस्थाल्याँ संपातमवनीयायतने[4] पात्रँ सादयति एष ते योनिः प्राणाय त्वा इति ॥ ९ ॥ अनभिषुतानामँशूनामेकमादायाध्वर्युरुपाँशुपात्रेऽपास्यति । स आ तृतीयसवनात् परिशेरे ॥ १० ॥ ततोऽंशुमंशूनपिसृजति यत्ते सोमादाभ्यं नाम जागृवि इति । द्वौद्वावनुसवनं[5] वा ॥ ११ ॥ यद्यभिचरेत् अमुष्य[5] त्वा प्राणे सादयामि इत्युपाँशुं गृहीत्वा सादयेत् ॥ १२ ॥ अथैनँ सावित्रेणादाय[6] हरति ॥ १३ ॥ समानमा होमात् ॥ १४ ॥ होष्यन्नभिमन्त्रयते अमुं जहाय त्वा होष्यामि इति ॥ १५ ॥ यदि दूरे स्यादा तमितोस्तिष्ठेत् ॥ १६ ॥ समन्य[7] जुहोति प्रहर्षिणो मदिरस्य मदे मृषासावस्तु स्वाहा इति ॥ १७ ॥ समानमितरत् ॥ १८ ॥ ॥११॥

ततो ग्राव्ण आदायाध्वर्यवो महाभिषवायोपविशन्ति । पुरस्तादध्वर्युर्दक्षिणतः प्रतिप्रस्थाता पश्चान्नेष्टोत्तरत उन्नेता ॥ १ ॥ अभिषवणचर्मणि भूयिष्ठँ राजानं निवपति । अल्पीयाँसं माध्यंदिनाय सवनायावशिनष्टि ॥ २ ॥ वसतीवरीभिरुपसृज्य निग्राभमुपेत्यापरिमितमभिषुण्वन्ति[8] ॥ ३ ॥ निग्राभमुपयन्ति । अभिषुण्वन्ति । निग्राभमुपयन्ति[9] । अभिषुण्वन्ति[9] ॥ ४ ॥ त्रिरभिषुतँ राजानं

1–1. $B_1$ °नाभिषवौ द्वावपरौ बभूवतुः
2. $A_{2-3}$ °मतीर्भ
3. $A_1$ सुभुवः
4. $B_1$ °नपनिधायायतने
5–5. $A_{2-3}$ द्वा सवनं वा यद्यमुष्य; $B_1$ °यद्यमुष्य
6. $A_1$,$B_1$ सावित्रेणोदा
7. $A_{2-3}$,$B_1$ समन्वं
8. $A_1$ निग्राहमुपेत्याभिषुण्वंति; $A_{2-3}$ निग्राभ्यमुपेत्यापरिमितमभिषवमभिषुण्वंति; $B_1$ निग्राह-मुपेत्यापरिमितमभिषुण्वति
9–9. Thus $B_1$; omitted in others.

चमसे सँसिच्याधवनीय आनयति ॥ ५ ॥ एवंविहितावपरौ भवतः ॥ ६ ॥ उत्तमेऽभिषवे प्रपीड्यर्जीषम् ॥ ७ ॥ सुसंभृतँ राजानं कुर्वन्ति ॥ ८ ॥ पवित्रेण निर्मृज्य प्रपीडयति ॥ ९ ॥ अधिषवणचर्मणि संमुखान् ग्राव्णः कृत्वा ग्रावभ्य ऋजीषं व्यपोहति । ऋजीषमुखान् करोति ॥ १० ॥ प्राञ्चमुद्गातारो द्रोणकलशं ग्रावस्वध्यूहन्ति[1] ॥ ११ ॥ समयाक्षं प्रकर्षन्ति ॥ १२ ॥ द्रोणकलश उदीचीनदशं पवित्रं वितन्वन्ति ॥ १३ ॥ पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशत इति राजानमभिमन्त्र्य होतृचमसाद्यजमानः पवित्रे[2] संततां धारां स्रावयति । यं द्विष्यात्तस्य विच्छिन्द्यात् ॥ १४ ॥ ॥१२॥

उदचनेनोन्नेताधवनीयाद्धोतृचमस[3] आनयति ॥ १ ॥ तिरः[4] पवित्रँ स्रवन्त्या[4] धारया अन्तर्यामं गृह्णाति उपयामगृहीतोऽस्यन्तर्यच्छ मघवन् इति ॥ २ ॥ तस्योपाँशुना कल्पो व्याख्यातः ॥ ३ ॥ एतावन्नाना । दक्षिणेन होतारँ हरत्युत्तरेण वा ॥ ४ ॥ मनस्त्वाष्टु इति दक्षिणं परिधिसंधिमन्ववतिष्ठतः ॥ ५ ॥ ऋजुस्तिष्ठन् प्राञ्चमुदञ्चँ संततं जुहोति स्वाहा त्वा सुभवः[5] सूर्याय इति ॥ ६ ॥ व्याख्यातं लेपनिमार्जनँ संपातावनयनमिति ॥ ७ ॥ स्रुवदन्तर्यामपात्रमायतने[6] सादयति एष ते योनिरपानाय त्वा इति ॥ ८ ॥ यद्यभिचरेत् अमुष्य त्वापाने सादयामि इत्यन्तर्यामपात्रं[7] गृहीत्वा सादयेत् ॥ ९ ॥ समानमितरत् ॥ १० ॥ ते अन्तरेणोपाँशुसवनँ सँस्पृष्टँ सादयति व्यानाय त्वा इति ॥ ११ ॥ यद्यभिचरेत् अमुष्य त्वा व्याने सादयामि इत्युपाँशुसवनँ सादयेत् ॥ १२ ॥ एवँ सम्रान्येव भवन्त्या तृतीयसवनात् ॥ १३ ॥ तावुभावुदिते[8] जुहुयाद्यदि न त्वरेत ॥ १४ ॥ अथ यदि त्वरेतानुदित उपाँशुं जुहुयात् । उदितेऽन्तर्यामम् ॥ १५ ॥ विपरीतमेक उपाँश्वन्तर्यामयोर्होमँ समामनन्ति । उभावनुदित इत्येके ॥ १६ ॥ ॥१३॥

तिरः पवित्रँ स्रवन्त्या धारया ग्रहान् गृह्णाति ॥ १ ॥ यदि रथन्तरसामा

---

1. $A_{2-5}$ °ह्यंति
2. $A_{2-5}$ पवित्रता; $B_1$ पवित्रं
3. Thus $B_1$; $A_1$ उदचनोनोंता°; $A_2$ उदचेनेचना°; $A_{3-5}$ उदचेनेत्रेता°
4–4. Thus $B_1$; $A_1$ तिरं पवित्र स्रुवंत्या; $A_{2-5}$ भिरः पवित्र२ स्रवंत्या
5. $A_1$ सुभुव
6. $A_{2-5}$ स्रवेदंत°; $B_1$ स्रुवेदंत°
7. $A_1$ इत्यंतर्यामं
8. Thus $B_1$; $A_1$ तावुभा उदिते; $A_2$ तावुदिते; $A_{3-5}$ तावुदयानुदिते

सोमः स्यादैन्द्रवायवाग्रान् गृह्णीयात्। यदि बृहत्सामा शुक्राग्रान्। यदि जगत्सामाग्रयणाग्रान्। उभयसामैन्द्रवायवाग्रान्[1] गृह्णीयात् ॥ २ ॥ ऐन्द्रवायवाग्रान् गृह्णीयादामयाविन इति काम्यानि ग्रहाग्राणि ब्राह्मणव्याख्यातानि[2] भवन्ति[2]। ऐन्द्रवायवाग्रानित्येव[3] भवन्ति ॥ ३ ॥ यद्यन्यमैन्द्रवायवात् काम्यं[4] पूर्वं ग्रहं[4] गृह्णीयाद्धारयेदेवमैन्द्रवायवस्य सादनात् ॥ ४ ॥ अथैनमैन्द्रवायवं सादयित्वा सादयेत् ॥ ५ ॥ यान् प्राचीनमाग्रयणाद् ग्रहान् गृह्णीयात्तानुपांशु गृह्णीयात्। यानूर्ध्वांस्तानुपब्दिमत इति ॥ ६ ॥ आग्रयणाग्रान् गृह्णन् मन्थिनमेव गृहीत्वा वाचं विसृजेत[5]। उक्थ्याग्रान्[5] गृह्णन्नुपाँशूक्थ्यं[6] गृह्णीयात् ॥ ७ ॥ ऐन्द्रवायवं गृह्णाति आ वायो भूष शुचिपाः इति प्रतिपद्य उपयामगृहीतोऽसि वायवे[7] त्वा इत्यन्तेन ॥ ८ ॥ अपयम्य पात्रं पुनरेव गृह्णाति इन्द्रवायू इमे सुताः इति प्रतिपद्य उपयामगृहीतोऽसीन्द्रवायुभ्यां[7] त्वा इत्यन्तेन ॥ ९ ॥ अथैनं पवित्रेण परिमृज्यायतने सादयति एष ते योनिः सजोषाभ्यां त्वा[8] इति ॥ १० ॥ एवमेवेतरान्[8] ग्रहान् यथादेवतं गृहीत्वा यथायतनं स्वेन स्वेन सादनेन सादयति ॥ ११ ॥ यथैनाम्नातं[9] सादनं स्यात् एष ते योनिः इत्येवैनं सादयेत् ॥ १२ ॥ ॥१४॥

मैत्रावरुणं गृह्णाति अयं वां मित्रावरुणा इति ॥ १ ॥ अथैनं शृतशीतेन पयसा श्रीणाति

राया वयँ ससवाँसो मदेम हव्येन देवा यवसेन गावः।

तां धेनुं मित्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीम् ॥

इति ॥ २ ॥ अतीत्याश्विनं शुक्रं[10] गृह्णाति अयं वेनश्चोदयत् पृश्निगर्भाः इति ॥ ३ ॥ अथैनं हिरण्येन श्रीणाति शुक्रं ते शुक्रेण श्रीणामि[11] इति[11] ॥ ४ ॥ ततो मन्थिनं ते प्रत्नथा पूर्वथा इति[12] ॥ ५ ॥ अथैनं सक्तुभिः[12] श्रीणाति

---

1. Thus $B_1$; $A_1$ उभयसाम्यैंद्र°; $A_{2-5}$ उभयसाम्यैंद्र°
2-2. $B_1$ भवंति ब्राह्मणे व्याख्यातानि
3. Thus $A_{1,2}$,$B_1$; $A_{3-5}$ °मानि
4-4. $B_1$ पूर्वं काम्यं
5-5. $A_1$ विसृजेतोक्थ्याग्रान्; $A_{2,3}$ विसृजतोक्थ्याग्रान्; $A_{4,5}$ विसृजतोक्थ्यानाग्रान्; $B_1$ विसृजेत्स्तोक्थ्याग्रान्
6. $A_1$ °शुथिम; $A_{2-5}$ °शूक्थं
7-7. $B_1$ The portion वायवे त्वा ...... उपयामगृहीतोऽसि is repeated.
8-8. Thus $B_1$; $A_1$ त्वेत्वेवमेवोतरान्; $A_{2-5}$ त्वेवमितरान्
9. $A_1$ यर्हाना°; $A_{2,4,5}$ यस्वा°; $A_3$,$B_1$ यस्याना°
10. $B_1$ omitted
11-11. Emended; $A_1$ मिति; $A_2$ माति; $A_3$ मीति; $A_{4,5}$ मीति; $B_1$ इति
12-12. $A_1$ °थयेनं सक्तुभि; $B_1$ °थयेनं सक्तुभि

मनो न येषु हवनेषु[1] तिग्मं विपः शच्या वनुयो द्रवन्ता[2]।
आ[3] यः शर्याभिस्तुविनृम्णो अस्याः श्रीणीतादिशं[3] गभस्तात् ॥

इत्यनभिध्वँसयन्नात्मानँ[4] चेतराँश्च ग्रहान् ॥ ६ ॥ तत[4] आग्रयणं द्वयोर्धारयोर्गृह्णाति ॥ ७ ॥ य एष आग्रयणस्थाल्याँ राजा तमन्यस्मिन् पात्रे पर्यासिच्य द्वितीयां धारां कुरुते[5] ये देवा दिव्येकादश स्थ इति ॥ ८ ॥ रुग्णवत्यर्चा[6] भ्रातृव्यवतो गृह्णीयात् त्रिँशत्त्रयश्च गणिनो रुजन्तः इति ॥ ९ ॥ आग्रयणं गृहीत्वा त्रिर्हिंकृत्वा[7] वाचं विसृजते सोमः पवते सोमः पवते सोमः पवतेऽस्मै ब्रह्मणे पवतेऽस्मै क्षत्राय पवतेऽस्मै[8] विशे[8] पवतेऽस्मै सुन्वते यजमानाय पवत इषे पवत ऊर्जे पवतेऽद्भ्यः पवत ओषधीभ्यः पवते वनस्पतिभ्यः पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते ब्रह्मवर्चसाय पवते यजमानाय पवते मह्यं ज्यैष्ठ्याय पवते इति ॥ १० ॥ शनैरभिव्याहृत्यथोच्चैरथ[9] सूच्चैरिति विज्ञायते ॥ ११ ॥ ॥१५॥

ततस्त्रीनतिग्राह्यान् गृह्णाति अग्न आयूँषि पवसे इत्येतैस्त्रिभिरनुवाकैः ॥ १ ॥ तत उक्थ्यम् उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वते इति ॥ २ ॥ ततो ध्रुवं मूर्धानं दिवो अरतिं पृथिव्याः इति ॥ ३ ॥ यं कामयेत सर्वमायुरियादिति[10] तस्य पूर्णं ग्रहं गृह्णीयात् ॥ ४ ॥ हिरण्येऽधि सादयेदायुष्कामस्य ॥ ५ ॥ राजपुत्रो ध्रुवं गोपायतीति विज्ञायते ॥ ६ ॥ ध्रुवे गृहीते[11] यजमानो न प्रस्रावयत्यावनयनात्[12] ॥ ७ ॥ द्रोणकलशे राजानमतिपावयति यावन्तं प्रातःसवनायालं मन्यते ॥ ८ ॥ प्रपीड्य पवित्रं पूतभृति वितत्य मैत्रावरुणचमसीया एकधनासु व्यानयति ॥ ९ ॥

---

1. $A_1$,$B_1$ भवनेषु
2. $A_1$ द्रवंतो
3-3. $A_1$ आयायाः शयाभिस्तु श्रीणासुच्याभिस्तुविभृम्णोस्याश्रीणितादिशं; $A_{2-5}$ आ यः शया-भिस्तुश्रीणायुच्योभिस्तुविनृम्णो अस्या श्रीणाततादिशं; ($A_{4,5}$ श्रीणातिदिशं); $B_1$ आयाया-श्शयाभिस्तुश्रीणासुच्योभिस्तुविनृम्णो अस्याः श्रीणीतादिशं
4-4. $A_2$ °ध्वर्स्तत
5. Thus $A_1$; $A_2$ कुरुता; $A_{3-5}$ करुति
6. $A_1$ रुग्णवम्यर्चा; $A_{2-5}$ ऋरुणवत्यर्चा
7. $A_1$ त्रिहुंकृत्वा
8. $A_1$,$B_1$ omitted
9. $A_1$ °रभ्रेव्याहृत्य°
10. $A_1$ °मायुर्यादिति; $A_2$ सर्वामायुरित्यादिति; $A_{4,5}$ °मायुर्यिति
11. $A_{2-5}$ गृहीते गृहीते; $B_1$ गृहीते गृहीतो
12. Thus $A_1$; $A_{2-5}$,$B_1$ °व्यावमेनी

यथार्थमेकधनानामाधवनीयेऽवनीयाधवनीयात् पूतभृत्येकदेशं[1] राज्ञोऽवनयति[2] ॥ १० ॥ तत्रैषोऽत्यन्तप्रदेशः । यत्र क्व च किं च पूतभृत्यवनयेत् तिरः पवित्रमेवावनयेदन्यत्र द्रोणकलशात् ॥ ११ ॥ पवमानग्रहान् गृह्णाति । उपयामगृहीतोऽसि प्रजापतये त्वा इति द्रोणकलशमभिमृशेत् । इन्द्राय त्वा इत्याधवनीयम् । विश्वेभ्यस्त्वा देवेभ्यः इति पूतभृतम् ॥ १२ ॥ पुरस्तादुपयामा[3] यजुषा[3] गृह्णन्त उपरिष्टादुपयामा ऋचा यज्ञस्य धृत्या इति विज्ञायते ॥ १३ ॥ वैप्रुषान् होमान् जुहोति यस्ते द्रप्स स्कन्दति इत्येताभिस्तिसृभिः ॥ १४ ॥ सप्तहोतारं च हुत्वोदञ्चः प्रह्वा बहिष्पवमानाय प्रसर्पन्ति[4] ॥ १५ ॥ अध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारमुद्गातोद्गातारं प्रतिहर्ता प्रतिहर्तारं ब्रह्मा ब्रह्माणं यजमानः । यजमानं ब्रह्मेत्येकेषाम् ॥ १६ ॥ बर्हिर्मुष्टिं धून्वन्नध्वर्युः प्रथमः सर्पति गायत्रः पन्था वसवो देवता वृकेणापरिपरेण पथा स्वस्ति वसूनशीय इति वागग्रेगा अग्र एतु इति च ॥ १७ ॥ ॥१६॥

दक्षिणेन[5] चात्वालमुपविशन्ति[5] ॥ १ ॥ अग्रेण प्रस्तोतारमुपविश्याध्वर्युः प्रस्तोत्रे बर्हिर्मुष्टिं प्रयच्छन् स्तोत्रमुपाकरोति वायुर्हिंकर्ता[6] इति[6] प्रतिपद्य ते देवाः प्राणभृतः प्राणं मयि दधतु ॥ सोमः पवते इत्यन्तेन ॥ २ ॥ एतेनैव सर्वाणि स्तोत्राण्युपाकरोति[7] ॥ ३ ॥ उपावर्तध्वम् इत्यन्यत्र पवमानेभ्योऽनन्तरं[8] करोति ॥ ४ ॥ चात्वालमवेक्षमाणाः स्तुवते ॥ ५ ॥ स्तोत्रे स्तूयमाने[9] चत्वार ऋत्विज उपगायन्ति । दिग्भ्य उपगायन्ति ॥ ६ ॥ यजमानपञ्चमा ऋत्विज उपगायन्ति[10] ॥ ७ ॥ नाध्वर्युरुपगायेदिति विज्ञायते ॥ ८ ॥ ओ[11] इत्यन्य ऋत्विज उपगायन्ति । हो[12] इति

1. $A_{2,3}$ °त्येकादृशं; $A_{4,5}$ °त्येकादृशं; $B_1$ °त्येकोदृश
2. $A_{2-5}$ राज्ञो निवपति
3–3. $A_1$ °यामायजुषा; $A_{2-5}$ °यामायजुषा
4. $A_1$ सर्पंति; $B_1$ सर्पंति
5–5. Emended; A दक्षिण चात्वा°; $B_1$ दक्षिण ··· त्वा°
6–6. $A_1$ °हिंकर्तीति; $A_{2-5}$ °हिंकर्तेति
7. °करोतीति
8. $A_1$ °भ्योत्तरं; $B_1$ °भ्योत्तरं
9. $A_{2-5}$ omitted
10. Rudradatta on ĀpŚS XII.17.11 : तथा यजमानपञ्चमा उपगायन्तीति भारद्वाजः । Gopīnātha on SatŚ VIII.4 (p. 849) also cites आह भारद्वाजः–यजमानपञ्चमा उपगायन्ति ।
11. Thus $A_1$,$B_1$; $A_{2-5}$ ओं; Rudradatta on ĀpŚS XII.17.11 : स एव पुनराह हो इत्युत्विज उपगायन्ति ओमिति यजमान इति । Gopīnātha on SatŚ VIII.4 (p.849) also cites similarly. Vāñcheśvara (32a) on SatŚ VIII : तथा च भारद्वाजः यजमानपंचमा उपगायंति ओमित्यृत्विज उपगायंति हो इति यजमान इति ।
12. $A_1$ होता; $A_2$ होतं; $A_{3-5}$ होत; $B_1$ हे

यजमानः ॥ ९ ॥ स्तूयमानं यजमानोऽन्वारोहं जपति श्येनोऽसि गायत्रछन्दाः इति ॥ १० ॥ स्तुतमनुमन्त्रयते स्तुतस्य स्तुतमसि इति ॥ ११ ॥ एतेनैव सर्वाणि स्तोत्राण्यनुमन्त्रयते ॥ १२ ॥ स्तुत उत्तिष्ठन्नाह अग्नीदग्नीन् विहर बर्हिः स्तृणाहि पुरोडाशाँ अलंकुरु प्रतिप्रस्थातः पशुनेहि इति ॥ १३ ॥ प्रत्येत्य राजानं यजमान उपतिष्ठते विष्णो त्वं नो अन्तमः इति ॥ १४ ॥ आग्नीध्रादङ्गारानाहृत्य यथान्युप्तमाग्नीध्रो धिष्णियान् विहरति ॥ १५ ॥ पुरस्तात्प्रत्यङ्ङासीनः प्रतिप्रस्थाता धिष्णियान् व्याघारयति ॥ १६ ॥ द्रोणकलशात् परिप्लवया[1] राजानमादायाहवनीयमाग्नीध्रीयँ[2] होत्रीयम् । पञ्चगृहीतेनाज्येनेतरान् । सोमेन मार्जालीयम् ॥ १७ ॥ य एव निवपनमन्त्रास्ते[3] व्याघारणाः[4] ॥ १८ ॥ सवनीयानां पात्राणि प्रक्षाल्य प्रयुनक्ति यान्यौपधकारितानि[5] भवन्ति ॥ १९ ॥ पवित्रे कृत्वा संप्रेष्यति यजमान वाचं यच्छ इति ॥ २० ॥ वाग्यतः पात्राणि संमृशति ॥ २१ ॥ ॥१७॥

ततः सवनीयान्निर्वपतीन्द्राय हरिवते धाना इन्द्राय पूषण्वते करम्भँ सरस्वत्यै भारत्यै[6] परिवापमिन्द्राय पुरोडाशमष्टाकपालं प्रातःसवन एकादशकपालं माध्यंदिने सवने द्वादशकपालं तृतीयसवने । अपि वा सर्वत्रैकादशकपालम् ॥ १ ॥ मन्थं[7] करम्भ इत्याचक्षते । लाजान् परिवाप इति ॥ २ ॥ समानमावपनात् ॥ ३ ॥ यवानोप्य लाजार्थं कपालमुपधाय तस्मिन्नर्धं व्रीहीणां यजुरुत्पूताभिरद्भिः[8] संप्लुत्यावपति[9] ॥ ४ ॥ आवपन्नधिश्रयणमन्त्रं जपत्युद्वपन्नुद्वासनमन्त्रम्[10] ॥ ५ ॥ भ्राष्ट्रान्[11] लाजानभिघार्योद्वासयति ॥ ६ ॥ काल एवालंकरोति ॥ ७ ॥ समानमावहननात्[12] ॥ ८ ॥ यवानवहत्य[12] पाणिभ्यां लाजान् वितुषान् करोति ॥ ९ ॥ तत्रावपन-

1. $A_1$ परिप्लावया; $A_2$ परीप्लवया
2. $A_{2-5}$ °माग्नीध्र°
3. Thus $B_1$; A निवपना°
4. $A_{2-5}$ प्याघारणाः
5. $A_{2-5}$ यान्यौपधका°
6. $B_1$ गायत्र्यै
7. $B_1$ मन्थान्
8. Rudradatta on ĀpŚS XII.4.4: तथा यजुरुत्पूताभिः पुरोडाशं श्रपयतीति भारद्वाजः । Similarly Gopinātha on SatS VIII.1 (p. 783) and also Vāñcheśvara (7b) on SatS VIII who adds एव after यजुरुत्पूताभिः.
9. Emended. MSS °वहति
10. $A_{2-5}$ जपन्नुद्व°
11. $A_1$ भ्रष्ट्रान्; $A_{2-5}$ भ्राष्ठान्; $B_1$ भ्रष्टान्
12–12. $A_1$ °माहवननाद्यवानामावहत्य; $A_2$ °माहवननाद्यवानवहत्य; $B_1$ °मावपनाद्यवानवहत्य

मन्त्रोऽवहननमन्त्र[1] उद्वपनमन्त्रो[2] निष्पवनमन्त्र[3] इति क्रियन्ते ॥ १० ॥ पाण्योरुलूखलमुसलमन्त्राः क्षिपेरन् ॥ ११ ॥ ततः पुरोडाशीयानवहन्ति[4] ॥ १२ ॥ यत् प्रागधिवपनात् तत्कृत्वा करम्भार्थं कपालमुपधाय यवतण्डुलानामर्धं करम्भार्थे कपाल[5] आवपति ॥ १३ ॥ व्याख्यातः संस्कारः ॥ १४ ॥ पिष्टानामावृता धानाः पिंषन्ति[6] ॥ १५ ॥ समानमा कपालोपधानात् ॥ १६ ॥ धानार्थं कपालमुपधाय पुरोडाशकपालान्युपदधाति[5] ॥ १७ ॥ आमिक्षां करोति[7] ॥ १८ ॥ नानापात्रेषु हवींषि संवपति । उत्पुनाति ॥ १९ ॥ ॥१८॥

मन्थं चैव पुरोडाशं च संयौति ॥ १ ॥ धाना ओप्य पुरोडाशमधिश्रयति ॥ २ ॥ एवमेव धाना उद्वास्य पुरोडाशमुद्वासयति ॥ ३ ॥ आग्नीध्र[8] एवानुपृष्ठ्यं[8] बर्हिः स्तृणाति ॥ ४ ॥ पुरोडाशानलंकरोति[9] ॥ ५ ॥ तत आश्विनं द्रोणकलशात् परिप्लवया गृह्णाति या वां कशा मधुमती इत्येतेनानुवाकेनोत्तरेण वा ॥ ६ ॥ द्रोणकलशादेवात[10] ऊर्ध्वं परिप्लवया ग्रहान् गृह्णात्यन्यत्र[11] धाराग्रहेभ्यः ॥ ७ ॥ आश्विनं गृहीत्वा त्रिवृता[12] यूपं परिवीयाग्नेयं पशुं सवनीयपशुमुपाकरोत्यग्निष्टोमे । ऐन्द्राग्नमुक्थ्ये[13] द्वितीयम् । ऐन्द्रं वृष्णिं षोडशिनि[14] तृतीयम् । सारस्वतीं मेषीमतिरात्रे चतुर्थीम् ॥ ८ ॥ वेदिसंमितां चैकादशिनीं मिनोति ॥ ९ ॥ समानमा वपायाः

---

1. $A_1$ तत्र वपन°; $A_{2-5}$ तत्र पवन°; $B_1$ °वहननमंत्रो
2. $A_1$ उद्वनमैत्रा; $A_{2-5}$ उद्वपनमंत्र; $B_1$ निष्पवनमंत्र उद्वपनमंत्र
3. $A_{2-5}$ निष्पवनमैत्रा; Rudradatta on ĀpŚS XII.4.15 reads क्रियते for क्रियन्ते while citing this sūtra. Further he quotes the next sūtra with °धर्माः for °मन्त्राः; Gopinātha and Vāñcheśvara on SatS VIII.1 say : तथा च भारद्वाजः तत्रावहननमंत्र उद्वपनमंत्रो निष्पवनमंत्र इति क्रियते। पाण्योरुलूखलमुसलधर्माः क्रियंतिति ।
4. $A_1$ नां वहंति
5–5. $A_{1-5}$ कपालान्युपदधाति
6. $A_1$,$B_1$ पिंक्षन्ति
7. Rudradatta on ĀpŚS XII.4.11 cites this sūtra verbatim.
8–8. Thus $A_5$; $A_{1,2}$ आग्नीध्रो वा°; $A_{4,5}$ आग्नीध्रौ वायुनुपृष्ठ्यं; $B_1$ आग्नीध्र एव न पृष्ठ्यं
9. Thus $A_{2-5}$; $A_1$ पुरोडाशां अलं°; $B_1$ पुरोडाशमलं°. Vāñcheśvara (8a) on SatS VIII : (तथा च भारद्वाजः) हस्तेन तुषोपवापः कपालानामुपहितत्वात् तस्मिन्सर्वदेति पाण्यो प्रतिष्ठाप्य पुरोडाशोद्वासनादि प्रागलंकरणात् कुर्यादिति ।
10. $A_1$ कलशदेवात; $A_{2-5}$,$B_1$ कलशादेवता
11. $A_{1-5}$ गृह्णत्यत्र
12. Thus $B_1$; $A_{1-5}$ तृवता
13. $A_1$ °मुक्थे
14. Thus $B_1$; $A_1$ षोडशनि; $A_2$ षोडशिनो; $A_{3-5}$ षोडशिमति

होमात् ॥ १० ॥ हुतायां वपायां[1] प्रसप्स्यन्तो[2] ग्रहानवेक्षन्ते ॥ ११ ॥ द्वौ समुद्रौ विततावजूर्यौ इति द्रोणकलशाधवनीयौ ॥ १२ ॥ द्वे द्रधसी[3] इति पूतभृतम् ॥ १३ ॥ सर्वे राजानमुपतिष्ठन्ते[4] परिभूरग्निं परिभूरिन्द्रम् इति प्रतिपद्य तस्य त इदमुन्मृजे इत्यन्तेन ॥ १४ ॥ प्राणाय मे इत्युपाँशुपात्रम् ॥ १५ ॥ अपानाय मे इत्यन्तर्यामम् ॥ १६ ॥ व्यानाय मे इत्युपाँशुसवनम् ॥ १७ ॥ वाचे मे इत्यैन्द्रवायवम् ॥ १८ ॥ दक्षक्रतुभ्यां मे इति मैत्रावरुणम् ॥ १९ ॥ चक्षुर्भ्यां[5] मे इति[5] शुक्रामन्थिनौ ॥ २० ॥ ॥१९॥

श्रोत्राय मे इत्याश्विनम् ॥ १ ॥ आत्मने मे इत्याग्रयणम् ॥ २ ॥ अङ्गेभ्यो मे इत्युक्थ्यम् ॥ ३ ॥ आयुषे मे इति ध्रुवम् ॥ ४ ॥ तेजसे मे ॥ ओजसे मे ॥ वर्चसे मे इत्यतिग्राह्यान् ॥ ५ ॥ वीर्याय मे इति षोडशिपात्रं यदि षोडशी भवति ॥ ६ ॥ विष्णोर्जठरमसि इति द्रोणकलशम् ॥ ७ ॥ इन्द्रस्य जठरमसि इत्याधवनीयम् ॥ ८ ॥ विश्वेषां देवानां जठरमसि इति पूतभृतम् ॥ ९ ॥ सर्वे[6] राजानमुपतिष्ठन्ते[7] कोऽसि को नाम इति प्रतिपद्य तस्य त इदमुन्मृजे . इत्यन्तेन ॥ १० ॥ बुभूषन्नवेक्षेत ब्रह्मवर्चसकामोऽवेक्षेतामयाव्यवेक्षेताभिचरन्नवेक्षेतेति विज्ञायते ॥ ११ ॥ तत इतराणि द्रव्याण्युपतिष्ठन्ते ॥ १२ ॥ उत्करे वेदिकरणानि स्फ्यः स्वस्तिर्विघनः स्वस्तिः इत्येतैर्मन्त्रैर्यथारूपम् ॥ १३ ॥ यज्ञिया यज्ञकृत स्थ ते मास्मिन् यज्ञ उपह्वयध्वम् इति च सर्वाणि ॥ १४ ॥ उप मा द्यावापृथिवी ह्वयेताम् इति द्यावापृथिवी ॥ १५ ॥ उपास्तावः इत्यास्तावम् ॥ १६ ॥ कलशः इति द्रोणकलशम् ॥ १७ ॥ सोमः इति सोमम् ॥ १८ ॥ अग्निः इत्याहवनीयम् ॥ १९ ॥ उप देवा उप यज्ञः इति यज्ञम् ॥ २० ॥ उप मा होत्रा उपहवे[8] ह्वयन्ताम् इति होत्रकान्[9] ॥ २१ ॥ ह्वयतां ह्वयेतां ह्वयन्ताम् इत्यनुषङ्गान्[10] ॥ २२ ॥ नमोऽग्नये मखघ्ने इत्याहवनीयम् ॥ २३ ॥ नमो रुद्राय मखघ्ने इत्याग्नीध्रीयम् ॥ २४ ॥ नम इन्द्राय मखघ्ने इति होत्रीयम् ॥ २५ ॥ दृढे स्थः शिथिरे समीची माँहसस्पातम् इति द्यावापृथिवी ॥ २६ ॥ सूर्यो मा देवो दिव्यादँहसस्पातु इत्यादित्यम्[11] ॥ २७ ॥ ॥२०॥

---

1. $A_{3-5}$ omitted
2. $B_1$ प्रसप्स्यंतो
3. $B_1$ द्रधसी स्ततो
4. Emended. MSS °तिष्ठते. cf. XIII.20.10
5–5. Thus $B_1$; $A_1$ चक्षुर्भ्यामम इति; $A_{2-5}$ चक्षुर्भ्यामिति
6. $B_1$ सर्वे
7. $A_{2-5}$ °तिष्ठते
8. $A_1$ मुपमाह्वे
9. $B_1$ adds ह्वयतामिति होतृका.
10. $A_{2-5}$ °षंगम्
11. $A_1$ इत्यादित्याः

वायुरन्तरिक्षात् इति वायुम् ॥ १ ॥ अग्निः[1] पृथिव्याः इत्यग्निम्[1] ॥ २ ॥ यमः पितृभ्यः[2] इति यमम् ॥ ३ ॥ सरस्वती मनुष्येभ्यः इति सरस्वतीम् ॥ ४ ॥ देवी द्वारौ मा मा सं ताप्तम् इति सदसो द्वारौ ॥ ५ ॥ नमः सदसे इति सदः ॥ ६ ॥ नमः सदसस्पतये इति यजमानम् ॥ ७ ॥ नमः सखीनां पुरोगाणां चक्षुषे इत्यृत्विजः ॥ ८ ॥ नमो दिवे इति दिवम् ॥ ९ ॥ नमः पृथिव्यै इति पृथिवीम् ॥ १० ॥ प्रविश्य यत्रोपवेक्ष्यन्[3] भवति तदुपतिष्ठते अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतरः इति ॥ ११ ॥ अग्रेण प्रशास्त्रीयमतिक्रम्योपविशति उन्निवत उदुद्वतश्च गेषम् इति ॥ १२ ॥ द्यावापृथिवी समीक्षते पातं मा द्यावापृथिवी अद्याह्नः इति ॥ १३ ॥ सदसो दक्षिणार्धं परेक्षेत आगन्त पितरः पितृमानहं युष्माभिर्भूयासँ सुप्रजसो मया यूयं भूयास्त इति ॥ १४ ॥ सवनीयानासाद्य संप्रेष्यति प्रातः प्रातःसावस्येन्द्राय पुरोडाशानामनुब्रूहि इति ॥ १५ ॥ जुह्वामुपस्तीर्य सर्वेषाँ हविषाँ समवद्यति ॥ १६ ॥ आमिक्षाया अवदाय वाजिनस्यावद्यति । न वा वाजिनस्य ॥ १७ ॥ अवदायाभिघार्यात्याक्रम्याश्राव्याह प्रातः प्रातःसावस्येन्द्राय पुरोडाशान् प्रस्थितान् प्रेष्य इति ॥ १८ ॥ संप्रेष्यति अग्नयेऽनुब्रूहि ॥ अग्नये प्रेष्य इति स्विष्टकृतः[4] ॥ १९ ॥ अग्नैवेडां निरवद्येदित्येकम् । उपरितरामित्यपरम्[5] ॥ २० ॥ ॥२१॥

ततो द्विदेवत्यैश्चरतः ॥ १ ॥ वायव इन्द्रवायुभ्यामनुब्रूहि इति संप्रेष्यति[6] ॥ २ ॥ आदित्यपात्रेण[7] प्रतिप्रस्थातैन्द्रवायवस्यैकदेशं गृह्णाति उपयामगृहीतोऽसि वाक्षसदसि वाक्पाभ्यां त्वा क्रतुपाभ्यामस्य यज्ञस्य ध्रुवस्याध्यक्षाभ्यां गृह्णामि इति ॥ ३ ॥ द्रोणकलशाद् गृह्णन्तेऽसना हूयन्त इत्येकेषां प्रतिनिग्राह्याणां वदति[8] ॥ ४ ॥ ऐन्द्रवायवमादायाध्वर्युर्द्रोणकलशात्[8] परिप्लवया[9] राजानमादायाघारमाघारयति यत्रोपाँशुः[10] अप्सरो यज्ञोऽयमस्तु देवा ओषधीभ्यः इति ॥ ५ ॥ तत्रैषोऽत्यन्तप्रदेशः ।

1-1. $A_{2-5}$ अग्नि
2. $A_{2-5}$ पृथिव्या
3. $A_{2-5}$ यत्रोपवक्ष्यन्
4. $A_{2-5}$ स्विष्टकृते
5. Emended; $A_1$ उपरितना°; $A_{2-5}$ उपरितानां°; $B_1$ उपरिताद्या°; cf. XIII.3.14.
6. $B_1$ संप्रेष्य
7. Thus $A_1$; $A_{2,3}$ अस्य°; $A_{4,5}$ आद°; $B_1$ पात्रेण
8-8. $A_1$ परेयेत°
9. $B_1$ परिप्लाव्य
10. Emended; cf. ĀpŚS XII.20.20; A यत्रोपांशु; $B_1$ यत्रोपांशु

मध्येऽग्नेराज्याहुतीः[1] पश्चाहुतीः पुरोडाशाहुतीश्च[1] जुहोति। आद्यन्तयोराघारस्य सोमाहुतीः[2] ॥ ६ ॥ यतो[2] मन्येतानभिक्रम्य होष्यामीति तत्तिष्ठन्नाश्रावयेत् ॥ ७ ॥ अत्याक्रम्याश्राव्याह वायव इन्द्रवायुभ्यां प्रेष्य इति ॥ ८ ॥ वषट्कृते जुहोति ॥ ९ ॥ पुनर्वषट्कृते जुहुतः ॥ १० ॥ हुतमनुमन्त्रयते भूरसि श्रेष्ठो रश्मीनां प्राणपाः प्राणं मे पाहि धूरसि श्रेष्ठो रश्मीनामपानपा अपानं मे पाहि इति ॥ ११ ॥ यद्येनं पूर्वः सन् भ्रातृव्योऽभिष्यादङ्गुल्याङ्गुष्ठमुपनिगृह्णीयात्[3] यद्यपरोऽङ्गुष्ठेनाङ्गुलिं यो न इन्द्रवायू अभिदासति इति ॥ १२ ॥ अध्वर्युपात्रे प्रतिप्रस्थाता संस्रावमानयति। अध्वर्युः प्रतिप्रस्थातुः पात्रे। प्रतिप्रस्थातादित्यस्थाल्यां देवेभ्यस्त्वा इति ॥ १३ ॥ होत्रेऽध्वर्युर्भक्षं प्रयच्छति मयि वसुः पुरोवसुर्वाक्पा वाचं मे पाहि इति ॥ १४ ॥ एतेनैव होता प्रतिगृह्णाति ॥ १५ ॥ ॥ २२ ॥

एवमेवोत्तराभ्यां यथादेवतं प्रचरतः[4] ॥ १ ॥ एतावन्नाना। उत्तरेण मन्त्रेण प्रतिनिग्राह्यं गृह्णाति। नात्राघारो भवति। सकृत्सकृज्जुहुतः। उत्तरेणोत्तरेणावबाधते। उत्तरेणोत्तरेणादित्यस्थाल्यां संपातमवनयति ॥ २ ॥ अथैनामेतेनैव[5] पात्रेणापिदधाति विष्णवुरुक्रमैष ते सोमस्तं रक्षस्व तं ते दुश्चक्षा माव ख्यत् इति ॥ ३ ॥ उत्तरेणोत्तरेणाध्वर्युर्भक्षं[6] प्रयच्छति[7]। तेन तेनैव होता प्रतिगृह्णाति ॥ ४ ॥ आधवनीयं पूतभृत्यवनयति। न्युप्याधवनीयमुन्नेता ॥ ५ ॥ संप्रेष्यति उन्नीयमानेभ्योऽनुब्रूहि इति ॥ ६ ॥ होतृचमसमुख्यानेव चमसानुन्नयत्यन्यत्राछावाकचमसात् ॥ ७ ॥ द्रोणकलशादुपस्तीर्य पूतभृत उन्नीय द्रोणकलशादेवाभिघारयति ॥ ८ ॥ तत्रैषोऽत्यन्तप्रदेशः। यत्र क्व च चमसानुन्नयेदेवमेवोन्नेतोन्नयेत्[8]। सर्वान् सर्वानेवात ऊर्ध्वं चमसानुन्नयति ॥ ९ ॥ सवनमुखीयेष्वेव[9] चमसेषून्नीयमानसूक्तं भवति ॥ १० ॥ परिहित उन्नीयमानसूक्ते स्तुतोऽसि जनधाः। देवास्त्वा शुक्रपाः प्रणयन्तु इति शुक्रमध्वर्युरादत्ते। स्तुतोऽसि जनधाः। देवास्त्वा मन्थिपाः प्रणयन्तु इति मन्थिनं

---

1-1. $A_1$ मध्येऽग्नेराज्याहुतिः पश्चाहुतिः पुरोळाशाहुतिः; $B_1$ मध्ये आज्याहुतिः पश्चाहुतिः पुरोडाशाहुतिश्च
2-2. $A_1$ सोमाहुतिर्यतो; $B_1$ सोमाहुति यतो
3. $A_{2-5}$ °मिद्विष्या°
4. $B_1$ प्रचरति
5. $A_1$ अथैवमे°
6. $A_{2-5}$ उत्तरेणा°
7. $A_{2-5}$ प्रयछेत्
8. $A_{2-5}$ चमसानुन्नयेत्
9. $B_1$ °मुखेष्वेव

प्रतिप्रस्थाता ॥ ११ ॥ सावित्रेणोभावुपरिष्टात् प्रोक्षिताभ्याँ शकलाभ्यामपिधत्तः ॥१२॥ अधस्तादप्रोक्षिताभ्यां[1] पाँसुलपध्वँसयतः ॥ १३ ॥ अपनुत्तः शण्डः सहामुना इत्यध्वर्युः । यं द्वेष्टि तस्य नाम गृह्णाति ॥ १४ ॥ अपनुत्तो मर्कः सहामुना इति प्रतिप्रस्थाता । यं द्वेष्टि तस्य नाम गृह्णाति ॥ १५ ॥ हस्ताभ्यामपिधाय प्राञ्चावुपनिष्क्रामतः[2] उर्वन्तरिक्षं वीहि इति ॥ १६ ॥ ॥२३॥

अग्रेण हविर्धाने ग्रहौ[3] संधत्तोऽरत्नी वा ब्रह्म संधत्तं तन्मे जिन्वतम् । क्षत्रँ संधत्तं तन्मे जिन्वतम् । इषँ संधत्तं तां मे जिन्वतम् । ऊर्जँ संधत्तं तां मे जिन्वतम् । रयिँ संधत्तं तां मे जिन्वतम् । पुष्टिँ[4] संधत्तं तां मे जिन्वतम्[4] । प्रजाँ संधत्तं तां मे जिन्वतम् । पशून् संधत्तं तान् मे जिन्वतम् इति ॥ १ ॥ उत्तरवेद्यां ग्रहौ सादयित्वा अनाधृष्टासि इत्यङ्गुष्ठाभ्यामुत्तरवेदिमाक्रमेते ॥ २ ॥ व्यपरिष्कन्तावित्थोत्तरवेदिं[5] विपरिक्रामतः ॥ ३ ॥ सुवीराः प्रजाः प्रजनयन् परीहि । शुक्रः शुक्रशोचिषा इति दक्षिणेनाध्वर्युः[6] । सुप्रजाः प्रजाः[7] प्रजनयन् परीहि । मन्थी मन्थिशोचिषा इत्युत्तरेण प्रतिप्रस्थाता ॥ ४ ॥ शुक्रं यजमानोऽन्वारभते इन्द्रेण[8] सयुजो वयँ सासह्याम पृतन्यतः इति ॥ ५ ॥ अग्रेणोत्तरवेदिं ग्रहौ संधत्तोऽरत्नी वा संजग्मानौ दिव आ पृथिव्यायुः । संधत्तं तन्मे जिन्वतम् । प्राणँ संधत्तं तं मे जिन्वतम् । अपानँ संधत्तं तं मे जिन्वतम् । व्यानँ संधत्तं तं मे जिन्वतम् । चक्षुः संधत्तं तन्मे जिन्वतम् । श्रोत्रँ संधत्तं तन्मे जिन्वतम् । मनः संधत्तं तन्मे जिन्वतम् । वाचँ[9] संधत्तं तां[10] मे जिन्वतम् इति ॥ ६ ॥ अथैनावध्वर्युरभिमन्त्रयते आयुः स्थ आयुर्मे धत्तम् । आयुर्यज्ञाय धत्तम् । आयुर्यज्ञपतये धत्तम् । प्राणः[11] स्थः प्राणं मे धत्तम् । प्राणं यज्ञाय धत्तम् । प्राणं यज्ञपतये धत्तम्[11] । चक्षुः स्थश्चक्षुर्मे धत्तम् । चक्षुर्यज्ञाय धत्तम् । चक्षुर्यज्ञपतये धत्तम् । श्रोत्रं स्थः श्रोत्रं मे धत्तम् । श्रोत्रं यज्ञाय धत्तम् । श्रोत्रं यज्ञपतये धत्तम् ॥ ७ ॥ ॥२४॥

---

1. M, °स्ताद्धो°
2. A, प्रांचं उप°; $A_{4,5}$ प्राञ्चावुप°
3. $A_{2-3}$ ग्रहं; B, ग्रहौ
4-4. A, omitted
5. B, व्यपरिषंता°
6. B, दक्षिणाध्वर्युः
7. A, प्रजाः प्रजाः
8. B, इन्द्रेंद्रो
9. A, वाचा
10. A, तं
11-11. $A_{1-5}$ omitted

तौ देवौ शुक्रामन्थिनौ। कल्पयतं दैवीर्विशः। कल्पयतं मानुषीः। इषमूर्जमस्मासु धत्तम्। प्राणान् पशुषु। प्रजां मयि च यजमाने च इति ॥ १ ॥ पुरस्तात्प्रत्यञ्चावुत्तरवेदिमाक्रम्य बहिर्वेद्यप्रोक्षितौ शकलौ निरस्यतस्तेनैव मन्त्रेण ॥ २ ॥ अप उपस्पृश्याग्नौ प्रोक्षितौ प्रास्यतः। शुक्रस्य समिदसि इत्यध्वर्युः। मन्थिनः समिदसि इति प्रतिप्रस्थाता ॥ ३ ॥ पश्चात्प्राञ्चश्चमसाध्वर्यवश्चमसैरवतिष्ठन्ते ॥ ४ ॥ आश्राव्य प्रत्याश्राविते संप्रेष्यति प्रातः प्रातःसावस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान् प्रस्थितान् प्रेष्य मध्यतःकारिणां चमसाध्वर्यवो वषट्कृतानुवषट्कृताञ्जुहुत[1] होत्रकाणां चमसाध्वर्यवः सकृत् सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपावर्तध्वम् इति ॥ ५ ॥ वषट्कृते जुहुति ॥ ६ ॥ शुक्रामन्थिनौ जुहुतः।

स प्रथमः संस्कृतिर्विश्वकर्मा। स प्रथमो मित्रो वरुणो अग्निः।

स प्रथमो बृहस्पतिश्चिकित्वान्। तस्मा इन्द्राय सुतमा जुहोमि स्वाहा॥

इत्यध्वर्युः। तस्मै सूर्याय सुतमा जुहोमि स्वाहा इति प्रतिप्रस्थाता ॥ ७ ॥ सानुवषट्कारावेके शुक्रामन्थिनौ समामनन्ति। अननुवषट्कारावेके। अन्यतरं सानुवषट्कारमेके ॥ ८ ॥ अनुवषट्कृते मध्यतःकारिणां चमसाञ्जुह्वत्यपयच्छन्तीतरान्[2] ॥ ९ ॥ उत्तरतःपुरस्तादङ्गारान्निर्वर्त्य प्रतिप्रस्थाता मन्थिनः संस्रावं जुहोति एष ते रुद्र भागो यं निरयाचथास्तं जुषस्व स्वाहा इति ॥ १० ॥ स्रुवच्छुक्रपात्रमायतने सादयित्वा संप्रेष्यति[3] प्रैतु होतुश्चमसः[4] प्र ब्रह्मणः प्रोद्गातुः प्र यजमानस्य[5] इति ॥ ११ ॥ एते[5] मध्यतःकारिणां चमसा भवन्ति ॥ १२ ॥ ॥२५॥

ततः पुनरभ्युन्नीतैश्चरन्ति ॥ १ ॥ द्रोणकलशादभ्युन्नीता भवन्ति ॥ २ ॥ मैत्रावरुणचमसमादायाध्वर्युरत्याक्रम्याश्राव्याह प्रशास्तर्यज इति। वषट्कृते जुहोति ॥ ३ ॥ एवमनुपूर्वं यो यो यजते तं तं संप्रेष्यति ब्राह्मन् यज। पोतर्यज। नेष्टर्यज। अग्नीद्यज इति ॥ ४ ॥ एतेषामेते चमसा भवन्ति ॥ ५ ॥ सर्वासु सोमाहुतीष्वनुवषट्कार आम्नातो भवति ॥ ६ ॥ अयाड्ग्नीत् इति होत्र आचष्टे ॥ ७ ॥ स भद्रमकर्यो नः सोमं पाययिष्यति इति होता प्रत्याह ॥ ८ ॥ भक्षमभिमन्त्रयते भक्षेहि माविश इति[6] ॥ ९ ॥ प्रतिगृह्णाति अश्विनोस्त्वा बाहुभ्यां सध्यासम् इति ॥ १० ॥ अवेक्षते नृचक्षसं

1. $A_1$ °कृतौ जुहुत
2. $A_{2,3}$ °यछतीं°; $A_{4,5}$ °यच्छतीं°
3. $A_{1-5}$ omitted; स्रुवच्छुक...संप्रेष्यति repeated in $B_1$
4. $A_{2-5}$ होतुश्च°
5–5. A °स्यैते
6. See note to sūtra 11.

त्वा देव सोम सुचक्षा अव ख्येषम् इति ॥ ११ ॥ यत्र क्व च भक्षयेदेवमेवैतान्[1] मन्त्राञ्जपेत् ॥ १२ ॥ अथैतमुपहवमिष्ट्वा प्राणेषूपनियम्य भक्षयति मन्द्राभिभूतिः[2] इति[2] ॥ १३ ॥ ये के चानैन्द्रा अनाराशंसाः प्रातःसवन एष एवैतेषां भक्षमन्त्रो भवति ॥ १४ ॥ वाग्देवी सोमस्य तृप्यतु इत्येके सार्वत्रिकं[3] समामनन्ति ॥ १५ ॥ द्विरैन्द्रवायवं भक्षयति सकृत् सकृदितरौ । चक्षुषोरुपनिग्राहं[4] मैत्रावरुणम् । श्रोत्रयोरुपनिग्राहं सर्वतःपरिहारमाश्विनम् ॥ १६ ॥ ॥२६॥

होता प्रथमो भक्षयत्यथाध्वर्युरथ[5] प्रतिप्रस्थाता ॥ १ ॥ यत्र क्व चैकपात्रे भक्षयेयुर्द्वौ[6] वा बहवो वा वषट्कर्तैव प्रथमो भक्षयेत् ॥ २ ॥ ये के चैककाले[7] भक्षयेयुः[8] सर्व एव मिथः कर्मनामभिः समुपह्वयेरन् ॥ ३ ॥ असावसावुपह्वयस्व इत्यामन्त्रणः । उपहूतः[9] इति प्रतिवचनः[9] ॥ ४ ॥ भक्षयित्वात्मानं प्रत्यभिमृशति हिन्व मे गात्रा हरिवः इति ॥ ५ ॥ यत्र क्व च भक्षयेदेवमेवात्मानं प्रत्यभिमृशेत् ॥ ६ ॥ भक्षयित्वा नानुत्सृजन्त्यावनयनात् ॥ ७ ॥ होतृचमसे द्विदेवत्यसंपातानवनीय पुरोडाशशकलमैन्द्रवायवस्य पात्रेऽवदधाति । पयस्यां मैत्रावरुणस्य[10] । धाना आश्विनस्य ॥ ८ ॥ अथैतानि दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्यां पश्चादक्षं सादयति ॥ ९ ॥ एवं सन्नान्येव भवन्त्या तृतीयसवनात् ॥ १० ॥ निरवदाय होत्र इडामादधाति ॥ ११ ॥ उपह्वयते होतेडाम् ॥ १२ ॥ उपोद्यच्छन्त्यस्मै[11] चमसान्[12] ॥ १३ ॥ होतृचमसं संस्पृष्टं धारयति ॥ १४ ॥ उपहूतामिडां प्राश्नन्ति ये प्रकृतौ ॥ १५ ॥ पुरोडाशशकलमच्छावाकाय निदधाति

1. $A_{1,3}$ °देवैतान्; Rudradatta on ĀpSS XII.24.7: भारद्वाजश्च भक्षेहीत्यादि प्रकृत्याह यत्र क्व च भक्षयेदेवमेवैतान् मन्त्राञ्जपेत्। Gopinātha on SatS VIII.2 (p. 803): भक्षेहीत्यादि प्रकृत्य यत्र क्व च भक्षयेदेवमेवैतान् मन्त्राञ्जपेदिति भारद्वाजोक्तम्।
2-2. $A_{2-3}$ °भूरिति
3. $B_1$ omitted
4. $A_1$ °निग्राह; $A_2$ °दिग्राहान्; $A_{3-5}$ °विग्राहान्
5. $A_{2-3}$ °यतीत्यध्वर्युरथ
6. $A_1$ भक्षयेयुद्वौ; $A_{2-3}$ भयेद्वौ; $B_1$ भक्षयेद् द्वौ वा
7. $B_1$ चैकपाले
8. $A_{2-3}$ भयेयुः
9-9. Emended; $A_1$ उपहूत इति प्रवचनो; $A_{2-3}$,$B_1$ उपहूत इत्यामंत्रिणो; $A_{4,5}$ उपहूत इत्यामंत्रणो
10. Rudradatta on ĀpSS XII.4.11: तथा चाभिक्षां करोतीत्युक्त्वा परस्तादाहतुः बौधायनभारद्वाजौ पयस्या मैत्रावरुणस्य पात्रेऽवदधातीति ।
11. $B_1$ °च्छन्त्य°
12. $A_{1,2,4,5}$ चमसा; $B_1$ चमसाय

॥ १६ ॥ यथाचमसं चमसिनो भक्षयन्ति ॥ १७ ॥ वसुमद्गणस्य सोम देव ते इति मध्यतःकारिणः ॥ १८ ॥ अनैन्द्रैरेवेतरेषां भक्षमन्त्रो व्याख्यातः ॥ १९ ॥ सर्वेषु चमसेषु होता भक्षयति ॥ २० ॥ सर्वेषु पुनरभ्युन्नीतेष्वध्वर्युः मन्द्राभिभूतिः इति ॥ २१ ॥ यत्तरोऽध्वर्युर्जुहुयात्[1] स[2] वषट्कर्तारं प्रतिभक्षयेत् ॥ २२ ॥ भक्षयित्वाप्याययति आ प्यायस्व समेतु ते इति ॥ २३ ॥ यत्र वाप्याययेदेवतै-वाप्याययेत्[3] ॥ २४ ॥ सीदन्ति नाराशंसा[4] आप्याययिता दक्षिणस्य हविर्धानस्या-धस्तादपालम्बे ॥ २५ ॥ ॥२७॥

सीदत्यच्छावाकोऽग्रेण स्वं धिष्ण्यं बहिः सदसः ॥ १ ॥ तस्मै पुरोडाशशकलमादधदाह[5] अच्छावाक वदस्व यत्ते वाद्यम् इति ॥ २ ॥ यत्राभिजानाति उपो अस्मान् ब्राह्मणान्[6] ब्राह्मणा ह्वयध्वम् इति तत आह अच्छावाको वा अयमुपहवमिच्छते तँ होतरुपह्वयस्व इति ॥ ३ ॥ तमृचा होतोपह्वयते ॥ ४ ॥ यत्राभिजानाति उत नो गाव उपहूता[7] उपहूतः इति तत आह उन्नीयमानायानुब्रूहि इति ॥ ५ ॥ उन्नीत-मच्छावाकचमसमादायात्याक्रम्याश्राव्याह अच्छावाक यज इति ॥ ६ ॥ वषट्कृते जुहोति ॥ ७ ॥ अच्छावाकाय भक्षं प्रयच्छति ॥ ८ ॥ नास्मिन्नच्छावाक[8] उपहव-मिच्छते[8] ॥ ९ ॥ नैतेन संभक्षयेत् ॥ १० ॥ यद्यस्मिन्नुपहवमिच्छेत भक्षय इत्येनं ब्रूयात् ॥ ११ ॥ भक्षितमच्छावाकचमसमाप्यायितमन्तरेण नेष्टुश्चाग्नीध्रस्य च चमसौ सादयति ॥ १२ ॥ अत्र सवनीयानां पिष्टलेपफलीकरणहोमौ जुहोति ॥ १३ ॥ कपालानि विमुञ्चति ॥ १४ ॥ अत्रैके वाजिनचर्यां समामनन्ति ॥ १५ ॥ ॥२८॥

तत ऋतुग्रहैश्चरतः ॥ १ ॥ दक्षिणमृतुपात्रमध्वर्युरादत्त[9] उत्तरं प्रति-प्रस्थाता ॥ २ ॥ सह प्रथमौ[10] गृहीतः[10] सहोत्तमौ ॥ ३ ॥ गृह्णात्यध्वर्युः[11] उपयाम-गृहीतोऽसि[11] मधुश्च इति । उपयामगृहीतोऽसि माधवश्च इति प्रतिप्रस्थाता ॥ ४ ॥

---

1. $A_{2-5}$,$B_1$ यतोऽध्वर्यु°
2. $A_{2-5}$ omitted
3. $A_1$ °देतयैवाप्यायेत्; $A_{2-5}$ °तद्देवाप्याययेत्
4. A नाराशंसना; $B_1$ नाराशंसास्ता
5. $B_1$ °दधाति
6. $A_{2-5}$ omitted
7. $A_1$ omitted
8-8. $A_{2-5}$ °छावाकमुप°
9. $A_1$ °मृतपात्र°; $A_{2-5}$ दक्षिण ऋतुपात्र°; sūtra 2 cited verbatim by Vāñcheśvara (50b) on SatS VIII.2.
10-10. $A_1$ प्रथमो गृहीत; $A_{2-5}$ प्रथमौ गृह्येते
11-11. $A_{2-5}$ गृह्णात्युप°

उपनिष्क्रम्याध्वर्युरत्याक्रम्याश्राव्याह ऋतुना प्रेष्य इति ॥ ५ ॥ वषट्कृते जुहोति ॥ ६ ॥ आवर्ततेऽध्वर्युः ॥ ७ ॥ उपनिष्क्रम्य प्रतिप्रस्थातात्याक्रम्याश्राव्याह ऋतुना प्रेष्य इति ॥ ८ ॥ वषट्कृते जुहोति[1] ॥ ९ ॥ नान्योऽन्यमनुप्रपद्येत। द्वार एव व्यतीतः ॥ १० ॥ प्रसिद्धमेवाध्वर्युर्दक्षिणेन प्रपद्यते। प्रसिद्धं प्रतिप्रस्थातोत्तरेण ॥ ११ ॥ प्रत्यञ्चं यन्तमध्वर्युं प्रतिप्रस्थाता ग्रहेण परिप्रगृह्णाति[2]। प्राञ्चं यन्तं पात्रेण ॥ १२ ॥ एवमेवोत्तरैरुत्तरैर्मन्त्रैर्गृह्णीतः ॥ १३ ॥ पूर्वेणपूर्वेणाध्वर्युरुत्तरेणोत्तरेण प्रतिप्रस्थाता ॥ १४ ॥ अध्वर्युरेव त्रयोदशं गृह्णाति उपयामगृहीतोऽसि सँसर्पोऽस्यँहस्पत्याय त्वा इति ॥ १५ ॥ द्वादश गृह्णन्त इति विज्ञायते। त्रयोदशेत्येकेषाम्। चतुर्दशेत्येकेषाम्[3] ॥ १६ ॥ सह प्रथमौ जुहुतो यदि त्रयोदश गृह्णन्ते ॥ १७ ॥ सहप्रथमौ सहोत्तमौ यदि चतुर्दश ॥ १८ ॥ ॥२९॥

पूर्वेषाँ शेष उत्तरानभिगृह्णीतः ॥ १ ॥ असन्ना[4] हूयन्ते ॥ २ ॥ ऋतुना प्रेष्य इति त्रिरध्वर्युराह। त्रिः प्रतिप्रस्थाता ॥ ३ ॥ पर्यावृत्य पात्रम् ऋतुभिः प्रेष्य इति द्विरध्वर्युराह। द्विः प्रतिप्रस्थाता ॥ ४ ॥ पर्यावृत्य पात्रम् ऋतुना प्रेष्य इति सकृदध्वर्युराह। सकृत् प्रतिप्रस्थाता ॥ ५ ॥ यत्राभिजानाति अध्वर्यू यजतम् इति तदध्वर्युराह होतरेतद्यज इति ॥ ६ ॥ यत्राभिजानाति गृहपते यज इति तद्यजमान आह होतरेतद्यज इति[5] ॥ ७ ॥ अननुवषट्कारा ऋतुग्रहा भवन्ति ॥ ८ ॥ अध्वर्युपात्रे प्रतिप्रस्थाता सँस्रावमानयति। अध्वर्युः प्रतिप्रस्थातुः पात्रे ॥ ९ ॥ प्रतिप्रस्थाता[6] तेन[6] भक्षमाहरति ॥ १० ॥ एवमनुपूर्वं यो यो यजति तं तं प्रतिभक्षयतः मन्द्राभिभूतिः इति। होतारमध्वर्युः। पोतारं प्रतिप्रस्थाता। नेष्टारमध्वर्युः। आग्नीध्रं[7] प्रतिप्रस्थाता। ब्राह्मणाच्छँसिनमध्वर्युः। मैत्रावरुणं प्रतिप्रस्थाता। होतारमध्वर्युः। पोतारं प्रतिप्रस्थाता। नेष्टारमध्वर्युः[7]। अच्छावाकं प्रतिप्रस्थाता। होतारमेवाध्वर्युः। होतारं प्रतिप्रस्थाता ॥ ११ ॥ अत्रैव पात्रं निधायाध्वर्युः स्वेन पात्रेण ॥ १२ ॥ ॥३०॥

---

1. $B_1$ repeats sūtras 7–9.
2. $A_{2-5}$,$B_1$ परिमिति°
3. $A_{2-5}$,$B_1$ omitted
4. $B_1$ धन्ना
5. Sūtra 7 cited verbatim by Vāñcheśvara (51a) on SatS VIII.2.
6–6. $A_{2-5}$ प्रतिप्रस्थातेन
7–7. $B_1$ omitted; sūtra 11 cited verbatim by Vāñcheśvara (51b) on SatS VIII.2.

ससँस्रावेणैन्द्राग्नं[1] गृह्णाति इन्द्राग्नी आगतँ सुतम् इति ॥ १ ॥ शस्त्रमत्र[2] भवति ॥ २ ॥ अग्रेण होतारमुपविश्याध्वर्युः शस्त्रमुपाकरोति इडा देवहूः इत्यनुवाकशेषेण[3] ॥ ३ ॥ एतेनैव सर्वाणि शस्त्राण्युपाकरोति ॥ ४ ॥ अथैनं पराङ्मुखमूर्ध्वज्ञुमासीनमभ्याह्वयते होता ॥ ५ ॥ शोंसा[4] मोद इव इति प्रदक्षिणमावर्तते ॥ ६ ॥ ऋतुपात्रमारभ्योर्ध्वस्तिष्ठन् सदोबिले प्रतिगृणाति प्रह्वो वा ॥ ७ ॥ ओथा[5] मोद इव इत्यर्धर्चेषु ॥ ८ ॥ ओमोथा[6] मोद इव इति प्रणवेषु ॥ ९ ॥ नाभिप्रतिगृणीयात् । नार्धर्चाल्लुप्यते ॥ १० ॥ यत्र यत्र होता[7] विरमेत् ओमोथा[7] मोद इव इत्येव ब्रूयात् ॥ ११ ॥ उभयं व्याहावे करोति शोंसा मोद इवोथा मोद इव इति ॥ १२ ॥ परिधानीयाया उत्तमेन प्रणवेन सह प्रणौति ॥ १३ ॥ एवमेव सर्वाणि शस्त्राणि प्रतिगृणात्यन्यत्र पात्रारम्भणात् ॥ १४ ॥ शस्त्रमनुमन्त्रयते, शस्त्रस्य शस्त्रमसि इति ॥ १५ ॥ एतेनैव सर्वाणि शस्त्राण्यनुमन्त्रयते ॥ १६ ॥ शस्त्रं प्रतिगीर्याद्दत्ते ग्रहमध्वर्युः । आददते नाराशँसान् ॥ १७ ॥ अत्याक्रम्याश्राव्याह उक्थशा यज सोमस्य इति ॥ १८ ॥ वषट्कृते जुहोति[8] ॥ १९ ॥ ॥२१॥

वषट्कारं चानुवषट्कारं चानु प्रकम्पयन्ति नाराशँसान् ॥ १ ॥ ऐन्द्रैरेव ग्रहभक्षमन्त्रो[9] व्याख्यातः ॥ २ ॥ नाराशँसान् भक्षयन्ति[10] नराशँसपीतस्य सोम देव ते इति[11] ॥ ३ ॥ एवमेवोत्तरेणोत्तरेण नाराशँसेन सवनेसवने नाराशँसान्[10] भक्ष-

1. $A_1$ ससंस्रा°
2. $A_{1-5}$ शस्त्रमस्तोत्रं; $B_1$ शस्त्रमत्रं; sūtras 30.12 to 31.2 cited by Vāñcheśvara (52a) on SatS VIII with शस्त्रं स्तोत्रं for शस्त्रमत्र.
3. Sūtra 3 partially cited by Vāñcheśvara (52a) on SatS VIII.2.
4. $A_1$ सोंसा; $A_4$ शौंसा
5. $A_1$ षोठा; $A_{2-5}$ वोथा; $B_1$ वोढा
6. $A_{1,4,5}$ °वो; $A_3$ वोमोथा
7–7. Thus $B_1$; $A_1$ होत वि°; $A_{2-5}$ होता विदोमोथा; Rudradatta on ĀpŚS XII.27.14: तथा च सत्याषाढभारद्वाजौ यत्र यत्र होता विरमेत् ओथा मोद इवेत्येव ब्रूयादिति ।
8. Cited verbatim by Vāñcheśvara (53a) on SatS VIII.2.
9. $A_{2-5}$,$B_1$ गृहभक्ष°
10–10. $A_{1-5}$ omitted
11. With reference to the formula in this sūtra Rudradatta on ĀpŚS XII.24.7 and Yajñeśvara Dīkṣita in his commentary *Agniṣṭomacandrikā* on BaudhŚS VII.4 say: तथा पेठतुरेव मन्त्रान् बौधायनभारद्वाजौ । Similarly Gopinātha on SatS VIII.2 (p. 805): एवमेव पेठतुर्मन्त्रान् बौधायनभारद्वाजौ ।

यन्ति ॥ ४ ॥ असर्वान्[1] भक्षयित्वाप्याययन्ति ॥ ५ ॥ व्याख्यातमाप्यायनँ सादनम् ॥ ६ ॥ वैश्वदेवँ शुक्रपात्रेण गृह्णाति ओमासश्चर्षणीधृतः इत्येतेनानुवाकेन ॥ ७ ॥ स्तुतशस्त्रे अत्र भवतः ॥ ८ ॥ शस्त्रं प्रतिगीर्यादत्ते ग्रहमध्वर्युः । आददते नाराशँसान् ॥ ९ ॥ अत्याक्रम्याश्राव्याह उक्थशा यज सोमस्य इति ॥ १० ॥ वषट्कृते जुहोति ॥ ११ ॥ व्याख्यातमनुप्रकम्पनम्[2] ॥ १२ ॥ व्याख्यातो ग्रहस्य भक्षमन्त्रः ॥ १३ ॥ व्याख्यातो नाराशँसानाम् ॥ १४ ॥ सर्वान् भक्षयन्ति । नाप्याययन्ति[3] । मार्जयन्ते ॥ १५ ॥ सर्वभक्षा एवात ऊर्ध्वं प्रातःसवने चमसा भवन्ति ॥ १६ ॥ तत उक्थ्यं विगृह्णाति ॥ १७ ॥ उक्थ्यस्थाल्या उक्थ्यपात्रे तृतीयं गृह्णाति उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा इति ॥ १८ ॥ अथैनँ सादयति एष ते योनिर्मित्रावरुणाभ्यां त्वा इति ॥ १९ ॥ पुनर्हविरसि इति स्थालीं प्रत्यभिमृशति ॥ २० ॥ मैत्रावरुणचमसमुख्याँश्चमसानुन्नयति ॥ २१ ॥ स्तुतशस्त्रे अत्र भवतः ॥ २२ ॥ शस्त्रं प्रतिगीर्यादत्ते ग्रहमध्वर्युः[4] । आददते चमसाँश्चमसाध्वर्यवः ॥ २३ ॥ अत्याक्रम्याश्राव्याह उक्थशा यज सोमानाम् इति ॥ २४ ॥ वषट्कृते जुहोति[5] ॥ २५ ॥ मैत्रावरुणचमसेऽध्वर्युः सँस्रावमवनयति देवेभ्यस्त्वा देवायुवं पृणज्मि[6] यज्ञस्यायुषे इति ॥ २६ ॥ ॥३२॥

यदि कामयेताध्वर्युरात्मानं यज्ञयशसेनार्पयेयमित्येतद्यथासमाम्नातम् ॥ १ ॥ यथाचमसं चमसिनो भक्षयन्ति मन्द्राभिभूतिः इति ॥ २ ॥ एवं प्रतिप्रस्थातोत्तराभ्यामुक्थ्यविग्रहाभ्यामभक्षयन्[7] प्रचरति ॥ ३ ॥ यो यो मुख्यश्चमसस्तस्मिँस्तस्मिन्[8] सँस्रावमवनयति ॥ ४ ॥ ब्राह्मणाच्छँसिचमसमुख्यो द्वितीयः । अच्छावाकचमसमुख्यस्तृतीयः[9] ॥ ५ ॥ एतेन शस्त्रयाज्यानामानुपूर्व्यं व्याख्यातम् ॥ ६ ॥ एवाम्नाना । इन्द्राय त्वा इति ब्राह्मणाच्छँसिनो ग्रहणसादनौ भवतः । ऐन्द्रो भक्षमन्त्रः । इन्द्राग्निभ्यां त्वा इत्यच्छावाकस्य ग्रहणसादनौ भवतः । मन्द्राभिभूतिः

---

1. $B_1$ सर्वान्
2. $A_{3-5}$ व्याख्यातं प्रकंपनं
3. $A_{3-5}$ omitted
4. $A_1$,$B_1$ ग्रहमध्वर्युः; $A_{3-5}$ ग्रहं
5. $A_{3-5}$ जुहोति
6. Thus $A_{4,5}$; $A_1$,$B_1$ प्रणज्मि; $A_2$ पूर्णं युनज्मि; $A_3$ पूर्णं युनज्मि
7. $A_1$,$B_1$ °भ्यां भक्षयन्
8. $A_{2-5}$ मुख्यचमसस्तस्मिन्; $B_1$ मुख्यचमसस्तस्मिन्
9. तृतीयः repeated in $A_1$

इति भक्षमन्त्रः ॥ ७ ॥ उत्तममुक्थ्यविग्रहं गृहीत्वा न स्थालीं प्रत्यभिमृशति ॥ ८ ॥ न्युप्योक्थ्यस्थालीं षोडशिनं गृह्णाति आ तिष्ठ वृत्रहन् रथम् इत्येतेनानुवाकेनोत्तरेण वा ॥ ९ ॥ अपि वैनं धाराग्रहाणामुत्तमं गृह्णीयात् ॥ १० ॥ एवमेवोत्तरेणानुवाकेन सवनेसवने षोडशिनमभिगृह्णाति ॥ ११ ॥ षोडशिनं गृहीत्वा संप्रेष्यति उत्तमौंध्वसानुन्नय द्रोणकलशं पूतभृत्यानय सर्वं राजानं चमसेषून्नय दशाभिः कलशौ मृड्ढ्वा[1] न्युब्ज इति ॥ १२ ॥ उक्थशा इत्याह प्रातःसवनं प्रतिगीर्य ॥ १३ ॥ अग्निः प्रातःसवने पात्वस्मान् इत्याहुतिं हुत्वा संप्रेष्यति प्रशास्तः प्रब्रूहि इति ॥ १४ ॥ सर्पत इत्याह प्रशास्ता ॥ १५ ॥ संतिष्ठते प्रातःसवनम् ॥ १६ ॥ ॥३३[3]॥

॥ इति[2] त्रयोदशः प्रश्नः ॥

---

1. $A_1$,$B_1$ दृष्ट्वा
2. $A_{2-5}$ add तृतीयः
3. Thus $B_1$

## अथ चतुर्दशः प्रश्नः

माध्यंदिनं सवनं व्याख्यास्यामः ॥ १ ॥ तस्य प्रातःसवनेन कल्पो व्याख्यातः ॥ २ ॥ विकाराननुक्रमिष्यामः ॥ ३ ॥ ततः संप्रेष्यति प्रतिप्रस्थातः सवनीयान्निर्वप इति ॥ ४ ॥ वसतीवरीभिर्होतृचमसं पूरयित्वा निग्राभ्यासु यजमानं वाचयति यथा प्रातःसवने ॥ ५ ॥ अधिषवणचर्मणि सर्वं राजानं न्युप्य ग्रावस्तुत उष्णीषं प्रयच्छति ॥ ६ ॥ असंप्रेषितो ग्रावस्तोत्रीया[1] अन्वाह ॥ ७ ॥ महाभिषवमभिषुण्वन्ति यथा प्रातःसवने ॥ ८ ॥ एतावन्नाना। इहाभ्य इह इत्यभिषुण्वन्ति ॥ ९ ॥ उत्तमस्याभिषवस्य मध्यमे पर्याये बृहद् इत्यभिषुण्वन्ति ॥ १० ॥ अथोत्तमं पर्यायं राथन्तर इवाभिषुण्वन्ति इहाभ्य[2] इह[2] इहाभ्य[3] इह इति ॥ ११ ॥ उत्तमे[3] पर्यायेऽभिषुतो राजा भवत्यसंभृतोऽथ प्रतिप्रस्थाता ग्राव्णोऽनुमोदते देवा ग्रावाण[4] इन्दुरिन्द्र इत्यवादिषुः। ऐन्द्रमचुच्यवुः। परमस्याः परावतः। आस्मात्सधस्यात्[5]। ओरोरन्तरिक्षात्[5]। आ सुभूतमसुषवुः। ब्रह्मवर्चसं[6] म आ सुषवुः[6]। समरे रक्षाँस्यवधिषुः। अपहतं ब्रह्मज्यस्य इति ॥ १२ ॥ समानमा ग्रहकालात् ॥ १३ ॥ शुक्रामन्थिनावेवाग्रे गृह्णाति ॥ १४ ॥ आग्रयणं तिसृभ्यो धाराभ्यो[7] गृह्णाति ॥ १५ ॥ य एवाग्रयणस्थाल्याँ राजा तमन्यस्मिन् पात्रे पर्यासिच्य द्वितीयां धारां कुरुते। उदचनात्तृतीयाम् ॥ १६ ॥ उक्थ्यस्याप्तोक्थ्यं गृहीत्वा ॥ १७ ॥ ॥१॥

ऋतुपात्राभ्यां मरुत्वतीयौ गृह्णाति। अध्वर्युपात्रेण पूर्वं मरुत्वन्तं वृषभं वावृधानम् इति। प्रतिप्रस्थात्रेणोत्तरम् इन्द्र मरुत्व इह पाहि सोमम् इति ॥ १ ॥ द्रोणकलशे राजानमतिपावयति यावन्तं माध्यंदिनाय सवनायाप्तं मन्यते ॥ २ ॥ समानमा पवमानात् ॥ ३ ॥ प्रस्तपश्चः ब्रह्मा माध्यंदिनं पवमानं सर्पन्ति त्रैष्टुभः पन्था रुद्रा देवता पृकेणापरिपरेण पथा स्वस्ति रुद्रानशीय इति। वागग्रेगा अग्र एतु इति च ॥ ४ ॥ उत्तरेण हविर्धाने दक्षिणेन मार्जालीयं परीत्य पूर्वया द्वारा सदः प्रविश्याग्रेण होत्रीयमध्वर्युरवतिष्ठते। अग्रेण प्रशास्त्रीयमतिक्रम्येतरे ॥ ५ ॥ माध्यंदिनेन पवमानेन स्तुवते ॥ ६ ॥ स्तूयमाने यजमानोऽन्वारोहं जपति सुपर्णोऽसि

---

1. $A_1$ °स्तोत्रिया; $B_1$ ग्रावस्तुत्या
2-2. $A_2$ इहभ्य इहा; $A_{2-3}$ इहइभ्य इहा; $B_1$ इहान्त इहे
3-3. $B_1$ omitted
4. $A_1$ ग्रावाणं
5-5. Thus $B_1$; $A_1$ आस्मान् सधस्ता°; $A_{2-3}$ आस्मात्सोधस्था°
6-6. $B_1$ omitted
7. $A_1$ omitted

त्रिष्टुप्छन्दाः इति ॥ ७ ॥ समानमा संप्रैषात् ॥ ८ ॥ नात्र पशुं प्रचोदयति । न राजानमुपतिष्ठते । प्रतिप्रस्थातर्दधिघर्मेणानूदेहि इति संप्रैषान्तं नमति ॥ ९ ॥ समानमा सवनीयानां निर्वपणात् ॥ १० ॥ सवनीयान्निर्वप्स्यन्नाग्नेयं पशुपुरोडाशं निर्वपत्यग्निष्टोमे । ऐन्द्राग्नमुक्थ्ये द्वितीयम् । ऐन्द्रं षोडशिनि तृतीयम् । सारस्वतमतिरात्रे चतुर्थम् ॥ ११ ॥ ततः सवनीयान्निर्वपति ॥ १२ ॥ एतावन्नाना । नोत्तरयोः सवनयोः पयस्या भवति ॥ १३ ॥ व्याख्यातं सवनीयानां निर्वपणं बर्हिस्तरणमलंकरणं ग्रहावकाशोपस्थानं सर्पणमिति ॥ १४ ॥ दधिघर्मेण चरति ॥ १५ ॥ औदुम्बर्यां स्रुच्यामाग्नीध्रीये[1] दधि गृह्णाति यावती द्यावापृथिवी महित्वा इति ॥ १६ ॥ ॥२॥

अथैतदाग्नीध्रेऽधिश्रयति वाक् च त्वा मनश्च श्रीणीताम् । प्राणश्च[2] त्वापानश्च श्रीणीताम्[2] । चक्षुश्च त्वा श्रोत्रं च श्रीणीताम् । दक्षश्च त्वा बलं च श्रीणीताम् । ओजश्च त्वा सहश्च श्रीणीताम् । आयुश्च त्वा जरा च श्रीणीताम् । आत्मा च त्वा तनूश्च श्रीणीताम् । शृतोऽसि शृतंकृतः । शृताय त्वा शृतेभ्यस्त्वा इति ॥ १ ॥ ततः संप्रेष्यति होतर्वदस्व यत्ते वाद्यम् इति ॥ २ ॥ यत्राभिजानाति यदि श्रातो जुहोतन यद्यश्रातो ममत्तन इति तत आह श्रातं[3] हविः इति ॥ ३ ॥ अत्याक्रम्याश्राव्याह दधिघर्मस्य यज इति ॥ ४ ॥ वषट्कृते जुहोति

यमिन्द्रमाहुर्वरुणं यमाहुः । यं मित्रमाहुर्यमु सत्यमाहुः ।

यो देवानां देवतमस्तपोजाः । तस्मै त्वा तेभ्यस्त्वा स्वाहा ॥

इति ॥ ५ ॥ अनुवषट्कृते द्वितीयं हुत्वावशिनष्टि ॥ ६ ॥ तं ते भक्षयन्ति ये प्रवर्ग्यम् । तस्यारण्येऽनुवाक्ये भक्षमन्त्रः ॥ ७ ॥ नाप्रवर्ग्ये दधिघर्मो विद्यत इत्यपरम् ॥ ८ ॥ ततः सवनीयानासादयति ॥ ९ ॥ पशुपुरोडाशेन प्रचर्य सवनीयैः प्रचरति ॥ १० ॥ एतावन्नाना । माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशानामनुब्रूहि ॥ माध्यंदिनस्य सवनस्येन्द्राय[4] पुरोडाशान् प्रस्थितान् प्रेष्य इति संप्रेष्यति ॥ ११ ॥ सर्वेषां सपशुपुरोडाशानां समानः स्विष्टकृत् प्रैषवान् समानेडा ॥ १२ ॥ न सवनीयस्य पशुपुरोडाशो विद्यत इत्यपरम् ॥ १३ ॥ आग्रयणीयं पूतभृत्यवनयति ॥ १४ ॥ समानमा संप्रैषात् ॥ १५ ॥ एतावन्नाना । माध्यंदिनस्य सवनस्य निष्केवल्यस्य भागस्य

---

1. A, °माग्नीध्रे; B, स्रुच्यामीध्रे
2-2. A, omitted
3. B, श्रतः
4. A, ०० सवनस्य

शुक्रवतो मन्थिवतो मधुश्चुतः इति संप्रैषादिः ॥ १६ ॥ समानमा पुनरभ्युन्नीतेभ्यः[1] ॥ १७ ॥ पूर्व आग्नीध्रादच्छावाकः संवलति ॥ १८ ॥ नात्र पुरोडाशशकलमच्छावाकाय निदधाति ॥ १९ ॥ यथाचमसं चमसिनो भक्षयन्ति ॥ २० ॥ हृद्वक्रणस्य सोम देव ते इत्येष एव माध्यंदिने सवने भक्षमन्त्रो भवत्यन्यत्र नाराशँसेभ्यः ॥ २१ ॥ असर्वान् भक्षयित्वाप्याययन्ति ॥ २२ ॥ व्याख्यातमाप्यायनँ सादनम् ॥ २३ ॥ ॥३॥

सन्नेषु नाराशँसेषूत्तरेण हविर्धान उत्तरेणाग्नीध्रीयमुत्तरेण[2] सदः परीत्य पूर्वया द्वारा प्राग्वँशं प्रविश्यापरेण शालामुखीयमुपविश्य जुह्वां चतुर्गृहीतमाज्यं गृहीत्वा दर्भेण हिरण्यं निष्टर्क्यं बद्ध्वावदधाति ॥ १ ॥ अमात्यानाँ सँह्वानँ समन्वारम्भणँ संप्रच्छादनमिति वैसर्जनेषु व्याख्यातम् ॥ २ ॥ वाससोऽन्तँ स्रुग्दण्ड उपनियम्य[3] जुहोति दाक्षिणानि[4] ॥ ३ ॥ उदु त्यम् ॥ चित्रम् इति द्वाभ्यां गार्हपत्ये जुहोति ॥ ४ ॥ अपरं चतुर्गृहीतं गृहीत्वा ॥ ५ ॥ दिवं गच्छ सुवः पत इति हिरण्यँ हुत्वोद्गृह्णाति ॥ ६ ॥ अथैना[5] दक्षिणा दक्षिणेन वेदिमवस्थिता भवन्ति गवां द्वादशशतं तिला माषा ओदनो मन्थोऽजोऽविर्वासो हिरण्यमनो रथोऽश्वो हस्ती पुरुष इति। एकविँशतिरित्येकेषाम्। चतुर्विँशतिरित्येकेषाम्। अपरिमिता[6] इत्येकेषाम्। सर्ववेदसमित्येकेषाम्[7] ॥ ७ ॥ हिरण्यं चाज्यं च धारयमाणो यजमानो दक्षिणा अभ्येति[8] रूपेण वो रूपमभ्यैमि वयसा वयः इति ॥ ८ ॥ तुथो वो विश्ववेदा वि भजतु इति मध्यमवक्रामति[9] ॥ ९ ॥ अथैनाः[9] कृष्णाजिनेन व्युत्त्रास्य विभज्य वाविभज्य[10] वात्यानयत्यग्रेण[11] प्राग्वँशं जघनेन सदोऽन्तरेण नेष्टुश्चाग्नीध्रस्य[12] च[12] ॥ १० ॥ ता उदीचीरन्तरेण चात्वालं चाग्नीध्रं चोत्सृजति ॥ ११ ॥ अत्यायतीप्वा-

1. A₂-₅ पुनरन्नीतेभ्यः
2. A₂ °मीध्रमु°; A₃-₅ °ध्रीम्रमु°
3. B₁ °नियत्य
4. A₁ दक्षिणानि
5. A₂-₅,B₁ अथैता
6. Emended; A,B₁ °मित
7. B₁ omitted
8. A₁ अभ्येति
9-9. A₁ मध्यमवत्यथैनाः
10. B₁ omitted
11. A₁ वात्यैनात्यानय°
12-12. A₂ नेष्टु'''स्य च; A₃ नेष्टुस्य च; A₄,₅ नेष्टुस्य

हवनीयमभिमन्त्रयते एतत्ते अग्ने[1] राध एति सोमच्युतम् इति प्रतिपद्य यज्ञस्य पथा सुविता नयन्तीः इत्यन्तेन ॥ १२ ॥ ॥४॥

आग्नीध्र एतदाज्यं जुहोति अग्ने नय सुपथा राये अस्मान् इत्येतया ॥ १ ॥ वनेषु व्यन्तरिक्षं ततान इति वारुण्या द्वितीयया जुहुयाद्यद्यनो[2] रथोऽश्वो वासोऽपि वा दीयेत[3] ॥ २ ॥ प्राजापत्यया तृतीयया जुहुयाद्यदि हस्तिनं पुरुषं वा दास्यन् स्यात् ॥ ३ ॥ आत्रेयाय प्रथमाय हिरण्यं ददाति मध्यमायेत्येकेषामुत्तमायेत्येकेषां[4] ब्राह्मणमद्य राध्यासमृषिमार्षेयम् इति ॥ ४ ॥ यद्यात्रेयं न विन्देद्य आर्षेयः सँहितस्तस्मै दद्यात् ॥ ५ ॥ आग्नीध्रायाग्र[5] उपबर्हणं सार्वसूत्रं ददात्यजं च ॥ ६ ॥ ततो ब्रह्मणे यथान्यां दक्षिणां नातिध्यायेदेवं दद्यात् ॥ ७ ॥ तत उद्गातृभ्यो होतृभ्यः ॥ ८ ॥ 'अध्वर्युभ्यस्तु हविर्धाने आसीनेभ्यः ॥ ९ ॥ अन्ततः प्रतिहर्त्रे ददाति ॥ १० ॥ अर्धमर्धिभ्यस्तृतीयं तृतीयिभ्यः पादं पादिभ्यः। ते द्वादशाहे व्याख्याताः ॥ ११ ॥ ऋत्विग्भ्यो दत्त्वा प्रसर्पकेभ्यो ददाति ॥ १२ ॥ एते दक्षिणेन पृष्ठ्यामन्तः[6] सदस्युपविष्टा भवन्ति ॥ १३ ॥ नानार्षेयाय विदुषे ददाति। नार्षेयायाविदुषे। आर्षेयायैव विदुषे ददाति ॥ १४ ॥ न कण्वकश्यपेभ्यो न ज्ञातये नर्त्विजे प्रसृप्ताय न भीतो न याचमानाय। यां याचमानाय ददात्येनँ सा दक्षिणा गच्छतीति विज्ञायते ॥ १५ ॥ ब्राह्मणाय श्रोत्रियायान्तर्वेद्यासीनाय दक्षिणां ददाति ॥ १६ ॥ अप्यब्राह्मणाय विद्याविदे देयम्[7] ॥ १७ ॥ ॥५॥

यामन्यो दीयमानां न कामयेत यं द्विष्यात्तस्मै तां दक्षिणां दद्यादन्येन धनेन सह ॥ १ ॥ कुत एतेभ्यो दद्यात्। एतस्मादेव द्वादशाच्छतादित्येकम्। अन्यत इत्यपरम् ॥ २ ॥ वि सुवः पश्य व्यन्तरिक्षम् इति सदः प्रेक्षेत[8] ॥ ३ ॥ संनीता[9] दक्षिणा अनुमन्त्रयते अस्मद्राता देवत्रा गच्छत इत्यनुवाकशेषेण ॥ ४ ॥

---

1. $A_1$ अग्नये
2. B, जुहोति यद्यनो
3. $A_{2-5}$ दीयते
4. $A_1$ मध्यमायेत्येकेषां
5. B, आग्नीध्रीयेभ्य; with reference to sūtras 4 and 6 Rudradatta on ĀpŚS VIII.6.12 says: तत्राग्नीध्रात्रेययोरात्रेयः प्रथम इष्टो बौधायनभारद्वाजाभ्याम्। Vāñcheśvara (32b) on SatS X.4: प्रथममात्रेयाय दत्त्वाग्नीध्रे दद्यादिति बौधायनभारद्वाजौ।
6. Emended; $A_1$ पृष्ठ्यामंततः; $A_{2-5}$,$B_1$ पृष्ठ्यमन्ततः; cf ĀpŚS XIII.6.15
7. $A_{2-5}$ यं
8. Rudradatta on ĀpŚS XIII.6.14: सदः प्रेक्षत इत्येव भारद्वाजः।
9. Emended; $A_1$ संम्मीता; $A_{2-5}$ समनीता

आग्नीध्रे वैश्वकर्मणानि जुहोति यज्ञपतिमृषय एनसाहुः[1] इति[1] पञ्च ॥ ५ ॥ चात्वाले कृष्णविषाणां प्रास्यति

हरिणस्य रघुष्यतोऽधि शीर्षणि[2] भेषजम्।
सुक्षेत्रियं[3] विषाणया विषूचीनमनीनशत् ॥
अनु त्वा हरिणो मृगः पद्भिश्चतुर्भिरक्रमीत्।
विषाणे[4] विष्येतं ग्रन्थिं यदस्य गुल्फिदं[5] हृदि मनो यदस्य गुल्फिदम्[6] ॥

इत्येताभ्याम् ॥ ६ ॥ ततः संप्रेष्यति इन्द्राय मरुत्वतेऽनुब्रूहि इति ॥ ७ ॥ यदा मरुत्वतेऽनूक्तं[7] भवत्यथ न दीयत आनुबन्ध्यावपाया[8] होमात् ॥ ८ ॥ पूर्वगृहीतमध्वर्युरादत्त उत्तरं प्रतिप्रस्थाता ॥ ९ ॥ अत्याक्रम्याश्राव्याह इन्द्राय मरुत्वते प्रेष्य इति ॥ १० ॥ वषट्कृते जुहुतः ॥ ११ ॥ सानुवषट्कारावेके[9] मरुत्वतीयौ समामनन्ति । अननुवषट्कारावेके । उत्तरं सानुवषट्कारमेके ॥ १२ ॥ व्यवनयेते यथर्तुग्रहेषु ॥ १३ ॥ प्रतिप्रस्थानेन भक्षयन्ति ॥ १४ ॥ अत्रैव पात्रं निधायाध्वर्युः स्वेन पात्रेण सँस्रावेणोत्तमं मरुत्वतीयं गृह्णाति मरुत्वाँ इन्द्र वृषभो रणाय इति ॥ १५ ॥ शस्त्रमत्र[10] भवति ॥ १६ ॥ ऋतुपात्रमारभ्य प्रतिगृणाति ॥ १७ ॥ शस्त्रं प्रतिगीर्यादत्ते ग्रहमध्वर्युः । आददते नाराशँसान् ॥ १८ ॥ अत्याक्रम्याश्राव्याह उक्थशा यज सोमस्य इति ॥ १९ ॥ वषट्कृते जुहोति ॥ २० ॥ व्याख्यातमनुप्रकम्पनम्[11] ॥ २१ ॥ व्याख्यातो ग्रहस्य भक्षमन्त्रः ॥ २२ ॥ व्याख्यातो नाराशँसानाम् ॥ २३ ॥ असर्वान् भक्षयित्वाप्याययन्ति ॥ २४ ॥ व्याख्यातमाप्यायनँ सादनम् ॥ २५ ॥ ॥६॥

माहेन्द्रं[12] शुक्रपात्रेण गृह्णाति महाँ इन्द्रो य ओजसा इत्येतेनानुवाकेनोत्तरेण

---

1-1. $A_1$ एन एवाहुतिरिति; Rudradatta on ApSS XIII.8.1: तत्र यज्ञपति पोरा ऋषयोऽनन्यान् ये भक्षयन्तो नमः पितृभ्य इति पञ्चेति भारद्वाजः।
2. $B_1$ शीर्षाणि
3. $B_1$ सक्षेत्रियं
4. $A_{2-5}$ विषाणे विषाणे
5. $A_{2-5}$ गुल्पिदं
6. $A_{2-5}$ गुल्पिदं
7. $A_1$ °नुक्तं
8. $A_{2-5}$,$B_1$ अनू°
9. $A_1$ °वेते; $A_{2-5}$ °वेके; $B_1$ °वेतौ
10. $A_1$ शस्त्रमत्र; $A_{2-5}$,$B_1$ शस्त्रमत्रं
11. $B_1$ omitted
12. $A_{1-5}$ महेन्द्र°

वा ॥ १ ॥ स्तुतशस्त्रे अत्र भवतः ॥ २ ॥ स्तोत्रमुपाकृत्य संप्रेष्यति अभिषोतारो-ऽभिषुणुतोद्‍खलानुद्वादयाग्नीदाशिरं[1] विनय सौम्यस्य[2] विचात् इति ॥ ३ ॥ अत्र वार्तीय-सवनीयकमभिषवमभिषुणुयात्[3] सवनीयान् सौम्यमिति निर्वपेदाशिरं विनयेदि-त्येकम् । तृतीयसवन इत्यपरम् ॥ ४ ॥ शस्त्रं प्रतिगीर्यादत्ते ग्रहमध्वर्युः । आददते नाराशँसान् । आददतेऽतिग्राह्यान् ॥ ५ ॥ अत्याक्रम्याश्राव्याह उक्थशा यज सोमस्य इति ॥ ६ ॥ वषट्कृते जुहोति ॥ ७ ॥ व्याख्यातमनुप्रकम्पनम् ॥ ८ ॥ ततो-ऽतिग्राह्यान् जुह्वति अग्ने तेजस्विन् इत्येतैर्मन्त्रैर्यथारूपम् ॥ ९ ॥ व्याख्यातो ग्रहस्य भक्षमन्त्रः ॥ १० ॥ ततोऽतिग्राह्यान्[4] भक्षयन्ति मयि मेधां मयि प्रजाम् इत्येतै-र्मन्त्रैर्यथारूपम् ॥ ११ ॥ व्याख्यातो नाराशँसानाम् ॥ १२ ॥ सर्वान् भक्षयन्ति ॥ १३ ॥ नाप्याययन्ति । मार्जयन्ते ॥ १४ ॥ सर्वभक्षा एवात ऊर्ध्वं माध्यंदिने चमसा भवन्ति ॥ १५ ॥ तत उक्थ्यं विगृह्णाति यथा प्रातःसवने ॥ १६ ॥ एतावन्नाना । इन्द्राय त्वा ॥ इन्द्राय त्वा इति सर्वत्र[5] ग्रहपसादनौ भवतः ॥ १७ ॥ ऐन्द्रो भक्षमन्त्रः ॥ १८ ॥ तस्मिन्नेव काले षोडशिनमभिगृह्णाति ॥ १९ ॥ षोडशिनं गृहीत्वा[6] संप्रेष्यति[6] उत्तमौक्थ्यमसानुन्नय द्रोणकलशं पूतभृत्यवनय सर्वं राजानं चमसेषून्नय दशाभिः कलशौ मृष्ट्वा न्युब्ज इति ॥ २० ॥ उक्थं[7] वाचि इत्याह माध्यंदिनँ सवनं प्रतिगीर्य ॥ २१ ॥ विश्वे देवा मरुत इन्द्रो अस्मान् इत्याहुतिँ हुत्वा संप्रेष्यति प्रशास्तः प्रसुहि इति ॥ २२ ॥ सर्पत इत्याह प्रशास्ता ॥ २३ ॥ संतिष्ठते माध्यंदिनँ सवनम् ॥ २४ ॥ ॥७॥

तृतीयसवनं व्याख्यास्यामः ॥ १ ॥ यदा बहवोऽन्तर्वेदि स्युरथादित्यं गृह्णीयात् ॥ २ ॥ यस्य भ्रातृव्यः सोमेन यजेत यावदादित्यं गृह्णीयात्तावद्बहिर्वेदि

1. $A_2$ °नुद्वादया°, $A_{3-5}$ °नुदादया°
2. $A_1$ सोम्यस्य
3. Emended; $B_1$ °भिषवायाभि°; other MSS °भिषवाभि°; Rudradatta on ĀpŚS XIII.8.5 and Gopinātha on SatS IX.2 (p. 913), while citing this sūtra read अभिषवं as emended and अवनयेत् for विनयेत्. Again on ĀpŚS XIII.13.14: भारद्वाजादिमतात्तु माहेन्द्रस्य स्तोत्रकाल एवास्य निर्वापो निदर्शित एव प्राक् । Vāñcheśvara (15a) on SatS IX.2: भारद्वाजादिमतान्माहेन्द्रस्तोत्र-कालेऽस्य निर्वाप इत्युक्त प्राक् । Sūtra 4 partially cited by Vāñcheśvara (9a) on SatS IX.2.
4. $B_1$ अतिग्राह्यास्ततो
5. $B_1$ omitted
6-6. $A_{2-5}$,$B_1$ गृह्णाति
7. $A_{2-5}$ उक्थ्यं

इत्येष एव तृतीयसवने[1] भक्षमन्त्रो भवत्यन्यत्र नाराशँसेभ्यः ॥ १८ ॥ उभयीर्देवताः पुनरभ्युन्नीतेषूपलक्षयन्ति ॥ १९ ॥ असर्वान्[2] भक्षयित्वाप्याययन्ति ॥ २० ॥ व्याख्यातमाप्यायनँ सादनम् ॥ २१ ॥ ॥११॥

स्वँ स्वं चमसमनु[3] न्यन्ते[3] त्रीँस्त्रीन् पुरोडाशशकलानुपन्यस्यन्ति ॥ १ ॥ एतत्ते तत ये च त्वामनु इत्येतै[4] दानप्रभृतयः प्रत्यायनान्ता[5] मन्त्रा आम्नाता भवन्ति यथा पिण्डपितृयज्ञे ॥ २ ॥ स्वेभ्यः पितामहेभ्यो दद्युरित्येकम् । यजमान एव मन्त्राञ्जपेत्तूष्णीमितर उपन्यस्येयुरित्यपरम्[6] ॥ ३ ॥ अन्तर्यामपात्रेण सावित्रमाग्रयणाद् गृह्णाति वाममद्य सवितः इत्येतेनानुवाकेन ॥ ४ ॥ न सादयति ॥ ५ ॥ ततः संप्रेष्यति देवाय सवित्रेऽनुब्रूहि इति ॥ ६ ॥ अत्याक्रम्याश्राव्याह देवाय सवित्रे प्रेष्य इति ॥ ७ ॥ वषट्कृते जुहोति । नानुवषट्करोति ॥ ८ ॥ तस्मिन् ससँस्रावे[7] पात्रे वैश्वदेवं पूतभृतो गृह्णाति उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठानः इति ॥ ९ ॥ शस्त्रमत्र[8] भवति ॥ १० ॥ यत्राभिजानाति एकया च दशभिश्च स्वभूते इति तत् प्रतिप्रस्थाता द्विदेवत्यपात्राणि प्रक्षाल्य खरे सादयति ॥ ११ ॥ यत्राभिजानाति प्र द्यावा यज्ञैः पृथिवी ऋतावृधा इति तदन्यतरतोमोदं प्रतिगृणाति मदा मोद इवोथा[9] मोद इव इत्याव्याहावात् ॥ १२ ॥ शस्त्रं प्रतिगीर्यादत्ते ग्रहमध्वर्युः । आदद्‌ते नाराशँसान् ॥ १३ ॥ अत्याक्रम्याश्राव्याह उक्थशा यज सोमस्य इति ॥ १४ ॥ वषट्कृते जुहोति ॥ १५ ॥ व्याख्यातमनुप्रकम्पनम् ॥ १६ ॥ सावित्रवैश्वदेवैः पीतस्य इति ग्रहस्य भक्षमन्त्रं नमति ॥ १७ ॥ व्याख्यातो नाराशँसानाम् ॥ १८ ॥ सर्वान् भक्षयन्ति ॥ १९ ॥ नाप्याययन्ति[10] । मार्जयन्ते ॥ २० ॥ सर्वभक्षा[11] एतात ऊर्ध्वं तृतीयसवने चमसा भवन्ति ॥ २१ ॥ ॥१२॥

ततः सौम्यं चरुं निर्वपति । सवनीयैर्वा सह[12] ॥ १ ॥ तमासाद्य यथा-

1. $A_{2-5}$ °सवनस्य
2. $B_1$ सर्वान्
3-3. $A_1$ चमसं न्येतेन; $B_1$ चमसं स्वंतेन
4. $A_{2-5}$ इत्येतैः
5. $A_{1,3}$ प्रत्यायनात
6. Cited verbatim by Vāñcheśvara (14a) on SatS IX.4.
7. $A_{2-5}$ स२स्रावे
8. $A_2$ °मात्रं; $A_{3-5}$,$B_1$ °मत्रं
9. $A_1$,$B_1$ इवोथा
10. $B_1$ omitted
11. Emended. MSS सर्वभक्ष्या cf. XIII.32.16.
12. XIV.7.4.

गृहीतमाज्यं गृहीत्वात्याक्रम्याश्राव्याह घृतस्य यज इति ॥ २ ॥ वषट्कृते जुहोति ॥ ३ ॥ अत्रैवोपविश्य प्राचीनावीतं कृत्वा हस्तेन सौम्यस्य पूर्वमवदानमवद्यति मेक्षणेनोत्तरम् ॥ ४ ॥ अभिघार्योदङ्ङत्याक्रम्याश्राव्याह सौम्यस्य[1] यज इति ॥ ५ ॥ वषट्कृते दक्षिणार्धे जुहोति ॥ ६ ॥ अत्रैवोपविश्य यज्ञोपवीतं कृत्वाप उपस्पृश्य यथागृहीतमाज्यं गृहीत्वात्याक्रम्याश्राव्याह घृतस्य यज इति ॥ ७ ॥ वषट्कृते जुहोति ॥ ८ ॥ अन्यतरतः परीज्यामेके सौम्यस्य[2] समामनन्ति ॥ ९ ॥ आज्येन चरुमभिपूर्योद्गातृभ्यो हरन्ति ॥ १० ॥ तमवेक्षन्ते[3] सत्रो त एतद्यद्‌ु त इह इति ॥ ११ ॥ यद्यगतासुर्भवति परिपश्यति। यदि गतासुः स्यात् सोऽवेक्षेत यन्मे मनः परागतम् इत्येतया ॥ १२ ॥ आमयाविना प्राश्योऽन्नाद्यकामेन प्राश्यो योऽलमन्नाद्याय[4] सन्नन्नं नाद्यात्तेन[4] प्राश्य इति विज्ञायते ॥ १३ ॥ जुह्वां नवगृहीतमाज्यं गृहीत्वा ज्वलतो धिष्णियान् व्याघारयति ॥ १४ ॥ व्याघारणसंपातं निधायोपाँशुपात्रेण पात्नीवतमाग्रयणाद् गृह्णाति उपयामगृहीतोऽसि बृहस्पतिसुतस्य त इन्दो इन्द्रियावतः पत्नीवन्तं[5] ग्रहं गृह्णामि इति ॥ १५ ॥ व्याघारणसंपातेन श्रीत्वात्याक्रम्याश्राव्याह अग्नीत् पात्नीवतस्य यज इति ॥ १६ ॥ वषट्कृते जुहोति[6] अग्ना३इ पत्नीवा३ इत्यनुवाकशेषेण[6] ॥ १७ ॥ सानुवषट्कारमेके पात्नीवतँ समामनन्त्यननुवषट्कारमेके। उपाँश्वनुवषट्करोतीत्येकेषाम् ॥ १८ ॥ ॥१३॥

भक्षमाहरन् संप्रेष्यति अग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोन्नेतर्होतृचमसमुख्याँश्चमसाननुन्नय होतृचमसे ध्रुवायावकाशं कुरु सर्वँ राजानं चमसेष्वुन्नय दशाभिः कलशौ मृष्ट्वा न्युब्जोद्गात्रा[7] पत्नीँ संख्यापयाप उपप्रवर्तय इति ॥ १ ॥ यथाचोदितं कुर्वन्ति ॥ २ ॥ अन्तरेण नेष्टारं धिष्णियं चाग्नीध्रो व्यवसृप्य भक्षयति। अग्निपीतस्य इति भक्षमन्त्रं[8] नमति ॥ ३ ॥ संप्रज्वलयित्वा धिष्णियान् यज्ञायज्ञीयस्य स्तोत्रमुपाकरोति ॥ ४ ॥ सकर्णप्रावृता[9] भवन्त्यृत्विजो यजमानश्चाविरिव नाभिं दर्शयन्तः

1. Thus $B_1$; $A_1$ सोम्यस्य; $A_{2-3}$ सोमस्य
2. $A_{2-3}$ सौम्य
3. $B_1$ omitted

4–4. Thus $B_1$; $A_1$ लोयोमंन्नाद्याय संनंतन्नाद्यात्तेन; $A_2$ योलमन्नाद्याय सन्नानाद्यातेन; $A_{3-5}$ योलमन्नाद्या सन्नाश्नाद्यातेन

5. $A_1$ पात्नी॰

6–6. $A_1$ ॰त्यग्नाद्यइत्यपत्नीवाद्य॰

7. $A_1$ न्युद्गात्रा; $A_{2-3}$ न्युब्जयोद्गात्रा
8. $A_{2-3}$ मंत्रं
9. $A_1$ सफठ॰

तिष्ठेत् ॥ ३ ॥ यस्य प्रसृप्तो भ्रातृव्यः स्यादन्तर्वेदि सत्यादित्यं गृह्णीयात् ॥ ४ ॥ हविर्धानयोर्द्वारे अपिधायादित्यस्थाल्या आदित्यपात्रे तृतीयं गृह्णाति कदा चन स्तरीरसि इत्येताभिस्तिसृभिः ॥ ५ ॥ सोममग्रे गृह्णात्यथ शृतातङ्क्यं दध्यथ सोमम् । त्रिष्टुभा मध्यतो दधि गृह्णातीति विज्ञायते ॥ ६ ॥ या दिव्या वृष्टिस्तया त्वा[1] श्रीणामि इति[1] दध्नोपरिष्टाद् वृष्टिकामस्य श्रीणीयात् । न मध्यतो दधि गृह्णीयात् ॥ ७ ॥ सुदवदादित्यस्थालीमायतने सादयित्वोपाँशुसवनं ग्रहेऽवदधाति[2] विवस्व आदित्यैष ते सोमपीथः इति ॥ ८ ॥ तमुद्यम्य विज्ञानमुपैति । यदि ताजग्बिन्दुः प्रस्कन्देद्वर्षुकः पर्जन्यः स्यात् । यदि चिरमवर्षुकः ॥ ९ ॥ न सादयित्वा ग्रहमादायाध्वर्युस्तिष्ठति सूर्यो मा देवो देवेभ्यः पातु इति ॥ १० ॥ ततः संप्रेष्यति आदित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्योऽनुब्रूहि इति ॥ ११ ॥　॥८॥

आदित्यं यजमानोऽन्वारभते अहं परस्तादहमवस्तात् इति ॥ १ ॥ दर्भैराच्यावयति आ समुद्रादान्तरिक्षात् इति ॥ २ ॥ दर्भैरपिधायोपनिष्क्रामति कविर्यज्ञस्य वि तनोति पन्थाम्[3] इति ॥ ३ ॥ अत्याक्रम्याश्राव्याह आदित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महस्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यः प्रेष्य इति ॥ ४ ॥ अग्नौ दर्भान् प्रास्यति यास्ते विश्वाः समिधः सन्त्यग्ने इत्येतया[4] ॥ ५ ॥ वषट्कृतेऽन्यत्रेक्षमाणो जुहोति । नानुवषट्करोति ॥ ६ ॥ न हुत्वान्वीक्षेत ॥ ७ ॥ उनम्भय पृथिवीम् इति वृष्टिकामस्य जुहुयात् ॥ ८ ॥ सुदवदादित्यपात्रमायतने सादयित्वा संप्रेष्यति प्रतिप्रस्थातः सवनीयान्निर्वप इति ॥ ९ ॥ वसतीवरीभिर्होतृचमसं पूरयित्वा निग्राभ्यासु यजमानं वाचयति यथा प्रातःसवने ॥ १० ॥ उपाँशुपात्रादँशुमृजीषेऽपिसृज्य महाभिषवमभिषुण्वन्ति यथा प्रातःसवने ॥ ११ ॥ समानमा ग्रहकालात् ॥ १२ ॥ नात्र शुक्रामन्थिनौ गृह्णाति ॥ १३ ॥ आग्रयणं चतसृभ्यो धाराभ्यो गृह्णाति ॥ १४ ॥ य एष आग्रयणस्थाल्यां राजा तमन्यस्मिन् पात्रे पर्यासिच्य द्वितीयां धारां कुरुते । आदित्यपात्रात् तृतीयाम् । आदित्यस्थाल्याश्चतुर्थीम् ॥ १५ ॥　॥९॥

उक्थ्यस्यावृतोक्थ्यं गृह्णाति यद्युक्थ्यसँस्थो[5] भवति ॥ १ ॥ आग्नीध्रे

1-1. $A_1$ ...मीति; $A_{4,5}$ श्रीणासीति
2. $B_1$ ग्रहे°
3. $A_1$ पथ्याम्
4. $A_{2-5}$ एतया
5. $B_1$ °संस्था

मन्थत आशिरं यजमानः पत्नी च। पत्न्याशिरं मन्थतीत्येके ॥ २ ॥ पूर्वया द्वारा यजमानः प्रपद्यते[1]। अपरया पत्न्याशिरं प्रपादयति ॥ ३ ॥ यत् प्राक् पवमानग्रहेभ्यस्तत् कृत्वा यजमानः सह[2] पत्न्याशिरं पूतभृत्यवनयति अस्मे देवासो वपुषे चिकित्सत इत्येताभिश्चतसृभिः ॥ ४ ॥ समानमा पवमानात् ॥ ५ ॥ प्रत्यञ्चः प्रह्वा आर्भवं पवमानं सर्पन्ति जागतः पन्था आदित्या देवताश्वकेणापरिपरेण पथा स्वस्त्यादित्यानशीय इति। वायप्रेगा अग्र एतु इति च ॥ ६ ॥ तस्य माध्यंदिनेन पवमानेन संचरो व्याख्यातः ॥ ७ ॥ स्तूयमाने[3] यजमानो[3]ऽन्वारोहं जपति सधासि जगतीछन्दाः इति ॥ ८ ॥ समानमा संप्रैषात् ॥ ९ ॥ प्रतिप्रस्थातः पत्नीं संवदस्व इति संप्रैषान्तं नमति ॥ १० ॥ समानमा धिष्ण्यानां विहरणात् ॥ ११ ॥ शलाकाभिर्ज्वलतो धिष्णियान् विहरति ॥ १२ ॥ ॥१०॥

उपरिष्टाद् व्याघारणं व्याख्यास्यामः ॥ १ ॥ अपि वैतांस्तत्रैव विहरेत् ॥ २ ॥ व्याख्यातं सवनीयानां निर्वपणं बर्हिषः स्तरणमलंकरणं ग्रहावकाशोपस्थानं प्रसर्पणमिति ॥ ३ ॥ पशुना प्रचरत्यीडान्तेन ॥ ४ ॥ स एव सर्वेषु सवनेषु श्राप्यते तृतीयसवने वा[4] ॥ ५ ॥ पशुना प्रचर्य सवनीयैः प्रचरति ॥ ६ ॥ एतावन्नाना। तृतीयस्य सवनस्येन्द्राय पुरोडाशानामनुब्रूहि ॥ तृतीयस्य सवनस्येन्द्राय पुरोडाशान् प्रस्थितान् प्रेष्य इति संप्रेष्यति ॥ ७ ॥ व्याख्यातः स्विष्टकृत्। तथेडा ॥ ८ ॥ आधवनीयं पूतभृत्यवनयति ॥ ९ ॥ समानमा संप्रैषात् ॥ १० ॥ एतावन्नाना। होतृचमसमादाय तृतीयस्य सवनस्यर्भुमतो विभुमतः प्रभुमतः परिभुमतो वाजवतः सवितृवतो बृहस्पतिवतो विश्वदेव्यावतस्तीव्रँ आशीर्वत इन्द्राय सोमान् प्रस्थितान् प्रेष्य इति संप्रैषादिः ॥ ११ ॥ वषट्कृते जुहोति श्येनाय पत्वने स्वाहा इति ॥ १२ ॥ अनुवषट्कृते द्वितीयं वट्[5] स्वयमभिगूर्ताय नमः[6] इति ॥ १३ ॥ एवमेव पुनरभ्युन्नीतानामुत्तराभ्यामुत्तराभ्यां मन्त्राभ्यामुत्तरमुत्तरं जुहोति ॥ १४ ॥ सर्वान् हुतानुमन्त्रयते तृम्पन्तां होत्रा मधोर्घृतस्य इति ॥ १५ ॥ समानमा प्राशनात् ॥ १६ ॥ उपन्यसनार्थान् पुरोडाशशकलानभिदधाति ॥ १७ ॥ यथाचमसं चमसिनो भक्षयन्ति। आदित्यवद्गणस्य सोम देव ते

1. $A_1$,$B_1$ प्रतिपद्यते
2. $A_{2-3}$ omitted
3–3. $A_{2,3}$ स्तूयमानो
4. $B_1$ omitted
5. $A_1$ वषट्; $A_{2-3}$ व ट्
6. $A_{2-3}$ ■

इत्येष एव तृतीयसवने[1] भक्षमन्त्रो भवत्यन्यत्र नाराशँसेभ्यः ॥ १८ ॥ उभयीर्देवताः पुनरभ्युन्नीतेषूपलक्षयन्ति ॥ १९ ॥ असर्वान्[2] भक्षयित्वाप्याययन्ति ॥ २० ॥ व्याख्यातमाप्यायनँ सादनम् ॥ २१ ॥ ॥११॥

स्वँ स्वं चमसमनू[3] न्यन्ते[3] त्रीँ स्त्रीन् पुरोडाशशकलानुपन्यस्यन्ति ॥ १ ॥ एतत्ते तत ये च त्वामनु इत्येते[4] दानप्रभृतयः प्रत्यायनान्ता[5] मन्त्रा आम्नाता भवन्ति यथा पिण्डपितृयज्ञे ॥ २ ॥ स्वेभ्यः पितामहेभ्यो दद्युरित्येकम् । यजमान एव मन्त्राञ्जपेत्तूष्णीमितर उपन्यस्येयुरित्यपरम्[6] ॥ ३ ॥ अन्तर्यामपात्रेण सावित्रमाग्रयणाद् गृह्णाति वाममद्य सवितः इत्येतेनानुवाकेन ॥ ४ ॥ न सादयति ॥ ५ ॥ ततः संप्रेष्यति देवाय सवित्रेऽनुब्रूहि इति ॥ ६ ॥ अत्याक्रम्याश्राव्याह देवाय सवित्रे प्रेष्य इति ॥ ७ ॥ वषट्कृते जुहोति । नानुवषट्करोति ॥ ८ ॥ तस्मिन् सँस्रावे[7] पात्रे वैश्वदेवं पूतभृतो गृह्णाति उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठानः इति ॥ ९ ॥ शस्त्रमन्त्र[8] भवति ॥ १० ॥ यत्राभिजानाति एकया च दशभिश्च स्वभूते इति तत् प्रतिप्रस्थाता द्विदेवत्यपात्राणि प्रक्षाल्य खरे सादयति ॥ ११ ॥ यत्राभिजानाति प्र द्यावा यज्ञैः पृथिवी ऋतावृधा इति तदन्यतरतोमोदं प्रतिगृणाति मदा मोद इवोथा[9] मोद इव इत्याव्याहावात् ॥ १२ ॥ शस्त्रं प्रतिगीर्यादत्ते ग्रहमध्वर्युः । आददते नाराशँसान् ॥ १३ ॥ अत्याक्रम्याश्राव्याह उक्थशा यज सोमस्य इति ॥ १४ ॥ वषट्कृते जुहोति ॥ १५ ॥ व्याख्यातमनुप्रकम्पनम् ॥ १६ ॥ सावित्रवैश्वदेवैः पीतस्य इति ग्रहस्य भक्षमन्त्रं नमति ॥ १७ ॥ व्याख्यातो नाराशँसानाम् ॥ १८ ॥ सर्वान् भक्षयन्ति ॥ १९ ॥ नाप्याययन्ति[10] । मार्जयन्ते ॥ २० ॥ सर्वभक्षा[11] एवात ऊर्ध्वं तृतीयसवने चमसा भवन्ति ॥ २१ ॥ ॥१२॥

ततः सौम्यं चरुं निर्वपति । सवनीयैर्वा सह[12] ॥ १ ॥ तमासाद्य यथा-

---

1. $A_{2-5}$ °सवनस्य
2. $B_1$ सर्वान्
3–3. $A_1$ चमसं न्येतेन; $B_1$ चमसं स्वेतेन
4. $A_{2-5}$ इत्येतैः
5. $A_{1,2}$ प्रत्यायनान्त
6. Cited verbatim by Vāñcheśvara ( 14a ) on SatS IX.4.
7. $A_{2-5}$ सँस्रावे
8. $A_2$ °मार्ग; $A_{3-5}$,$B_1$ °मद्य
9. $A_1$,$B_1$ इवोथा
10. $B_1$ omitted
11. Emended. MSS सर्वभक्षा cf. XIII.32.16.
12. XIV.7.4.

गृहीतमाज्यं गृहीत्वात्याक्रम्याश्राव्याह घृतस्य यज इति ॥ २ ॥ वषट्कृते जुहोति ॥ ३ ॥ अत्रैवोपविश्य प्राचीनावीतं कृत्वा हस्तेन सौम्यस्य पूर्वमवदानमवद्यति मेक्षणेनोत्तरम् ॥ ४ ॥ अभिघार्योदङ्ङत्याक्रम्याश्राव्याह सौम्यस्य[1] यज इति ॥ ५ ॥ वषट्कृते दक्षिणार्धे जुहोति ॥ ६ ॥ अत्रैवोपविश्य यज्ञोपवीतं कृत्वाप उपस्पृश्य यथागृहीतमाज्यं गृहीत्वात्याक्रम्याश्राव्याह घृतस्य यज इति ॥ ७ ॥ वषट्कृते जुहोति ॥ ८ ॥ अन्यतरतः परीज्यामेके सौम्यस्य[2] समामनन्ति ॥ ९ ॥ आज्येन चरुमभिपूर्योद्गातृभ्यो हरन्ति ॥ १० ॥ तमवेक्षन्ते[3] सत्रो त एतद्यद्‌ त इह इति ॥ ११ ॥ यद्यगतासुर्भवति परिपश्यति। यदि गतासुः स्यात् सोऽवेक्षेत यन्मे मनः परागतम् इत्येतया ॥ १२ ॥ आमयाविना प्राश्योऽन्नाद्यकामेन प्राश्यो योऽल-मन्नाद्याय[4] सन्नन्नं नाद्यात्तेन[4] प्राश्य इति विज्ञायते ॥ १३ ॥ जुह्वां नवगृहीत-माज्यं गृहीत्वा ज्वलतो धिष्णियान् व्याघारयति ॥ १४ ॥ व्याघारणसंपातं निधायोपांशुपात्रेण पात्नीवतमाग्रयणाद् गृह्णाति उपयामगृहीतोऽसि बृहस्पतिसुतस्य त इन्दो इन्द्रियावतः पत्नीवन्तं[5] ग्रहं गृह्णामि इति ॥ १५ ॥ व्याघारणसंपातेन श्रीत्वात्या-क्रम्याश्राव्याह अग्नीत् पात्नीवतस्य यज इति ॥ १६ ॥ वषट्कृते जुहोति[6] अग्ना३इ पत्नीवा३ इत्यनुवाकशेषेण[6] ॥ १७ ॥ सानुवषट्कारमेके पात्नीवतँ समामनन्त्य-ननुवषट्कारमेके। उपाँश्वनुवषट्करोतीत्येकेषाम् ॥ १८ ॥ ॥१३॥

भक्षमाहरन् संप्रेष्यति अग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोन्नेतर्होतृचमस-मुख्याँश्चमसाननुन्नय होतृचमसे ध्रुवायावकाशं कुरु सर्वं राजानं चमसेषून्नय दशाभिः कलशौ मृष्ट्वा न्युब्जोद्गात्रा[7] पत्नी संख्यापयाप उपप्रवर्तय इति ॥ १ ॥ यथाचोदितं कुर्वन्ति ॥ २ ॥ अन्तरेण नेष्टारं धिष्णियं चाग्नीध्रो व्यवसृप्य भक्षयति। अग्निपीतस्य इति भक्षमन्त्रं[8] नमति ॥ ३ ॥ संप्रज्वलयित्वा धिष्णियान् यज्ञायज्ञीयस्य स्तोत्र-मुपाकरोति ॥ ४ ॥ सकर्णप्रावृता[9] भवन्त्यृत्विजो यजमानश्चाविरिव नाभिं दर्शयन्तः

1. Thus $B_1$; $A_1$ सोम्यस्य; $A_{2-3}$ सोमस्य
2. $A_{2-3}$ सौम्य
3. $B_1$ omitted

4–4. Thus $B_1$; $A_1$ लोयोमंन्नाद्याय संनंतनाद्यात्तेन; $A_2$ योलमन्नाद्याय सन्नानाद्यातेन; $A_{3-5}$ योलमन्नाद्या सन्नान्नाद्यातेन

5. $A_1$ पात्नी°

6–6. $A_1$ °त्यमाद्यइत्यपत्नीवाद्य°

7. $A_1$ न्युद्गात्रा; $A_{2-3}$ न्युब्जयोद्गात्रा
8. $A_{2-3}$ मंत्रं
9. $A_1$ प्रकर्ण°

॥ ५ ॥ उद्गातुर्हिङ्कारं प्रत्युद्गात्रा पत्नीमा तिसृभ्यः स्तोत्रियाभ्यः संख्यापयति विश्वस्य ते विश्वावतो वृष्णियावतः इति ॥ ६ ॥ दक्षिणं नग्नं कृत्वोरुं[1] पत्न्यूरुणा[2] पत्नेजनीरा तिसृभ्य उपप्रवर्तयति अगन् देवान् इत्यनुवाकेन वङ्क्षणानाविष्कुर्वती ॥ ७ ॥ प्राचीरुपप्रवर्तयत्युदीचीर्वा[3] । प्राचीरुदीचीरित्येकेषाम् ॥ ८ ॥ परिहिते स्तोत्रे शस्त्रमुपाकरोति ॥ ९ ॥ यत्राभिजानाति स्वादुष्किलायं मधुमाँ उतायम् इति तदुभयतोमोदं प्रतिगृणाति मदा मोद इव मोदा[4] मोद इव[4] इत्या व्याहावात् ॥ १० ॥ यत्राभिजानाति उत नोऽहिर्बुध्न्यः शृणोतु[5] एतस्यां[5] वैश्वदेव्यामृचि[6] शस्यमानायां[6] परिधानीयायां वा सकृच्छस्तायां प्रतिप्रस्थाता होतृचमसे ध्रुवमवनयिष्यन्नुपतिष्ठते भूतमसि भूते मा धाः इति ॥ ११ ॥ अथैनं हस्ताभ्यां परिगृह्णाति द्यावापृथिवीभ्यां त्वा परिगृह्णामि इति ॥ १२ ॥ हरति[7] विश्वे त्वा देवा वैश्वानराः प्र[8] च्यावयन्तु इति ॥ १३ ॥ ॥१४॥

पुरस्तात्प्रत्यङ् तिष्ठन् होतृचमसे ध्रुवमवनयति ध्रुवं ध्रुवेण इत्यनुवाकशेषेण ॥ १ ॥ पश्चात्प्राङासीनोऽनुलोममवनयतीत्येकेषाम् ॥ २ ॥ संततां धारां स्रावयत्या शस्त्रापवर्गात् ॥ ३ ॥ शस्त्रं प्रतिगीर्यादत्ते ग्रहमध्वर्युः । आददते चमसांश्चमसाध्वर्यवः ॥ ४ ॥ अत्याक्रम्याश्राव्याह उक्थशा यज सोमानाम् इति ॥ ५ ॥ वषट्कृते जुहोति[9] ॥ ६ ॥ यथाचमसं चमसिनो भक्षयन्ति । अग्निना वैश्वानरेण पीतस्य इति ग्रहस्य भक्षमन्त्रं नमति ॥ ७ ॥ तत आदित्यमुपतिष्ठत[10] आहवनीयं[10] वा सुभूरसि श्रेष्ठो रश्मीनामायुर्मे इन्द्रियं धेह्यादो म आ गम्यात् इति । यत् कामयते तस्य नाम गृह्णातीति विज्ञायते[11] ॥ ८ ॥ इति[11] वै खलु यद्यग्निष्टोमः ॥ ९ ॥ अथ यद्युक्थ्यः[12] सर्वं[13] राजानं चमसेषून्नय दशाभिः कलशौ मृष्ट्वा न्युब्ज इति लुप्यत एतत्संप्रैषस्य ॥ १० ॥ अग्निष्टोमचमसाननुन्नयंस्त्रिभ्यश्चमसगणेभ्यो राजानमतिरेचयति

1. Emended; A,B, कृत्वोर्द
2. Thus B₁; A पत्न्यूरुणा
3. Emended; A₁ °त्युदीचीश्च; A₂,₃ °त्युदीचीविशा; A₄,₅ °त्युदीचीश; B₁ °त्युदीचीः
4–4. B₁ omitted
5–5. A,B₁ शृणोत्वेतस्यां
6–6. A₁ °गृच्चमस्य°
7. A₂-₅ विहरति
8. A₁ मा
9. Thus B₁; A₁ जुहति; A₂-₅ जुहोति
10–10. A₂ °तिष्ठथा°; A₃-₅ °तिष्ठाथा°
11–11. A₁ विना; A₂-₅,B₁ omitted
12. A₂-₅ मयुक्थ्य।

॥ ११ ॥ तत उक्थ्यं विगृह्णाति यथा प्रातःसवने ॥ १२ ॥ एतावन्नाना । इन्द्रावरुणाभ्यां[1] त्वा इति[1] मैत्रावरुणस्य ग्रहणसादनौ भवतः । इन्द्राबृहस्पतिभ्यां त्वा इति ब्राह्मणाच्छंसिनः । इन्द्राविष्णुभ्यां त्वा इत्यच्छावाकस्य । एवमेवैतान् भक्षमन्त्रानमति ॥ १३ ॥ इति वै खलु यद्युक्थ्यः ॥ १४ ॥ अथ यदि षोडश्यच्छावाकचमसाननुन्नयन्नेकस्मै चमसगणाय संप्रदाय[2] राजानमतिरेचयति । तस्मिन्नेव काले षोडशिनमभिगृह्णाति ॥ १५ ॥ अपि वैनमन्वेवाग्रयणाद् गृह्णीयात् । न पूर्वयोः सवनयोः ॥ १६ ॥ अप्यग्निष्टोमे[3] राजन्यस्य गृह्णीयादिति विज्ञायते ॥ १७ ॥ अनन्तरमग्निष्टोमचमसेभ्यो[4] गृह्णीयात् ॥ १८ ॥ होतृचमसमुख्याँश्चमसानुन्नयति ॥ १९ ॥ स्तुतशस्त्रे अत्र[5] भवतः ॥ २० ॥ ॥१५॥

समयाविषिते सूर्ये हिरण्येन षोडशिनः स्तोत्रमुपाकरोति ॥ १ ॥ पुरस्तादरुणपिशङ्गमश्वं धारयन्ति[6] श्यामं वा ॥ २ ॥ हिरण्येन संप्रदायँ[7] स्तुवते ॥ ३ ॥ हरिवत्स्तोत्रँ हरिवच्छस्त्रँ हरिवती याज्या भवति[8] ॥ ४ ॥ षोडशिनमुपतिष्ठते

यस्मान्न जातः परो अन्यो अस्ति । य आविवेश भुवनानि विश्वा ।
प्रजापतिः प्रजया संविदानः । त्रीणि ज्योतीँषि सचते स षोडशी ॥

इति ॥ ५ ॥ शस्त्रं व्यत्यासं प्रतिगृणाति ओथा मोद इव मदा[9] मोद[9] इवोमथा इति ॥ ६ ॥ शस्त्रं प्रतिगीर्यादत्ते ग्रहमध्वर्युः । आददते चमसाँश्चमसाध्वर्यवः ॥ ७ ॥ अत्याक्रम्याश्राव्याह उक्थशा यज सोमानाम् इति ॥ ८ ॥ वषट्कृते जुह्वति ॥ ९ ॥ षोडशिनं जुहोति इन्द्राधिपतेऽधिपतिस्त्वं देवानामस्यधिपतिं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुरु इति ॥ १० ॥ यथाचमसं चमसिनो भक्षयन्ति

इन्द्रश्च सम्राड् वरुणश्च राजा । तौ ते भक्षं चक्रतुरग्र एतम् ।
तयोरहं भक्षं भक्षयामि । वाग्जुषाणा सोमस्य तृप्यतु ॥

इति ॥ ११ ॥ अरुणपिशङ्गोऽश्वो दक्षिणाश्वतरी वा ॥ १२ ॥ इति वै खलु यदि षोडशी ॥ १३ ॥ अथ यद्यतिरात्रः षोडशिचमसानुन्नयँस्त्रयोदशभ्यश्चमसगणेभ्यो

1. $A_{2-3}$ °भ्यामिति
2. $B_1$ प्रदाय
3. $A_1$ °ष्टोमो
4. $B_1$ नपरम्मि°
5. $A_{2-3}$ omitted
6. $A_{2-3}$ धारयति
7. $B_1$ संप्रदाय
8. $A_1$ भवंति
9-9. $A_1$ मदेमदादेमाद; $B_1$ मदोमदादेमादा

राजानमतिरेचयति[1] ॥ १४ ॥ इन्द्राय[1] त्वापिशर्वराय इति मुख्यंमुख्यं चमसमभिमृशति ॥ १५ ॥ होतृचमसाननुन्नयति[2] ॥ १६ ॥ स्तुतशस्त्रे[3] अत्र[3] भवतः ॥ १७ ॥ शस्त्रं प्रतिगीर्यादत्ते ग्रहमध्वर्युः । आददते चमसाँश्चमसाध्वर्यवः ॥ १८ ॥ अत्याक्रम्याश्राव्याह उक्थशा यज सोमानाम् इति ॥ १९ ॥ वषट्कृते जुहोति ॥ २० ॥ यथाचमसं चमसिनो भक्षयन्ति ॥ २१ ॥ अनुष्टुप्छन्दस इन्द्रपीतस्य इति भक्षमन्त्रं नमति ॥ २२ ॥ इति प्रथमश्चमसगणः[4] ॥ २३ ॥ ॥१६॥

एवंविहिता अपरे त्रयश्चमसगणाः । मैत्रावरुणचमसमुख्यो[5] द्वितीयश्चमसगणो ब्राह्मणाछँसिचमसमुख्यस्तृतीयोऽच्छावाकचमसमुख्यश्चतुर्थः ॥ १ ॥ एतेन शस्त्रयाज्यानामानुपूर्व्यं व्याख्यातम् ॥ २ ॥ इति प्रथमो रात्रिपर्यायः ॥ ३ ॥ एवंविहितावपरौ द्वौ[6] भवतः ॥ ४ ॥ होतृचमसमुख्यान् संधिचमसाननुन्नयति ॥ ५ ॥ त्रिवृत्स्तोत्रं[7] भवति ॥ ६ ॥ आश्विनं शस्त्रं परःसहस्रम् ॥ ७ ॥ उदित आदित्ये परिदधातीति विज्ञायते ॥ ८ ॥ आश्विनं द्विकपालं निर्वपति[8] ॥ ९ ॥ यजुरुत्पूताभिरद्भिः पुरोडाशँ श्रपयति ॥ १० ॥ स्तीर्ण एव बर्हिषि पिष्टलेपं निनयति ॥ ११ ॥ शस्त्रं प्रतिगीर्य पुरोडाशमुद्वास्य संप्रेष्यति अश्विभ्यां तिरोअह्नियानाँ[9] सोमानामनुब्रूहि इति ॥ १२ ॥ आदत्ते ग्रहमध्वर्युः । आददते चमसाँश्चमसाध्वर्यवः । आदत्ते पुरोडाशं प्रतिप्रस्थाता ॥ १३ ॥ अत्याक्रम्याश्राव्याह अश्विभ्यां तिरोअह्नियान्[10] सोमान् प्रस्थितान् प्रेष्य इति ॥ १४ ॥ वषट्कृते सह सोमैः प्रतिप्रस्थाता पुरोडाशँ सर्वहुतं जुहोति ॥ १५ ॥ पङ्क्तिछन्दसोऽश्विपीतस्य इति भक्षमन्त्रं नमति ॥ १६ ॥ इति वै[11] खलु यद्यतिरात्रः ॥ १७ ॥ अथ यद्यप्तोर्यामः संधिचमसाननुन्नयँश्चतुर्भ्यश्चमसगणेभ्यो राजानमतिरेचयति ॥ १८ ॥ ॥१७॥

तत्र चत्वारि स्तोत्राणि चत्वारि शस्त्राण्याश्विनानि च सयाज्यान्या-

---

1–1. $A_1$ रेचयंतीश्य
2. Thus all MSS. The sūtra ought to read: होतृचमसमुख्यांश्चमसाननुन्नयति cf. XIV.15.19.
3–3. $B_1$ अत्र स्तुतशस्त्रे
4. $A_{2-5}$ प्रथमचम°
5. $A_{2-5}$ °वरुणमुख्यो
6. $B_1$ omitted
7. Thus $B_1$; A वृत्स्तोत्रं
8. $A_{2-5}$ omitted
9. A °अह्नयानां
10. A °अह्नयान्
11. $A_{1-5}$ omitted

स्नातानि भवन्ति[1] ॥ १ ॥ तेषाँ संधिचमसैरेव कल्पो व्याख्यातः ॥ २ ॥ एतावन्नाना । होतृचमसमुख्यः प्रथमश्चमसगणो मैत्रावरुणचमसमुख्यो द्वितीयो ब्राह्मणाच्छँसिचमसमुख्यस्तृतीयोऽच्छावाकचमसमुख्यश्चतुर्थः ॥ ३ ॥ एतेन शस्त्रयाज्यानामानुपूर्व्यं व्याख्यातम् ॥ ४ ॥ उक्थं वाचीन्द्राय इत्याह तृतीयसवनं प्रतिगीर्य ॥ ५ ॥ अतिच्छन्दसोऽश्विपीतस्य[2] इति भक्षमन्त्रं नमति ॥ ६ ॥ ततः संप्रेष्यति अग्नीदौपयजानङ्गारानाहर इति ॥ ७ ॥ समानमा परिधीनां प्रहरणात् ॥ ८ ॥ प्रहृत्य परिधीनुन्नेता हारियोजनं[3] गृह्णाति ॥ ९ ॥ द्रोणकलशेनाग्रयणं ग्रहीष्यन् संप्रेष्यति इन्द्राय हरिवते धानासोमानामनुब्रूहि इति ॥ १० ॥ गृह्णाति उपयामगृहीतोऽसि हरिरसि हारियोजनः इति ॥ ११ ॥ बह्वीभिर्धानाभिः श्रीत्वात्याक्रम्याश्राव्याह इन्द्राय हरिवते धानासोमान् प्रस्थितान् प्रेष्य इति ॥ १२ ॥ वषट्कृते शीर्षन्नधिनिधाय विक्रम्य जुहोति हरी स्थ हर्योर्धानाः सहसोमा इन्द्राय स्वाहा इति ॥ १३ ॥ हुतं यजमानोऽनुमन्त्रयते यन्म आत्मनो मिन्दाभूत् ॥ पुनरग्निः इति द्वाभ्याम् ॥ १४ ॥ अथैनँ सर्व ऋत्विज उन्नेतर्युपहवमिष्ट्वासंभिन्दन्तो धाना निम्नानि कुर्वन्तश्चिश्चिपाकारं भक्षयन्ति इष्टयजुस्ते देव सोम इति ॥ १५ ॥ ॥१८॥

अवशिष्टा उत्तरवेद्यां निवपन्ति आपूर्या स्था मा पूरयत इति ॥ १ ॥ त्रीँस्त्रीञ्छकलानग्नौ प्रास्यन्ति देवकृतस्यैनसोऽवयजनमसि इत्येतैर्मन्त्रैः ॥ २ ॥ एकधनपरिशेषेषु[4] हरिणी दूर्वा अवधाय संप्लोष्याय तीव्रीकृत्य यथाचमसं व्यानीयापरेण चात्वालं प्राञ्चोऽवजिघ्रन्ति अप्सु धौतस्य सोम देव ते इति ॥ ३ ॥ अवशिष्टा अन्तर्वेदि निनयति चात्वाल इत्येके

समुद्रं वः प्रहिणोमि स्वां योनिमपिगच्छत ।
अरिष्टा अस्माकं वीरा उत्ते[5] भवन्तु मा परासेचि नः स्वम्[6] ॥

इति ॥ ४ ॥ निनीता[7] अनुमन्त्रयते

1. Rudradatta on ĀpSS XIV.4.15 and Gopīnātha on SatS IX.7 (p. 966) while citing this sūtra omit चत्वारि before शस्त्राणि and also the conjunction च. Similarly Vāñcheśvara (36a) on SatS IX.7.
2. $A_1$ °श्छंदाश्छंदसोश्वपीतस्य
3. $A_{1,2}$ हार्योजनं; $A_{4,5}$ हारियोजन
4. $A_{2-5}$ °धनशेषेषु
5. $A_1$ उत्तरो; $B_1$ उत्तरे
6. cf. AV X.5.23
7. $A_1$,$B_1$ नीता

अछायं वो मरुतः श्लोक एत्वछा विष्णुं निषिक्तपामवोभिः ।

उत प्रजायै गृणते वयोधा यूयं पात स्वस्तिभिः सदा नः[1] ॥

इति ॥ ५ ॥ आग्नीध्रीयं प्रविश्य दधिद्रप्सान् भक्षयन्ति दधिक्राव्णो अकारिषम् इत्येतया ॥ ६ ॥ ततः सक्थ्यानि विसृजन्ते ये तानूनप्त्रं समवमृशन्ति

उभा कवी युवाना सत्या[2] ता धर्मणस्पती[3] ।

सत्यस्य धर्मणस्पते[4] वि सक्थ्यानि सृजामहे ॥

इति ॥ ७ ॥ ततः पत्नीः संयाजयन्ति ॥ ८ ॥ समानमा समिष्टयजुषः[5] ॥ ९ ॥ जुह्वां नवगृहीतमाज्यं गृहीत्वा नव समिष्टयजूंषि जुहोति । धाता रातिः सवितेदं जुषन्ताम् इत्येतस्यानुवाकस्य पङ्क्तिमयाणि[6] त्रीणि यजूंषि । समानत्र जुहोति ॥ १० ॥ संततं[7] जुहोतीति विज्ञायते ॥ ११ ॥ विष्णुक्रमाणां स्थाने विष्ण्वतिक्रमान्[8] जपति अग्निना[8] देवेन पृतना जयामि इत्येतान्[9] ॥ १२ ॥ इदं[9] तृतीयं सवनं कवीनाम् इत्याहुतिं हुत्वा संप्रेष्यति प्रशास्तः प्रसुहि इति ॥ १३ ॥ सर्पत इत्याह प्रशास्ता ॥ १४ ॥ संतिष्ठते तृतीयसवनम् ॥ १५ ॥ ॥१९॥

अवभृथस्य तन्त्रं प्रक्रमयति ॥ १ ॥ वेदं कृत्वाग्नीन् परिस्तीर्य हस्तावनिज्य पात्राणि प्रयुज्योलपराजीं[11] स्तीर्त्वा पवित्रे कृत्वा संप्रेष्यति यजमान[10] वाचं यच्छ इति ॥ २ ॥ वाग्यतः पात्राणि संमृशति ॥ ३ ॥ वारुणमेककपालं निर्वपति ॥ ४ ॥ यजुरुत्पूताभिरद्भिः पुरोडाशं श्रपयति ॥ ५ ॥ स्तीर्ण एव बर्हिषि पिष्टलेपं निनयति ॥ ६ ॥ स्फ्यं स्तब्ध्वा संप्रेष्यति प्रोक्षणीरासादय स्रुवं च स्रुचश्च संमृड्ढ्याप्येनोदेहि इति ॥ ७ ॥ समानमाज्यानां ग्रहणात् ॥ ८ ॥ एतस्यामेव

---

1. cf. ṚV VII.36.9
2. $A_1$ सत्याना; $A_{2,3}$ सात्वा
3. $A_2$ धर्मणस्पतिः
4. $A_{2,3}$ धर्मस्य ते
5. Rudradatta on ĀpŚS XIII.17.4 and Gopinātha on SatS IX.4 (p. 937) cite this sūtra verbatim. Vāñcheśvara (21a) on SatS IX.4: तथा च भारद्वाजः समानमा समिष्टयजुष इति । नवगृहीतमाज्यमध्वर्युर्जुह्वां गृहीत्वाप्यस्यां ततः (?) सर्वं गृहीत्वान्तर्वेद्यूर्ध्वस्तिष्ठन् संततं समन्त्रो नव समिष्टयजूंषि जुहोतीति ।
6. $B_1$ °याणि जुहोति
7. $A_1$ विप्रादं; $A_{2,3}$, $B_1$ सततं
8-8. Thus $B_1$; $A_1$ °कामं जपत्य°; $A_{2,3}$ °क्रमान् जपंत्य°
9-9. Thus $B_1$; A इत्येतानीदं
10. $A_{1,2,3}$ यजमानं

वेद्यामाज्यानि गृह्णाति सर्वाणि चतुर्गृहीतानि ॥ ९ ॥ पुरोडाशमुद्वास्याज्येनाहवनीये[1] जुहोति आयुर्दा अग्ने हविषो जुषाणः इति ॥ १० ॥ हुत्वाददतेऽवभृथँ स्फ्यँ सस्रुवामाज्यस्थालीं वेदं पुरोडाशमाज्यान्यृजीषमधिषवणफलके खरपाँसून्[2] यत्किंचित्[2] सोमलिप्तं भवत्यन्यत्र चतसृभ्यः स्थालीभ्यः सोमगृहीताभ्यः[3] ॥ ११ ॥ औदुम्बरीं यजमान उत्खिदति

उपसृजन् धरुणं[4] मात्रे[4] मातरं धरुणो धयन् ।
रायस्पोषमिषमूर्जमस्मासु दीधरत् ॥

इति ॥ १२ ॥ दध्नर्जीषमभिजुहोति[5] ॥ १३ ॥ ॥२०॥

यत्ते ग्राव्णा चिच्छिदुः सोम राजन् इत्येतेनानुवाकेन ॥ १ ॥ तिसृभिरभिजुहोतीत्येकेषाम् । पञ्चभिरित्येकेषाम् । सप्तभिरित्येकेषाम् ॥ २ ॥ चात्वाले कृष्णाजिनं प्रास्यति अव ते हेडो वरुण नमोभिः इति ॥ ३ ॥ अपि वा सहावभृथेऽवप्लावयेत् ॥ ४ ॥ ततः संप्रेष्यति प्रस्तोतः सामानि गाय इति ॥ ५ ॥ सह पत्न्या त्रिः साम्नो निधनमुपयन्ति । वेद्यन्ते प्रथमं मध्यदेशे द्वितीयमुदकान्ते तृतीयम् ॥ ६ ॥ उरुँ हि राजा वरुणश्चकार इति वेद्या[6] अभिप्रयान्ति[7] ॥ ७ ॥ प्राञ्चोऽवभृथाः स्थावरा अभ्युपयन्त्युदञ्चो वा । प्राञ्चोदञ्च इत्येकेषाम् । दक्षिणा[8] इत्येकेषाम्[8] । प्रत्यञ्च इत्येकेषाम् ॥ ८ ॥ यां दिशं यन्ति सा प्राची दिक्[9] ॥ ९ ॥ शतं ते राजन् भिषजः सहस्रम् इत्यपः पराख्याय वदन्ति ॥ १० ॥ अभिष्ठितो वरुणस्य पाशः इत्युदकान्तमभितिष्ठन्ते ॥ ११ ॥ अत्रैके हृदयशूलस्योद्वासनँ समामनन्ति ॥ १२ ॥ अभिप्रगाह्य तिष्ठन्तोऽवभृथेन चरन्ति ॥ १३ ॥ स्रुवाघारमाघार्यं संप्रेष्यति अग्नीदपस्त्विः संमृड्ढि इति ॥ १४ ॥ अथ एवाग्नीध्रस्त्रिः संमार्ष्टि । आपो वाजजितो वाजं वः सरिष्यन्तीर्वाजं जेष्यन्तीर्वाजिनीर्वाजजितो वाजजित्यायै संमार्म्यपो अन्नादीरन्नाधाय इत्यपः संमार्ष्टि ॥ १५ ॥ ॥२१॥

1. Rudradatta on ĀpŚS XIII.20.1 : तथा चाहवनीये जुहोत्यायुर्दा इति भारद्वाजः
2-2. $A_1$,$B_1$ °पांसून्यत्किंचित्; $A_2$ °पांसून्यत्; $A_{3-5}$ पांसून्यत्
3. Thus $A_{4,5}$; $A_1$ सोमगृहीभ्यः; $A_{2,3}$ सोमं गृहीताभ्यः; $B_1$ सोमं गृहीभ्यः
4-4. $A_1$ धरुणममात्रे; $A_3$ धरुणमात्रे; $A_{4,5}$ धरुणपात्रे
5. Rudradatta on ĀpŚS XIII.20.9 cites this sūtra verbatim.
6. $A_1$ वेद्यां
7. $A_{1-5}$,$B_1$ °याति
8-8. $A_{2-5}$ omitted
9. Rudradatta on ĀpŚS VIII.7.20 : तथा च भारद्वाजः यां दिशं गच्छन्ति सा प्राची दिगिति ।

तूष्णीं प्रास्य अग्नेरनीकमप आ विवेश इति स्रुच्यमाघारमाघारयति ॥ १ ॥ यदि वा पुरा तूष्णीं भवति तस्मिन्नेव जुहोति ॥ २ ॥ बर्हिष्येव सर्वा आहुतीर्जुहोति ॥ ३ ॥ समानमा प्रवरात् ॥ ४ ॥ आश्राव्याह तिष्ठ होतः इति । एतावान् प्रवरः ॥ ५ ॥ नार्षेयं वृणीते न होतारम् ॥ ६ ॥ अपबर्हिषश्चतुरः प्रयाजान् यजति ॥ ७ ॥ आज्यभागाभ्यां प्रचर्य पुरोडाशस्यादाय वरुणं यजति ॥ ८ ॥ सर्वं पुरोडाशमवदायाग्नीवरुणौ स्विष्टकृतौ[1] यजति ॥ ९ ॥ ततः संप्रेष्यति अग्नीदपः सकृत् संमृड्ढि इति ॥ १० ॥ अप एवाग्नीध्रः सकृत् संमार्ष्टि । आपो वाजजितो वाजं वः ससृवांसो वाजं जिग्युषीर्वाजिनीर्वाजजितो वाजजित्यायै संमार्ज्म्यपो अन्नादीरन्नाद्याय इत्यपः संमार्ष्टि[2] ॥ ११ ॥ अपबर्हिषौ द्वावनूयाजौ यजति ॥ १२ ॥ देवौ यज इति पूर्वमनूयाजं संप्रेष्यति । यज इत्युत्तरम् ॥ १३ ॥ ऋजीषस्य स्रुचं पूरयित्वाप्सूपमारयति समुद्रे ते हृदयमप्स्वन्तः इति ॥ १४ ॥ यत्रयत्र[3] बिन्दुरिवोच्चरेत्तद्भक्षयेद्[4] अप्सु धौतस्य सोम देव ते इति ॥ १५ ॥ उपस्पृश्यमेवेत्येकेषाम् ॥ १६ ॥ अवभृथं संप्रकिरति[5] अवभृथ[5] निचङ्कुण[6] इति ॥ १७ ॥ अभिप्रगाह्यानुपमक्षन्तौ[7] सहशिरसौ स्नातो यजमानः पत्नी च ॥ १८ ॥ अन्योन्यस्य च पृष्ठे प्रधावेते सुमित्रा न आप ओषधयः सन्तु इति ॥ १९ ॥ ॥२२॥

अवभृथमुपतिष्ठन्ते[8] देवीराप एष वो गर्भः इति ॥ १ ॥ विचृत्तो वरुणस्य पाशः इति यजमानो मेखलां विचृतति[9] । इमं वि ष्यामि वरुणस्य पाशम् इति योक्त्रपाशं पत्नी ॥ २ ॥ अत्रैव सर्वाणि दीक्षितव्यञ्जनान्युपप्लावयतः[10] ॥ ३ ॥ अहतौ वसानाववभृथादुदेतः ॥ ४ ॥ सोमोपनहनं[11] यजमानः परिधत्ते । सोम-

---

1. $A_1$,$B_1$ स्विष्टकृतो
2. Rudradatta on ĀpŚS VIII.8.10 : आपो वाजजितो वाजं वः ससृवांसो वाजं जिग्युषी रित्यूहेन संमार्गोऽयं द्रष्टव्यः पूर्वसंमार्गे प्रदर्शितत्वात् व्यक्तोऽन्वयाश्च सत्यापाढभारद्वाजाभ्याम् ।
3. $A_{1-3}$ omitted
4. $A_{2-3}$ भिन्दु°
5-5. $A_1$ संप्रक्रिरत्यव°; $B_1$ संप्रकिरत्यव°
6. $A_1$ निचंगुण°; $A_{2-3}$ निचुंक्ण
7. For अनुपमक्षन्तौ cf. Rudradatta on ĀpŚS XIII.21.1.
8. $A_{2-3}$ °मुपति; $B_1$ °मुपतिष्ठते
9. $B_1$ विचृतति
10. Gopīnātha on SatS X.5 (p. 1092) reads अपप्लावयते in place of the last word while citing this sūtra.
11. $A_{1-3}$ °हनं

परिश्रयणं पत्नी ॥ ५ ॥ ते उदवसानीयायामध्वर्यवे दद्यः ॥ ६ ॥ तत उन्नेतारं संप्रेष्यति उन्नेतर्वसीयो न उन्नयाभि[1] ।

उदुत्ते[1] मधुमत्तमा गिरः[2] स्तोमास[2] ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ।
कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमानशुः ॥

इति ॥ ७ ॥ उन्नेता होतृप्रथमान् यजमानप्रथमान्[3] वोन्नयति[3]

उदेत प्रजामुत वर्चो दधाना युष्मान् राय उत यज्ञा असृक्षत ।
गायत्रं छन्दोऽनुसँरभध्वमथास्या[4] अथ सुरभयो गृहेषु ॥

इति ॥ ८ ॥ उद्गाहमाना[5] उदक्रान्तं प्रत्यस्यन्ति प्रतियुतो वरुणस्य पाशः इति ॥ ९ ॥ समिधः कृत्वाप्रतीक्षमायन्त्युन्नेतारं पुरस्कृत्य महीयां[6] जपन्तः अपाम सोमममृता अभूम इत्येतां

यान्यपामित्यान्यप्रतीत्तान्यस्मि[7] यमस्य बलिना चरामि ।
इहैव सन्तः प्रति[8] तद्यातयामो[8] जीवा जीवेभ्यो निहराम एनत[9] ॥
अनृणा अस्मिन्ननृणाः परस्मिँस्तृतीये लोके अनृणाः स्याम ।
ये देवयाना उत पितृयाणाः सर्वान् पथो अनृणा आक्षीयेम ॥

इति ॥ १० ॥ एधोऽस्येधिषीमहि इत्याहवनीये[10] समिध आधायोपतिष्ठन्ते अपो अन्वचारिषम् इति ॥ ११ ॥ एवं पत्नी गार्हपत्येऽभ्याधायोपतिष्ठते ॥ १२ ॥ ॥२३॥

उदयनीयायास्तन्त्रं प्रक्रमयति ॥ १ ॥ यः प्रायणीयः स उदयनीयः ॥ २ ॥ एतावन्नाना । प्रायणीयस्य निष्कास उदयनीयमोप्य श्रपयति । नाग्नेरुद्धृत्य चरुमासादयति न षड्ढोत्रा ॥ ३ ॥ शालामुखीय उदयनीयेन चरन्ति ॥ ४ ॥ याः प्रायणीयस्य पुरोनुवाक्यास्ता उदयनीयस्य याज्याः करोति ॥ ५ ॥ पथ्यां

---

1-1. $A_{1,4,5}$ °भ्युदत्ते; $B_1$ °भ्युपादत्ते. ĀpŚS XIII.21.3 reads : उदिते वसुवित्तमा
2-2. $A_1$ गिर स्तोमार्ह; $A_{2,3}$ गिरा स्तोमास; $A_{4,5}$ गिरा सोमास; $B_1$ गिर स्तेमास
3-3. $A_1$ °प्रथमार्चो°; $A_{4,5}$ °प्रथमान्यो°; Rudradatta on ĀpŚS XIII.22.1 : तत्र होतृप्रथमान् यजमानप्रथमान् वेति सत्याषाढभारद्वाजौ ।
4. $A_2$ °संरभ्य°; $A_{3-5}$,$B_1$ °संरभ्व°
5. Thus $B_1$; A उद्गाहमान
6. $A_{2-5}$ महीयान्; cf. ĀpŚS XIII.22.5
7. Thus $B_1$; $A_1$ °मीत्यान्यप्रतिता°; $A_{2,3}$ °मीत्यान्यमतीतान्यस्मिन्; $A_{4,5}$ °मित्यान्यमतीता°; cf. ĀpŚS XIII.22.5
8-8. $A_1$ मतीतद्यानयामो; $A_2$ मतीतघातयामो; $A_3$ मतितद्या°; $A_{4,5}$ मतितद्या°
9. Thus $A_{2-5}$,$B_1$; $A_{1,2}$ एतव्
10. $B_1$ इति चाहवनीये

स्वस्तिमुत्तमामाज्यभागानां यजति ॥ ६ ॥ न यजमानः प्राश्नाति ॥ ७ ॥ सिद्धमिष्टिः संतिष्ठते ॥ ८ ॥ अनूबन्ध्यायास्तन्त्रं[1] प्रक्रमयति ॥ ९ ॥ समानमा पशूपाकरणात् ॥ १० ॥ मैत्रावरुणीं वशामनूबन्ध्यामुपाकरोति ॥ ११ ॥ तिस्र एके समामनन्ति । द्विरूपां मैत्रावरुणीं बहुरूपां वैश्वदेवीं रोहिणीं बार्हस्पत्याम्[2] । उपाँशु वैश्वदेव्या मध्यतः प्रचरतीत्येकेषाम्[3] ॥ १२ ॥ समानमा वपाया होमात् ॥ १३ ॥ हुतायां वपायां दक्षिणस्यां वेदिश्रोण्यां परिश्रिते यजमानः केशश्मश्रु वापयते ॥ १४ ॥ अनूबन्ध्यायाः पशुपुरोडाशं देविकाहवी[4]ष्यनुनिर्वपति धात्रे पुरोडाशं द्वादशकपालमित्येतानि ॥ १५ ॥ उत्तमं धातारं करोति ॥ १६ ॥ यासु स्थालीषु सोमा भवन्ति तास्वेताँश्चरूँ श्रपयन्ति ॥ १७ ॥ प्रैषवान् पशुपुरोडाशः । अनुब्रूहि ॥ यज इतीतरेभ्यः संप्रेष्यति ॥ १८ ॥ सर्वेषाँ सपशुपुरोडाशानाँ[4] समानः स्विष्टकृत् प्रैषवान् । समानेडा ॥ १९ ॥ सिद्धः पशुः संतिष्ठते ॥ २० ॥ ॥२४॥

अपि वा मैत्रावरुणीमामिक्षां पशुकामः कुर्वीतानूबन्ध्याया विकल्पार्थाम् ॥ १ ॥ पुरस्तात्त्वेव केशश्मश्रु वापयते ॥ २ ॥ अग्रेण हविर्धानमासीनो होता यजति ॥ ३ ॥ देविकाहविर्भिः प्रचर्यामिक्षायै दैवतेन प्रचरति[5] ॥ ४ ॥ हविराहुतिप्रभृतीडान्ता संतिष्ठते[6] ॥ ५ ॥ तन्त्रमामिक्षायै देविकाहविषां[7] च स्विष्टकृदिडम्[8] ॥ ६ ॥ सदोहविर्धाने[9] प्रथमकृतान् ग्रन्थीन् विस्रस्य हविर्धाने उदीची अभिप्रवर्तयन्ति ॥ ७ ॥ आहवनीयाद्गार्हपत्योपपति यत्कुसीदमप्रतीत्तं[10] मयि इति ॥ ८ ॥ यदि मिथ्यमिव[11] चरेदञ्जलिना सक्तून् प्रदाव्ये जुहुयात् विश्वलोप विश्वदावस्य त्वासञ्जुहोमि इति ॥ ९ ॥ ततो देवता उपतिष्ठते अयं नो नभसा पुरः इत्याहवनीयं प्रदाव्यं वा । स त्वं नो नभसस्पते इति वायुम् । देव सँस्फान इत्यादित्यम् ॥ १० ॥ यूपमुपस्थाय पृथगरण्योष्वग्नीन् समारोपयति प्राजहितं दक्षिणाग्निम् ।

1. $A_1$ वत्र°
2. Vāñcheśvara (26a) on SatS IX.6 : रोहिणीं बार्हस्पत्यामिति भारद्वाजापस्तंबादयः
3. $A_1$,B, प्रचरंता°
4. $A_{2-3}$,B, पशु°
5. $A_1$ प्रचरंति
6. $A_1$ सं···ते
7. Gopīnātha on SatS IX.6 (p. 954): भरद्वाजोप्याह आमिक्षां करिष्यन्नाज्येन देविकाः इति । Similarly Vāñcheśvara (27a) on SatS IX.6.
8. By conjecture. MSS °दिडाम्. cf. ĀpŚS XIII.24.4,9,13
9. $A_1$ °हविर्धानं; $A_2$,B, °हविर्धानं
10. $A_1$ °मप्रतिसम; $A_2$ °मप्रतीतं
11. A ~भमिव

शालामुखीयं तृतीयं गतश्रीः[1] समारोपयते ॥ ११ ॥ अन्तरेण चात्वालोत्करावती-मोक्षान् जपन्त[2] उदवस्यन्ति यथा दर्शपूर्णमासयोः ॥ १२ ॥ प्राञ्च उदवस्यन्त्युदञ्चो वा । प्राञ्चोदञ्च इत्येकेषाम् ॥ १३ ॥ ॥२५॥

आग्नेयं पञ्चकपालमुदवसानीयं निर्वपत्यष्टाकपालं वा ॥ १ ॥ पङ्क्त्यौ याज्यानुवाक्ये भवतो यद्यष्टाकपालः । गायत्र्यौ यदि पञ्चकपालः ॥ २ ॥ अनड्वान् दक्षिणा ॥ ३ ॥ सिद्धमिष्टिः संतिष्ठते[3] यदि न त्वरेत ॥ ४ ॥ अथ यदि त्वरेत जुह्वां चतुर्गृहीतमाज्यं गृहीत्वा उरु विष्णो वि क्रमस्व इत्याहवनीये जुहुयात् ॥ ५ ॥ यत्तत्र शक्नुयात् तद्द्यात् ॥ ६ ॥ स[4] यावद्रात्रे चेष्टिः संतिष्ठते तावद्रात्र[4] एव सायमग्निहोत्रं जुहुयात् । काल एव प्रातरग्निहोत्रम् ॥ ७ ॥ उदयनीयाप्रभृति यज्ञपुच्छम् ॥ ८ ॥ सद्यः सुत्या संतिष्ठते ॥ ९ ॥ अथ यदि सुत्या यदग्निहोत्र-कालमभ्यतीयात्[5] सायमग्निहोत्रप्रभृतीन्यग्निहोत्राण्यतिपन्नानि प्रतिजुहुयात् । न[6] वा प्रतिजुहुयात्[6] ॥ १० ॥ यो राजा सन् राज्यो वा सोमेन यजते स देवसुवाँ हवी[7]ष्यनुनिर्वपति ॥ ११ ॥ तेषाँ राजसूय एव कल्पो व्याख्यातोऽन्यत्र हस्ति-ग्रहणादावेदनान्मुखविमार्जनादिति[8] ॥ १२ ॥ वसन्तेवसन्ते[9] ज्योतिष्टोमेन यजेत । तस्य तिस्रो दक्षिणा इति विज्ञायते ॥ १३ ॥ संतिष्ठते ज्योतिष्टोमः संतिष्ठते ज्योतिष्टोमः[9] ॥ १४ ॥ ॥२६॥

॥ इति[10] चतुर्दशः प्रश्नः[10] ॥

---

1. Rudradatta on ĀpŚS XIII.25.3 : यथाहतुः सत्याषाढभारद्वाजौ शालामुखीयं तृतीयं गतश्रिय इति ।
2. $A_1$,$B_1$ जपंते
3. $A_1$ संतिष्ठेत
4–4. Emended; $A_1$ एव क्रियाद्रात्रे चेष्टिः संतिष्ठते तावद्रात्र एव; $A_{2-3}$ स यावद्रात्र
5. $A_2$ यदग्नि°; $B_1$ यदाग्निहोत्रकालमेवाभ्यतीयात्; Rudradatta on ĀpŚS XIII.25.9 exactly quotes this entire sūtra except the reading °प्रतीयात् for. अभ्यतीयात्. Vāñcheśvara (29a) and Gopīnātha (p. 957) on SatS IX.7 have cited this sūtra in somewhat incorrect form.
6–6. $A_{2-3}$ omitted
7. By conjecture. MSS हस्तिग्रह°
8. $A_{1,2,3}$ omitted
9. Rudradatta on ĀpŚS XIV.1.1 : तथा भारद्वाजेनाप्यत्र ज्योतिष्टोमं प्रकृत्य पठेता प्रकृतिसंस्था उक्त्वा ततो यज्ञपुच्छमभिधायान्तत उपसंहृतं संतिष्ठते ज्योतिष्टोम इति : Similarly Gopīnātha on SatS IX.7 (p. 959)
10. Thus $B_1$ which ends here; $A_1$ omitted; $A_{2,3}$ ॥ इति ॐ ॥ ॥ नवमः प्रश्नः ॥

## अथ पञ्चदशः प्रश्नः

सोमे[1] वासिष्ठो ब्रह्मा भवति ॥ १ ॥ अप्यवासिष्ठं कुर्वीत यः कश्च स्तोमभागान् विद्यादिति विज्ञायते ॥ २ ॥ राज्ञो मीयमानस्य क्रीयमाणस्येति[2] दक्षिणत आस्ते ॥ ३ ॥ ओह्यमानस्य दक्षिणत[3] एति ॥ ४ ॥ महावेद्या उत्तरवेद्या[4] इति क्रियमाणाया दक्षिणत[5] आस्ते ॥ ५ ॥ यत्र सदोहविर्धानानि संमास्यन्तो[6] भवन्ति तदन्तरेण चात्वालोत्करावन्ववेत्योत्तरं वेद्यन्तमनुपरीत्य पूर्वया द्वारा प्राग्वंशं प्रविश्यापरेणाहवनीयमतिक्रम्य पूर्वया द्वारोपनिष्क्रम्य दक्षिणं वेद्यन्तमनुपरीत्य दक्षिणेनोत्तरवेदिमुपविशेदित्याश्मरथ्यः[7] । अन्तरेण चात्वालोत्करावन्ववेत्यापरेणोत्तरवेदिमतिक्रम्य दक्षिणत उपविशेदित्यालेखनः[8] ॥ ६ ॥ सोऽत्रैवास्त[8] आ वैसर्जनानां होमात् ॥ ७ ॥ यत्र वैसर्जनानि होष्यन्तो भवन्ति दक्षिणेन हविर्धाने[9] दक्षिणेन मार्जालीयं दक्षिणेन सदः परीत्य पूर्वया द्वारा प्राग्वंशं प्रविश्याग्रेण शालामुखीयमतिक्रम्य दक्षिणत उपविशेदित्याश्मरथ्यः । अपरेणोत्तरवेदिमतिक्रम्योत्तरेण हविर्धाने उत्तरेणाग्नीध्रीयमुत्तरेण सदः परीत्य पूर्वया द्वारा प्राग्वंशं प्रविश्यापरेण शालामुखीयमतिक्रम्य दक्षिणत उपविशेदित्यालेखनः ॥ ८ ॥ ॥१॥

उपस्थे[10] ब्रह्मा राजानं कुरुते ॥ १ ॥ हुते वैसर्जनेऽन्वङ्ङग्नेः[11] प्रतिपद्यते ॥ २ ॥ आग्नीध्रीयं प्राप्य प्रतिप्रस्थात्रे राजानं प्रदाय यथेतं प्रतिपरीत्य पूर्वया द्वारोपनिष्क्रम्य दक्षिणेन सदो दक्षिणेन मार्जालीयं परीत्य दक्षिणेनाग्नीध्रीयमुपविशेदित्याश्मरथ्यः[12] । एतमेवाग्निमुत्तरतः परीत्य दक्षिणत उपविशेदित्यालेखनः

---

1. $A_1$ सोमो
2. $A_1$ क्रिय°
3. $A_{2-5}$ दक्षिण
4. $A_1$ omitted
5. Emended; MSS दक्षिण
6. Emended; $A_1$ संमायतो; $A_{2-5}$ संमास्यंतो
7. $A_1$ नोत्तरवे…विशेदि°; $A_{2-5}$ °मुपवपेदि°

8-8. $A_1$ °दित्य…न सोत्रै°; $A_{2-5}$ °दित्यालेखनस्तोत्रै°

9. By conjecture; MSS हविर्धानेन. Compare however उत्तरेण हविर्धाने in the same sūtra.
10. $A_1$ उपर…
11. $A_1$ °न्वङ्ङग्ने
12. $A_{2-5}$ दक्षिणेनाग्नीध°

॥ ३ ॥ उपस्थे ब्रह्मा राजानं कुरुते ॥ ४ ॥ हुते वैसर्जने पूर्वः प्रतिपद्यते ॥ ५ ॥ हविर्धाने प्राप्य प्रतिप्रस्थात्रे राजानं प्रदाय दक्षिणेन हविर्धाने परीत्य दक्षिणेनोत्तरवेदिमुपविशेदित्याश्मरथ्यः । उत्तरेण हविर्धानेऽपरेणोत्तरवेदिमतिक्रम्य दक्षिणत उपविशेदित्यालेखनः ॥ ६ ॥ सोऽत्रैवास्त आग्नीषोमीयस्य वपाया होमात् ॥ ७ ॥ हुतायां वपायां यत्र मार्जयन्ते तन्मार्जयते[1] ॥ ८ ॥ ॥२॥

यत्र वसतीवरीर्ग्रहीष्यन्तो भवन्ति तद्दक्षिणत एति ॥ १ ॥ गृह्यमाणानां दक्षिणत आस्ते[2] ॥ २ ॥ यत्र प्रातरनुवाकाय बुध्यन्ते तद् बुध्यते ॥ ३ ॥ तस्य स एव संचरो यः सदोहविर्धानानि संमास्यत्सु[3] ॥ ४ ॥ प्रातरनुवाक उपाकृते वाचं यच्छत्या परिधानीयायाः ॥ ५ ॥ यत्र सवनीया अपो ग्रहीष्यन्तो भवन्ति तद्दक्षिणत एति ॥ ६ ॥ गृह्यमाणानां दक्षिणत आस्ते ॥ ७ ॥ आह्रियमाणानां दक्षिणत एति ॥ ८ ॥ यत्र राजानमभिषोष्यन्तो भवन्ति तत् पूर्वया द्वारा हविर्धानं प्रविश्याग्रेण खरमतिक्रम्य दक्षिणत उपविशति ॥ ९ ॥ राज्ञो मीयमानस्याभिषूयमाणस्येति दक्षिणत आस्ते ॥ १० ॥ ग्रहेषु गृह्यमाणेषु वाचं यच्छत्याग्रयणात् ॥ ११ ॥ एवमेव सवनेसवने राज्ञोऽभिषूयमाणस्य दक्षिणत आस्ते ग्रहेषु गृह्यमाणेषु वाचं यच्छति ॥ १२ ॥ यत्र बहिष्पवमानं सर्पन्ति तत् समन्वारब्धः सर्पति ॥ १३ ॥ स्तोष्यमाणानां दक्षिणत उपविशति ॥ १४ ॥ ॥३॥

यत्रैनमामन्त्रयते ब्रह्मन् स्तोष्यामः प्रशास्तः इति तत् प्रसौति हिं देव सवितरेतत्ते प्राह तत् [illegible] च सुव प्र च यज बृहस्पतिर्ब्रह्मायुष्मत्या ऋचो मा गात तनूपात्साम्नः सत्या व आशिषः सन्तु सत्या आकूतय ऋतं च सत्यं च वदत स्तुत देवस्य सवितुः प्रसवे । रश्मिरसि क्षयाय त्वा क्षयं जिन्व[4] स्तुत इति ॥ १ ॥ एवमेव[4] स्तोत्रेस्तोत्रे[5] प्रसौति ॥ २ ॥ एवं स्तोमभागानामुत्तरमुत्तरं दधाति ॥ ३ ॥ द्वादशाग्निष्टोमे । त्रयोदशात्यग्निष्टोमे[6] । पञ्चदशोक्थ्ये[6] । षोडश षोडशिनि । सप्तदश वाजपेये । एकान्नत्रिंशतमतिरात्रे । त्रयस्त्रिंशतमप्तोर्याम[7] इति विज्ञायते[7] ॥ ४ ॥

1. $A_{2-5}$ omitted
2. $A_{2-5}$ एति ॥ परिह्रियमाणाना दक्षिणत आस्ते; cf. ĀpSS XIV.9.3: वसतीवरीषु परिह्रियमाणासु दक्षिणत आस्ते ।
3. Emended; $A_1$ सममास्यात्सु; $A_{2-5}$ सममास्यत्सु
4-4. A जिन्वे:…वमेव
5. $A_{2-5}$ omitted
6-6. $A_1$ °त्यग्नि…दशोक्थ्ये
7-7. $A_1$ °मप्तोर्याम इति…यते; $A_{2-5}$ °मतिरात्र इति विज्ञायते

स्तुते बहिष्पवमानेऽपरेणोत्तरवेदिमतिक्रम्य दक्षिणत उपविशति। सोऽग्नैवास्त[1] आ सवनीयस्य वपाया होमात् ॥ ५ ॥ हुतायां वपायां यत्र मार्जयन्ते तन्मार्जयते ॥ ६ ॥ यत्र प्रातःसवनाय संप्रसर्पन्ति तद्दक्षिणेन हविर्धाने दक्षिणेन मार्जालीयं दक्षिणेन सदः परीत्यापरया द्वारा सदः प्रविश्यापरेण प्रशास्त्रीयमतिक्रम्य दक्षिणत उपविशेदित्याश्मरथ्यः। अपरेणोत्तरवेदिमतिक्रम्योत्तरेण हविर्धाने दक्षिणेन मार्जालीयं परीत्य पूर्वया द्वारा सदः प्रविश्याग्रेण प्रशास्त्रीयमतिक्रम्य दक्षिणत उपविशेदित्यालेखनः ॥ ७ ॥ ॥४[2]॥

एतेनोत्तरयोः सवनयोः ॥ १ ॥

# भारद्वाजपैतृमेधिकसूत्रम्

## अथ प्रथमः प्रश्नः

अथातः[1] पैतृमेधिकं दहनम्[2]। पुरुषाहुतिर्ह्यस्य[3] प्रियतमेति विज्ञायते[3] ॥ १ ॥ आहिताग्नेर्मरणसँशये प्राचीनावीती दहनदेशं जोषयते दक्षिणाप्रत्यक्प्रवणमनिरिणमसुषिरमनूषरमभङ्गुरमनुपहतमविस्रग्दार्यनुपच्छिन्नप्रवणम्[4] ॥ २ ॥ यस्माद्दक्षिणाप्रतीच्य आपो निःसृत्योदीच्य एत्य महानदीमवेत्य[5] प्राच्यः संपद्यन्ते ॥ ३ ॥ समं वा सुभूमि बहुलौषधम्[6] ॥ ४ ॥ वनस्यावनं क्षेत्रस्याक्षेत्रमिरिणस्यानिरिणमित्येके ॥ ५ ॥ यस्मादारात् क्षीरिणो वृक्षाः काण्टकिनश्च[7] तथौषध्यः[8] ॥ ६ ॥ तस्मिँस्त्रेधोल्लिख्योद्धत्यावोक्ष्य[9] गार्हपत्यं मथित्वाहवनीयं ज्वलन्तमुद्धरति ॥ ७ ॥ अन्तरा दारुचितेरवकाशँ शिष्ट्वाग्नीनुपवपति पुरस्तादाहवनीयं पश्चाद् गार्हपत्यं दक्षिणतोऽन्वाहार्यपचनं पुरस्तात् सभ्यावसथ्यावौपासनं च ॥ ८ ॥ तेष्वजस्रेषु जुह्वद् वसति ॥ ९ ॥ प्राणा वा एत[10] आहिताग्नेर्यदग्नयस्त[10] एनँ सुसमिद्धाः[11] पारयन्त्यगदो हैव[12] भवतीति विज्ञायते ॥ १० ॥ तस्यैतदग्निहोत्रोच्छेषणं निदधाति ॥ ११ ॥ ग्रामे वास्यैतेन कल्पेन जुहुयात् ॥ १२ ॥ यदि जीवेत् पिबेदेतदग्निहोत्रोच्छेषणम् ॥ १३ ॥ यदि मरणसँशये[13] ब्रह्मविदाप्नोति परम् ॥ भृगुर्वै वारुणिः इत्येतावनुवाकौ ब्रह्मविदो दक्षिणे कर्णे जपति। इतरस्य[14] आयुषः प्राणँ संतनु इति वा[15] ॥ १४ ॥ यदि प्रैति प्रेतेऽमात्याः प्राचीनावीतिनः केशान्

---

1. T begins with श्रीगणेशाय नमः.
2. HA omitted
3–3. Omitted in T. Sāyaṇa on TĀ VI.1 quotes : तत्र आहिताग्नेर्मरणसंशये दहनदेशं जोषयते दक्षिणाप्रत्यक्प्रवणम् इत्यारभ्य भरद्वाज आह etc.
4. Ap °दार्ये(म)नुप°; HA °मनूपहतमविस्रग्धार्यमनुपच्छन्नं प्रवणम्
5. HA °मुपेत्य; $T_2$ °मेत्य
6. H °षांधि; $T_2$ °षधि
7. HA कण्ट°
8. $T_1$, HC, तथौषधीः; HA तथौषधिः; $T_2$ तत्रौषधोः
9. HA °क्षियो°
10–10. HA एतदादि°
11. HC समिद्धाः; $T_1$ समिधाः; $T_2$ समिधः
12. H ह; $T_1$ हं; $T_2$ हँ
13. HC मरणं शङ्केत
14. HC omitted; HA इतरस्या
15. HA omitted

प्रकीर्य पांसूनावपन्ति ॥ १५ ॥ तं[1] जघनेन[1] गार्हपत्यं दक्षिणाशिरसं दर्भेषु संवेशयन्ति सर्वस्य प्रतिशीवरी इति ॥ १६ ॥ सर्वेषु संवेशनेषु दक्षिणाशिराः[2] ॥ १७ ॥ पूर्वया द्वारोपनिर्हृत्यान्तराग्नी निधायान्वारब्धे मृत आहवनीये स्रुवाहुतिं जुहोति परे युवांसम् इति[3] ॥ १८ ॥ एवं गार्हपत्ये ॥ १९ ॥ तूष्णीमन्वाहार्यपचने[4] सभ्यावसथ्ययोरौपासने[5] च[5] ॥ २० ॥ अथास्य दक्षिणेन विहारं प्रेतस्य[6] केशश्मश्रुलोमनखानि वापयित्वा स्नापयित्वाच्छाद्य[7] ग्राम्येणालंकारेणालंकृत्य[8] शुक्लसूत्रेणाङ्गुष्ठौ बद्ध्वा नलदमालामाबध्य ॥ २१ ॥ ॥२॥

औदुम्बर्यामासन्द्यां कृष्णाजिनं दक्षिणाग्रीवमधरलोमास्तीर्य तस्मिन्नेनमुत्तानं निपात्य पत्तोदशेनाहतेन वाससा प्रोर्णोति इदं त्वा वस्त्रम् इति[9] ॥ १ ॥ अथास्येतरदादत्ते अपैतदूह इति ॥ २ ॥ तत्पुत्रो भ्राता वान्यो वा प्रत्यासन्नबन्धुः प्रतीतः परिधाया[10] जरसो वसीत ॥ ३ ॥ अपरेणाहवनीयं प्रतीचीस्तिस्र उलपराजीः स्तीर्त्वापरापावमवहतानां व्रीहीणामन्वाहार्यपचने तूष्णीमुपचरितं चरुं श्रपयति ॥ ४ ॥ गार्हपत्ये च मैत्रावरुणीमामिक्षां यदि सोमयाजी[11] भवति ॥ ५ ॥ पालाशं काष्ठमग्न्यगारे तृणैर्गार्हपत्य आदीप्य तेनोल्मुकप्रथमा[12] गच्छन्ति ॥ ६ ॥ अजमनुनयन्ति राजगवीं[13] सव्ये पदि बद्धामग्नीनग्निभाण्डमग्निहोत्रोच्छेपणमिति ॥ ७ ॥ येन[13] चान्येनार्थी भवति[13] ॥ ८ ॥ न हीनमन्वाहरेयुः ॥ ९ ॥ अथ[14] तमादधते[14] ॥ १० ॥ अनसा वहन्तीत्येके ॥ ११ ॥ कृष्णगवं स्यादिति शाट्यायनकम् ॥ १२ ॥ इमौ युनज्मि इत्येष योजन आम्नातः ॥ १३ ॥ आदीयमानमनुमन्त्रयते

1-1. Ap तज्जघनेन
2. $T_1$ दक्षिणाशिरसं
3. Sāyaṇa on TĀ VI.1 quotes this sūtra verbatim beginning with अन्वारब्धे.
4. HA तूष्णीं omitted
5-5. HC omitted
6. H परिश्रिते प्रेतस्य
7. H आछाद्य omitted
8. HA अलंकारेण omitted
9. Sāyaṇa on TĀ VI.1 cites this sūtra verbatim.
10. Sāyaṇa on TĀ VI.1 quotes sūtra 2 and also sūtra 3 up to परिधाय verbatim.
11. HC सोमाध्ययाजी
12. HA तेनोल्मुकेन
13-13. HC एतान्यनुहरन्ति, $T_2$ omitted
14-14. HA अथैनमादधते

पूषा त्वेतश्च्यावयतु इति ॥ १४ ॥ तुरीयमध्वनो गत्वा निधाय दक्षिणतो लोष्टान-वरुज्य तेषु चरुं प्रतिष्ठाप्यैकवाससो दक्षिणान् केशपक्षानुद्ग्रथ्य सव्यान् प्रस्रस्य[1] दक्षिणानूरूनाघ्नानाः सिग्भिरभिधून्वन्तस्त्रिः[2] प्रसव्यं परियन्ति अप नः शोशुचदघम् इति ॥ १५ ॥ सव्यानुद्ग्रथ्य दक्षिणान् प्रस्रस्य सव्यानूरूनाघ्नाना अनभिधून्वन्तस्त्रिः प्रतिपरियन्ति अप नः शोशुचदघम् इति ॥ १६ ॥ मेक्षणेन लोष्टेषु चरोस्त्रिः प्रयौति ॥ १७ ॥ ॥२॥

परीत्यपरीत्य प्रयौतीत्येके ॥ १ ॥ आदीयमानमनुमन्त्रयते पूषेम आशाः इति ॥ २ ॥ तुरीयमध्वनो गत्वा निधाय पूर्ववत् कृत्वादीयमानमनुमन्त्रयते आयुर्विश्वायुः इति ॥ ३ ॥ तुरीयमध्वनो गत्वा निधाय पूर्ववत् कृत्वा तृतीयेन सह चरुं प्रक्षिणुयात्[3] ॥ ४ ॥ अथास्य कपालानि सुसंभिन्नानि संभिनत्ति यथैषूदकं न तिष्ठेत् ॥ ५ ॥ तूष्णीं चतुर्थमादाय गत्वा जघनेन दहनदेशं निधायोदञ्चः समुत्क्रामन्ति । एषा[4] वै देवमनुष्याणां शान्ता दिक् तामेवैनामनूत्क्रामन्तीति[5] विज्ञायते ॥ ६ ॥ प्रत्येत्य हरिण्या पलाशशाखया शमीशाखया वा श्मशानायतनँ संमार्ष्टि अपेत वीत इति ॥ ७ ॥ दक्षिणतः शाखामुदसित्वाप उपस्पृश्योद्धत्यावोक्ष्य[6] हिरण्यशकलमवधाय[7] तस्मिन् दक्षिणाग्रान् दर्भान् सँस्तीर्य तेषु दक्षिणाग्रैर्याज्ञिकैः[8] काष्ठैर्दारुचितिं चित्वाग्नीनुपवपति पुरस्तादाहवनीयं पश्चाद्गार्हपत्यं दक्षिणतोऽन्वाहार्यपचनं पुरस्तात् सभ्यावसथ्यावौपासनं च ॥ ८ ॥ दक्षिणाप्रागग्रैर्दर्भैरग्नीन्[9] दारुचितिं च परिस्तीर्य दक्षिणतः[10] पश्चाद्वा[10] दर्भान् सँस्तीर्य[11] दक्षिणाप्राञ्च्येकैकशः[12] पात्राणि प्रयुनक्ति ॥ ९ ॥ रज्जूरवकृत्यासन्दीमपविध्यन्ति[13] ॥ १० ॥ रज्जुषु चैव कृष्णाजिने चोत्तानः शेते ॥ ११ ॥

1. HA विस्रस्य
2. HA °रवधून्व°
3. HA प्रक्षुणु°
4. HA इत्येषा
5. HA °नानत्रूत्क्रामन्त°
6. HA,Āp °वोक्ष्य मध्ये
7. Āp,HA °शकलं निधाय
8. Āp °र्याज्ञियैः
9. HA,$T_2$ °रग्नि
10-10. HC दारुचितेः पश्चात्
11. HA सँस्तीर्य चितेर्दक्षिणतः
12. HC तेष्वेकैकशः
13. HA °रपकृष्या°

एकपवित्रेण प्रोक्षणीः सँस्कृत्य भूतं पात्राणि दारुचितिं च प्रोक्ष्याज्यानि[1] गृह्णाति दर्शपूर्णमासवत् तूष्णीम् ॥ १२ ॥ अग्निहोत्रोच्छेपणमन्येन दध्ना सँसृज्य पात्राणि पूरयति[2] यान्यासेचनवन्ति । अभ्युक्षतीतराण्यरिक्तताया इति विज्ञायते ॥ १३ ॥ ॥३[3]॥

अथैनमुदरे विदार्य निरान्त्रं निष्पुरीषं कृत्वान्त्रटे पुरीषमवधाय प्रक्षाल्य[4] प्रत्यवधाय[4] सर्पिषा पूरयतीति शाट्यायनकम् ॥ १ ॥ अपि वा न निष्पुरीषं कुर्यात् । यदि कुर्यात् प्रजा हास्य क्षोधुका भवतीति[5] विज्ञायते ॥ २ ॥ अत्र राजगवीमुपाकरोति भुवनस्य पत इति जरतीं मूर्खां तज्जघन्यां कृष्णां कृष्णाक्षीं कृष्णवालां कृष्णखुराम् ॥ ३ ॥ अपि वाक्षिवालखुरमेव[6] कृष्णं[7] स्यात् ॥ ४ ॥ तां ज्ञातयोऽन्वारभन्ते ॥ ५ ॥ अथास्यन्वप्रदेशः । धून्वनेऽन्वारम्भणे संवाहने सँसर्पण उदकोपस्पर्शन आरोहण इति सर्वत्र कनिष्ठप्रथमा अनुपूर्वा इतरे स्त्रियोऽग्रे ॥ ६ ॥ तां घ्नन्त्युत्सृजन्ति वा[8] ॥ ७ ॥ यद्युत्सृजन्ति अपश्याम युवतिमाचरन्तीम् इत्येताभिस्तिसृभिस्तिः प्रसव्यं[9] राजगवीमग्नीन्[10] दारुचितिं च परिणीय ये जीवा इत्यभिमन्त्र्य माता रुद्राणाम् इति द्वाभ्यामुत्सृजन्ति ॥ ८ ॥ ॥ ४ ॥

यदि घ्नन्ति ततः संज्ञप्यन्ति अपिधाय मुखं दक्षिणापदीं प्रत्यक्शिरसीं घ्नत इति ॥ १ ॥ निहन्यमानायाँ[11] सव्यानि जानून्यनुनिघ्नन्तः पाँसूनवसृजन्ते[12] पुरुषस्य सयावरि इति ॥ २ ॥ अथाह विशंसयत इति ॥ ३ ॥ विशस्यमानामनुमन्त्रयते[13]

1. Ap प्रोक्ष्याज्यं निरुप्याथाज्यानि
2. $T_1$ मतापूरयति
3. HA adds : इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे (पितृमेधापरपर्याये) ऽष्टाविंशप्रश्ने प्रथमः पटलः ॥ १ ॥
4-4. HA आन्त्राणि प्रक्षाल्य प्रत्यवधाय; $T_2$ omitted
5. HA भवन्तीति
6. HA °खुरामेव
7. HA कृष्णा; Sāyaṇa on TĀ VI.1 cites sūtras 3 and 4 verbatim.
8. Cited verbatim by Sāyaṇa on TĀ VI.1.
9. Sāyaṇa on TĀ VI.12 cites : युवतिमाचरन्तीं सचस्वा नः स्वस्तय इत्येताभि-स्तिसृभिः प्रसव्यं etc.
10. HA °ग्नीन्; Sāyaṇa on TĀ VI.12 °मग्नीन् प्रेतं
11. H,$T_2$ °मानायाः
12. HA °सृजन्ति; Sāyaṇa on TĀ VI.1 cites : यदि विघ्नन्ति तस्यां निहन्यमानायां... पुरुषस्य
13. HA विशस्य°

पुरुषस्य सयावरि वि ते प्राणमसिस्रसम् इति ॥ ४ ॥ ततः संप्रेष्यति अङ्गादङ्गाद-नस्थिकानि पिशितान्युत्खिद्याप्रकाशयन्तोऽप्रध्वंसयन्त[1] उल्मुकैः श्रपयतात् प्रज्ञातं हृदयं निधत्तात् प्रज्ञातौ[2] वृक्यौ[2] प्रज्ञातं[3] मेदः[3] प्रज्ञातां वपां प्रज्ञातं सप्तादवाल्लशीर्षिचर्म इति ॥ ५ ॥ अत्र[4] पत्नीमुपनिपातयति इयं नारी इति ॥ ६ ॥ तां प्रतित्थ[5] एकधने-नोत्थापयत्यन्यो वा ब्राह्मणः उदीर्ष्व नारि इति ॥ ७ ॥ अत्र पत्नी साहस्रं[6] वरं ददाति ॥ ८ ॥ हस्तौ[7] संमार्ष्टि ॥ ९ ॥ सुवर्णेन ब्राह्मणस्य सुवर्णं हस्तात् इति ॥ १० ॥ धनुषा राजन्यस्य धनुर्हस्तात् इति ॥ ११ ॥ मणिना वैश्यस्य मणिं हस्तात् इति ॥ १२ ॥ अथैनं चितावुपर्यध्यूहति ॥ १३ ॥ अत्र वा पत्न्याः संवेशनादि क्रियते ॥ १४ ॥ अथास्य प्राणायतनेषु हिरण्यशल्कान् प्रत्यस्यत्याज्य-बिन्दून् वा ॥ १५ ॥ पात्राणि चिनोति ॥ १६ ॥ सर्वाण्यनुलोमानि ध्रुवावर्जम् ॥ १७ ॥ तस्य दक्षिणे[8] हस्ते स्फ्यं जुहूं च निदधाति ॥ १८ ॥ सव्य[9] उपभृतम्[9] ॥ १९ ॥ उरसि ध्रुवामरणीं च ॥ २० ॥ ॥५॥

मुखेऽग्निहोत्रहवणीम् ॥ १ ॥ नासिकयोः स्रुवौ ॥ २ ॥ अक्ष्योर्हिरण्य-शकलावाज्यस्रुवौ[10] वा ॥ ३ ॥ कर्णयोः प्राशित्रहरणे[11] भित्त्वा वैकम्[12] ॥ ४ ॥ हन्वोरुलूखलमुसले ॥ ५ ॥ दत्सु ग्राव्णो यदि[13] ग्रावाणो भवन्ति[13] ॥ ६ ॥ शिरसि कपालानि ॥ ७ ॥ ललाट एककपालम् ॥ ८ ॥ उदरे पिष्टसंयवनीं पात्रीम् ॥ ९ ॥ नाभ्यामाज्यस्थालीम्[14] ॥ १० ॥ पार्श्वयोः शूर्पे छित्त्वा वैकम् ॥ ११ ॥ वङ्क्षणयोः सांनाय्यकुम्भ्यौ यदि[15] संनयति[15] ॥ १२ ॥ अण्डयोर्दृषदुपले ॥ १३ ॥

1. HC पिशितान्युत्खिद्यन्तोऽप°
2–2. HC प्रज्ञातौ मतस्नौ; T omitted
3–3. HA प्रज्ञातमेव
4. Āp,HC अथ
5. Thus T; HC प्रतिस्थ; HA प्रविद्य; Āp प्रतीत्य
6. HA सहस्रं
7. HA प्रेतस्य हस्तौ
8. HA दक्षिण
9–9. HA सव्यमुप°
10. T₂ अक्ष्णो°; HA अक्ष्णोर्हिरण्यशकलावाज्यस्थाली पृषदाज्यस्थाली स्रुचौ; T₁ °स्रुचौ
11. HA,Āp °हरणं
12. T चैकं; H,Āp omitted. cf. sūtra 11
13-13. HC,Āp omitted
14. HA °स्थाली पृषदाज्यस्थाली च
15-15. HA,Āp omitted

शिश्ने धृपारवं[1] शम्यां च ॥ १४ ॥ प्रतिष्ठयोरग्निहोत्रस्थालीमन्वाहार्यस्थालीं[2] च ॥ १५ ॥ पत्त उपावहरणीयं कूर्चम् ॥ १६ ॥ वेदं शिखायाम् ॥ १७ ॥ शिरस्त उपसादनीयमिडापात्रं च ॥ १८ ॥ इममग्ने चमसम् इति मध्ये चमसम् ॥ १९ ॥ अवशिष्टान्यन्तरा सक्थिनी ॥ २० ॥ स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकमेतीति विज्ञायते ॥ २१ ॥ उल्मुके विधूष्काण्यचदानानि श्रपयित्वा हृदयेऽस्य हृदयं निदधाति ॥ २२ ॥ दक्षिणे हस्ते दक्षिणं धृक्यं[3] सव्ये सव्यं श्यामशबलाभ्यां त्वा इति ॥ २३ ॥ हस्तयोरेव[4] मैत्रावरुणीमामिक्षां मित्रावरुणाभ्यां त्वा इति[4] ॥ २४ ॥ वपयास्य मुखं प्रोर्णोति मेदसा शिरः संप्रोर्णुष्व मेदसा पीवसा च इति ॥ २५ ॥ ॥६॥

अथैनं सपादवालशीर्षचर्मणोत्तरलोम्ना प्रोर्णोति अग्नेर्वर्म इति ॥ १ ॥ अथैनमुपोषति मैनमग्ने विदहः इति पुरस्तादाहवनीयेन शृतं यदा इति पश्चाद्गार्हपत्येन तूष्णीं दक्षिणतोऽन्वाहार्यपचनेन पुरस्तात् सभ्यावसथ्याभ्यामौपासनेन च ॥ २ ॥ अथैनमुपतिष्ठते सूर्यं ते चक्षुः इति ॥ ३ ॥ विज्ञानमुपैति । यद्यूर्ध्वो धूम उदियाद् द्युलोको भवतीति विज्ञायते । यद्यन्तरिक्षमन्तरिक्षलोकः । यदि पृथिवीं पृथिवीलोकः ॥ ४ ॥ जघनेन चितिमजमबलेन शुल्बेन संबध्नाति ॥ ५ ॥ अजो भागः इत्युद्द्रवन्तमनुमन्त्रयते ॥ ६ ॥ अत्रैतद्धविरिडसूनेन[5] पाण्या चमसेन वा जुहोति अग्नये रयिमते स्वाहा इति ॥ ७ ॥ नव च स्रुवाहुतीः य एतस्य पथो गोप्तारः इति ॥ ८ ॥ अत्रोभयं प्रहरति येन जुहोति ॥ ९ ॥ अपरेणाग्निं प्राङ्मुख उपविश्याथैनं याम्येन सूक्तेन नवर्चेन पराचानुशंसति प्र केतुना इति ॥ १० ॥ जघनेन दहनदेशमुदीचीस्तिस्रः कर्षूः खात्वाश्मभिः सिकताभिश्चोपप्रकीर्योयुग्भिरुदकुम्भैरपः[6] परिप्लाव्य तासु ज्ञातयः संगाहन्ते अश्मन्वती रेवतीः इति ॥ ११ ॥ ॥७॥

जघनेन कर्षूः पलाशशाखे शमीशाखे वा निघ्नन्ति ॥ १ ॥ अथैने दर्भमयेन शुल्बेन संबध्य[7] ते अन्तरेण प्रसर्पन्ति यद्वै देवस्य सवितुः पवित्रम् इति

1. HA अश्मानं
2. $T_1$ धृष्टयो°; $T_2$ धृष्ट्यो°
3. HC मतस्नं; T हस्तं
4–4. HC,Ap omitted
5. T °रिडगूलेन; cited verbatim by Sāyaṇa on TĀ VI.1
6. Āp °श्चाभिप्रकीर्यो°; HA °श्चावकीर्यो°; Sāyaṇa on TĀ VI.3 cites this sūtra reading प्रकीर्ययुग्भिः for उपप्रकीर्यायुग्भिः.
7. T संबध्नाति

॥ २ ॥ जघन्यः शाखे व्युदस्यति या राष्ट्रात् पन्नात् इति ॥ ३ ॥ उद्वयं तमसस्परि इत्यादित्यमुपस्थायानवेक्षमाणा अपोऽवगाहन्ते धाता पुनातु सविता पुनातु इति[1] ॥ ४ ॥ केशान् प्रकीर्य पाँसूनोप्यैकवाससो दक्षिणामुखाः सकृदुपमज्ज्योत्तीर्योपविशन्ति[2] ॥ ५ ॥ एवं त्रिः ॥ ६ ॥ तत्रत्यमुदकमुत्सिच्याहरहरञ्जलिनैकोत्तरवृद्धिरैकादशाहात्[3] ॥ ७ ॥ अप्रतीक्षा ग्राममेत्य यत् स्त्रिय आहुस्तत् कुर्वन्ति ॥ ८ ॥ अनशनानध्ययनाधःशय्योदकोपस्पर्शनान्या कालम् ॥ ९ ॥ अनूचानेषु[4] त्र्यहं[5] त्र्यहं षडहं[6] द्वादशाहं वा[7] ॥ १० ॥ गुरुष्वनशनवर्जं[8] संवत्सरम् ॥ ११ ॥ मातरि पितर्याचार्य इत्येके ॥ १२ ॥ अनशनानध्ययनवर्जं[9] यावज्जीवं प्रेतपत्न्युदकोपस्पर्शनमेकभुक्तमधःशय्या[10] ब्रह्मचर्यं क्षारलवणमधुमांसवर्जं[11] च ॥ १३ ॥ ॥८[12]॥

अपरेद्युस्तृतीयस्यां पञ्चम्यां सप्तम्यां वाऽर्थानि संचिन्वन्ति ॥ १ ॥ क्षीरोदसिक्तेनोदकेनोदुम्बरशाखयाप्रकाथयञ्छरीराण्यवोक्षति[13] यं ते अग्निममन्थाम इति पञ्चभिः ॥ २ ॥ अत एवाङ्गारान् दक्षिणा[14] निर्वर्त्य तिस्रः स्रुवाहुतीर्जुहोति अव सृज इति प्रतिमन्त्रम् ॥ ३ ॥ अयुग्भिरुदकुम्भैः स्ववोक्षितमवोक्ष्यायुजः स्त्रियः संचिन्वन्ति ॥ ४ ॥ यस्याः पुनर्विजननं[15] न स्यात् सा सव्ये हस्ते नीललोहिताभ्याँ सूत्राभ्यां बृहतीफलमाबध्य सव्येन पदाश्मानमास्थाय सव्येन पाणिना प्रथमानन्वीक्षमाणास्थीन्यादत्ते उत्तिष्ठातः इति दन्तुयः शिरसो वा ॥ ५ ॥ तद्वासिसि

---

1. Cited verbatim by Sāyaṇa on TĀ VI.3.
2. HC has वासः पीडयित्वा before उपविशन्ति; HA has सव्यं बान्धाध्य वासः पीडयित्वा-
3. HA, Āp, $T_2$ read sūtras 7 and 8 differently: तत्रत्यं तिलमिश्रमुदकमुत्सिच्या. प्रतीक्षा ग्राममेत्य यत् स्त्रिय आहुस्तत् कुर्वन्ति ॥ ७ ॥ अहरहरञ्जलिनैकोत्तरवृद्धिरा दशाहात् ॥ ८ ॥
4. T, HC अनूचानेषु; HC ends sūtra 9 with this word.
5. T omitted
6. T षडहं वा
7. Āp omitted
8. HC ends sūtra 10 with गुरुषु
9. Āp omitted
10. Āp °पत्न्या उदको°
11. H, Āp °वर्जनं
12. HC adds इति प्रथमः पटलः ॥ १ ॥; HA इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे (पितृमेधापरपर्याये) ऽष्टाविंशप्रश्ने द्वितीयः पटलः ॥ २ ॥
13. H °वोक्ष्य; Sāyaṇa on TĀ VI.4 has cited this sūtra verbatim.
14. Āp दक्षिणान्; HA दक्षिणतो; Sāyaṇa on TĀ VI.4 cites this sūtra verbatim.
15. HA पुनः प्रजननं

कुम्भे वा निदधाति ॥ ६ ॥ इदं त एकम् इति द्वितीयाँसाभ्यां बाहुभ्यां वा ॥ ७ ॥ पर ऊ त एकम् इति तृतीया पार्श्वाभ्याँ श्रोणिभ्यां[1] वा ॥ ८ ॥ तृतीयेन ज्योतिषा[2] इति चतुर्थ्यूरुभ्यां जङ्घाभ्यां वा ॥ ९ ॥ संवेशनः इति पञ्चमी पद्भ्याम् ॥ १० ॥ एवमेवानुजाकारँ सुसंचितँ संचिन्वन्ति ॥ ११ ॥ भस्माभिसमूह्य सँहृत्य शरीराकृतिं कृत्वा शरीराण्यादायोत्तिष्ठति उत्तिष्ठ प्रेहि इति ॥ १२ ॥ शम्यां पलाशमूले वा कुम्भं निधाय जघनेन कुम्भं कर्ष्वादि समानमा स्नानात् ॥ १३ ॥ मृदा स्नातीत्येके[3] ॥ १४ ॥ ॥९॥

अथातो हविर्यज्ञियं[4] निवपनम् ॥ १ ॥ यं कामयेतानन्तलोकः स्यादिति समस्या उद्धतेऽवोक्षिते सिकतोपोप्ते परिश्रिते वाग्यतोऽनन्वीक्षमाणो दर्भेष्वस्थीनि निवपति पृथिव्यास्त्वा[5] अक्षित्या[5] अपामोषधीनाँ रसेन[6] स्वर्गे लोके निवपाम्यसौ इति ॥ २ ॥ अनन्तलोको ह भवतीति विज्ञायते ॥ ३ ॥ अथ यदि पुनर्धक्ष्यन्तः स्युरग्निहोत्रहवणीं कृष्णाजिनँ शम्यां दृषदुपले च[7] नानुप्रहरेयुः ॥ ४ ॥ अत एवाङ्गारान् दक्षिणा[8] निर्वर्त्य तिस्रो रात्रीरिद्धा दहनवदवकाशं जोषयित्वाग्निमुप-समाधाय संपरिस्तीर्यापरेणाग्निं दक्षिणाग्रान्[9] दर्भान् सँस्तीर्य तेषु[10] कृष्णाजिने शम्यायां दृषदुपलाभ्यामवाज्जनँ शरीराणि सुसंपिष्टानि पेषयित्वाज्यकुम्भे समुदा-युत्याग्निहोत्रहवण्या जुहोति अस्मात् त्वमधि जातोऽसि इति ॥ ५ ॥ एतयैवान्तम्[11] ॥ ६ ॥ अत्रैवाग्निहोत्रहवणीं कृष्णाजिनँ शम्यां दृषदुपले चानुप्रहरेयुः ॥ ७ ॥ न चात ऊर्ध्वं श्मशानं कर्तुमाद्रियेत ॥ ८ ॥ आकृतीर्वास्यादहने[12] [13]निवपेच्छ-

---

1. H, $T_2$ श्रोणीभ्या
2. Āp ज्योतिषा संविशस्व
3. Sūtra 13 and 14 cited by Sāyaṇa on TĀ.VI.4. Sāyaṇa quotes पलाशे instead of पलाशमूले.
4. Āp °यज्ञीयं
5-5. HC °स्त्वाक्षित्या
6. Āp रसे
7. HC omitted; Sāyaṇa on TĀ VI.4 quotes the portion अथ यदि पुनर्धक्ष्यन्तः स्युः joined with the next sūtra.
8. Āp दक्षिणान्; HA दक्षिणतो; Sāyaṇa on TĀ VI.4 cites this sūtra verbatim.
9. Āp and Sāyaṇa omitted.
10. HC तेषु दर्शपूर्णमासवत्
11. $T_1$ एवसंतम्; $T_2$ एवमंतम्
12. Thus HC; HA कृतीर्वास्य दहने; $T_1$ कृतीवास्यादहने; $T_2$ क्षतीर्वास्यादहने
13. H वपेच्छ°

कैराभिर्वा परिचिनुयात् ॥ ९ ॥ तमभ्येवादित्यस्तपति तमभि वातो वाति तमापः स्पृशन्ते ॥ १० ॥ स[1] नैवादित्यस्य भकाशाच्छिद्यते न वायोर्नापाँ सँसर्जनात् ॥ ११ ॥ एवँ हि कौषीतकिर्विदांचकार वँ हैवं चक्रुरेतमु[2] ह हैवमाश्मरथ्यं[3] चक्रुः ॥ १२ ॥ तस्यो हैवैतेऽह्ना[4] हायना व्युच्छन्तीव्युच्छन्त्यस्मै[5] वस्यसी-वस्यसी व्युच्छति प्रजा हास्य श्रेयसी भवति यमेवं[6] निदधातीति[6] विज्ञायते ॥ १३ ॥ ॥१०॥[7]

नवम्यां व्युष्टायां यज्ञोपवीत्यन्तरा ग्रामँ श्मशानं चाग्निमुपसमाधाय संपरिस्तीर्यापरेणाग्निं लोहितं चर्मानडुहं प्राचीनग्रीवमुत्तरलोमास्तीर्य तद्वेतसमालिनो ज्ञातीनारोपयति आरोहत[8] इति ॥ १ ॥ अथैनाननुपूर्वान्[9] कल्पयति यथाहानि इति ॥ २ ॥ प्रतिलोमकृतया वारण्या स्रुचा द्वे चतुर्गृहीते जुहोति नहि ते अग्ने तनुवै[10] इति ॥ ३ ॥ दश च स्रुवाहुतीः अप नः शोशुचदघम् इति ॥ ४ ॥ हुत्वा-हुत्वा पार्ष्ण्याँ संपातमवनयति ॥ ५ ॥ अग्रोभयं[11] प्रहरति येन जुहोति ॥ ६ ॥ उत्तरेणाग्निं लोहितोऽनड्वान् प्राङ्मुखोऽवस्थितो भवति ॥ ७ ॥ तं ज्ञातयोऽन्वारभन्ते अनड्वाहमन्वारभामहे इति[12] ॥ ८ ॥ प्राञ्चो गच्छन्ति इमे जीवाः इति[13] ॥ ९ ॥ जघन्यो वेतसशाखयावकाभिश्च पदानि संलोपयन्नेति[14] मृत्योः पदम् इति ॥ १० ॥ अथैभ्योऽध्वर्युर्दक्षिणतोऽश्मानं परिधिं दधाति इमं जीवेभ्यः परिधिं दधामि इति[15] ॥ ११ ॥ स्त्रीणामञ्जलिषु संपातानवनयति इमा नारीः इति ॥ १२ ॥ वैहुखानि

1. Before this HA reads : एव श्रुतिरनुक्रान्ता.
2. HA चक्रिरे एवमु°
3. $T_1$ वैनंमाश्मरथ्यं; $T_2$ वैनश्मरथ्यं
4. H अह्नीना; T मह्नीव्युह्नीना
5. HC °व्युच्छन्त्यस्मै
6–6. Āp इति
7. HC adds इति द्वितीयः पटलः ॥ २ ॥; HA इति सत्याषाढ...तृतीयः पटलः ॥ ३ ॥
8. Āp आरोहतायुः. This sūtra has been cited by Sāyaṇa on TĀ VI.10. He reads रोहित for लोहितं and आरोहयति for आरोपयति.
9. HA,Āp अथैता°. This sūtra has been cited verbatim by Sāyaṇa on TĀ VI.10.
10. HA omitted
11. HA तत्रो°
12. Sūtras 7 and 8 cited verbatim by Sāyana on TĀ VI.10.
13. Cited verbatim by Sāyana on TĀ VI.10.
14. H संलोम°
15. Cited verbatim by Sāyana on TĀ VI.10.

विमृजन्ते ॥ १३ ॥ यदाञ्जनं त्रैककुदम् इति त्रैककुदेनाञ्जनेनाञ्जीरन्[1] ॥ १४ ॥ यदि त्रैककुदं नाधिगच्छेयुर्येनैव[2] केनचिदाञ्जनेनाञ्जीरन्[3] ॥ १५ ॥ ॥११॥

पृथिव्यामोषधिस्तम्बं प्रतिष्ठापयति यथा त्वमुद्भिनत्स्योषधे[4] इति ॥ १ ॥ प्रत्येत्य गृहानुत्तरपूर्वदेशेऽशारस्याग्निमुपसमाधाय संपरिस्तीर्यानुलोमकृतया वारण्या स्रुचा द्वे चतुर्गृहीते जुहोति आनन्दाय प्रमोदाय[5] इति ॥ २ ॥ अत्रोभयं प्रहरति येन जुहोति ॥ ३ ॥ अजमेतदहः पचन्ति यवौदनं[6] च ॥ ४ ॥ अजोऽसि इत्यजस्य प्राश्नन्ति[7] । यवोऽसि इति यवौदनस्य[8] ॥ ५ ॥ अत्रासन्दीस्तल्पानधिरोहन्ति ॥ ६ ॥ नापितकर्माणि च कारयन्ते ॥ ७ ॥ एष प्रथमोऽलंकारः ॥ ८ ॥ सोऽयमेवंविहित एवानाहिताग्नेः पाञ्चचयेष्टकावर्जम् ॥ ९ ॥ औपासनेनानाहिताग्निं दहन्ति ॥ १० ॥ निर्मन्थ्येन पत्नीम्[9] ॥ ११ ॥ उत्तपनेनेतरान् ॥ १२ ॥ अथैकेषां कुम्भान्तं निधानमनाहिताग्नेः स्त्रियाश्च निवपनान्तं हविर्यज्ञयाजिनः[10] पुनर्दहनान्तं सोमयाजिनश्चयनान्तमग्निचित इति ॥ १३ ॥ नासंनयतामामिक्षा[11] ॥ १४ ॥ उत्सर्गो राजगव्या अपशुबन्धयाजिनः स्त्रियाश्च ॥ १५ ॥ दहनकल्पेन न[12] कल्पेरन्ननुपेतान् कन्याश्च ॥ १६ ॥ पुनर्दहनमन्त्रेणैव दहेयुः ॥ १७ ॥ स्त्रियाश्चैवम् ॥ १८ ॥ पुंलिङ्गवपनवर्जमित्येक[13] इत्येके ॥ १९ ॥ ॥१२॥[14]

॥ इति[15] प्रथमः प्रश्नः[15] ॥

---

1. HC,T₁ °नेनाङ्क्ते; HA °नेनाञ्जते
2. H नाधिगच्छेद्येनैव; T नाधिगच्छेत् followed by lacuna.
3. Thus T; H केन चाञ्ज°; Āp केनाञ्ज°
4. HA त्वम्
5. Āp न वै तत्र
6. HC यवो°; Sāyaṇa on TĀ VI.10 has cited this sūtra with slight variation.
7. HC प्राश्नीयात्
8. HA यवौदनं च; T यवोदनं च
9. Sāyaṇa on ABr VII 8 : भारद्वाजोऽप्याह निर्मन्थ्येन पत्नीमिति ।
10. HA हविर्याजिनः
11. H,T °मामिक्षाम्
12. HA omitted
13. Āp पुंलिङ्गपुनर्दहनवर्ज°
14. HC adds इति तृतीयः पटलः ॥ ३ ॥; HA इति सप्यापाढ...चतुर्थः पटलः ॥
15. HC इति हिरण्यकेशिसूत्रे अष्टाविंशः प्रश्नः समाप्तः ॥ २८ ॥; HA समाप्तोऽष्टाविंशः प्रश्नः ॥

## अथ द्वितीयः प्रश्नः

अथात[1] उत्तरं पैतृमेधं व्याख्यास्यामो यं ब्रह्ममेध इत्याचक्षते[1] ॥ १ ॥ अथाप्युदाहरन्ति

द्विजातीनामपवर्गो ह्यर्थतस्तत्त्वदर्शिभिः[2] ।
ऋषिभिस्तपसो योगाद्बेष्टितुं[3] पुरुषोत्तमम्[4] ॥
होतॄंश्च पितृमेधं च संसृज्य विधिरुत्तरः ।
विहितस्तु समासेन क्रतूनामुत्तमः क्रतुः ॥

इति ॥ २ ॥ प्रकृतिविकृतिर्यथा[5] पुरस्तात् ॥ ३ ॥ तस्य सग्रहैर्होतृभिर्होमः ॥ ४ ॥ भर्तृसूक्तेन भरणम् ॥ ५ ॥ पत्नीभिरुपसंवेशनम् ॥ ६ ॥ दक्षिणाप्रतिग्रहैर्निमार्गः ॥ ७ ॥ हृदयैर्हिरण्यशकलाः[6] ॥ ८ ॥ संभारयजुर्भिः पात्रचयनम् ॥ ९ ॥ ज्योतिष्मतीभिरुपोषणम् ॥ १० ॥ नारायणाभ्यामुपस्थानम्[7] ॥ ११ ॥ ब्राह्मण एकहोता इति चानुमन्त्रणम्[8] ॥ १२ ॥ चित्तँ संतानेन इति हविराहुतिः ॥ १३ ॥ प्रयासाय स्वाहा इति स्रुवाहुतीः[9] ॥ १४ ॥ मृत्युसूक्तेनानुशँसनम्[10] ॥ १५ ॥ सौम्या संगाहनम् ॥ १६ ॥ सौर्येणादित्योपस्थानम् ॥ १७ ॥ ईयुष्टे इत्यवगाहनम् ॥ १८ ॥ समानमत[11] ऊर्ध्वं पैतृमेधिकं कर्म[12] यवोदनप्राशनात्[12] ॥ १९ ॥ तान् परं ब्रह्मेत्याचक्षते ॥ २० ॥

---

1-1. Āp अथातो ब्रह्ममेधविधिं व्याख्यास्यामः । In HC this section forms the 7th Kaṇḍikā of the 29th Praśna. In HA it forms the third Paṭala of the 29th Praśna.
2. Thus $T_2$; H अर्थत°; $T_1$ व्यर्थत°; the comm. on BhārPitṛS has अर्थतः.
3. HA °द्वेष्टितं
4. Thus TH; Āp omits this verse.
5. Thus T; HA प्रकृतिविकृती यथा; HC omits this sūtra.
6. HT °शकलान्
7. Cited by Sāyaṇa on TĀ III.12.
8. Sāyaṇa on TĀ III.7 has cited : ब्राह्मण एकहोतेति च ।
9. HC स्रुवाहुतिः
10. BaudhPitṛS gives some of these sūtras in a slightly different order. Sūtras 10-18 in BhārPitṛS occur in BaudhPitṛS in the following order: 10-12, 14, 13, 15, 16, 18, 17. Sāyaṇa on TĀ III.15 has cited seven of these sūtras in the following order: 15, 17, 16, 18, 10, 13, 14. The order in BhārPitṛS is, however, the correct one. See the translation. See also the foot-note to sūtra 23.
11. HA अत
12-12. Āp कर्म

विसृजन्ते ॥ १३ ॥ यदाञ्जनं त्रैककुदम् इति त्रैककुदेनाञ्जनेनाञ्जीरन्[1] ॥ १४ ॥ यदि त्रैककुदं नाधिगच्छेयुर्येनैव[2] केनचिदाञ्जनेनाञ्जीरन्[3] ॥ १५ ॥ ॥११॥

पृथिव्यामोषधिस्तम्बं प्रतिष्ठापयति यथा त्वमुद्भिनत्स्योषधे[4] इति ॥ १ ॥ प्रत्येत्य गृहानुत्तरपूर्वदेशेऽगारस्याग्निमुपसमाधाय संपरिस्तीर्यानुलोमकृतया वारण्या स्रुचा द्वे चतुर्गृहीते जुहोति आनन्दाय प्रमोदाय[5] इति ॥ २ ॥ अत्रोभयं प्रहरति येन जुहोति ॥ ३ ॥ अजमेतदहः पचन्ति यवौदनं[6] च ॥ ४ ॥ अजोऽसि इत्यजस्य प्राश्नन्ति[7] । यवोऽसि इति यवौदनस्य[8] ॥ ५ ॥ अत्रासन्दीस्तल्पानधिरोहन्ति ॥ ६ ॥ नापितकर्माणि च कारयन्ते ॥ ७ ॥ एष प्रथमोऽलंकारः ॥ ८ ॥ सोऽयमेवंविहित एवानाहिताग्नेः पात्रचयेष्टकावर्जम् ॥ ९ ॥ औपासनेनानाहिताग्निं दहन्ति ॥ १० ॥ निर्मन्थ्येन पत्नीम्[9] ॥ ११ ॥ उत्तपनेनेतरान् ॥ १२ ॥ अथैकेषां कुम्भान्तं निधानमनाहिताग्नेः स्त्रियाश्च निवपनान्तं हविर्यज्ञयाजिनः[10] पुनर्दहनान्तं सोमयाजिनश्चयनान्तमग्निचित इति ॥ १३ ॥ नासंनयत्तामामिक्षा[11] ॥ १४ ॥ उत्सर्गो राजगव्या अपशुबन्धयाजिनः स्त्रियाश्च ॥ १५ ॥ दहनकल्पेन न[12] कल्पेरन्ननुपेतान् कन्याश्च ॥ १६ ॥ पुनर्दहनमन्त्रेणैव दहेयुः ॥ १७ ॥ स्त्रियाश्चैवम् ॥ १८ ॥ पुंलिङ्गवपनवर्जमित्येक[13] इत्येके ॥ १९ ॥ ॥१२॥[14]

॥ इति[15] प्रथमः प्रश्नः[15] ॥

---

1. HC,T₂ °नेनाङ्क्ते; HA °नेनाञ्जते
2. H नाधिगच्छेयेनैव; T नाधिगच्छेत् followed by lacuna.
3. Thus T; H केन चाञ्ज°; Āp केनाञ्ज°
4. HA त्वम्
5. Āp न वै तत्र
6. HC यवौ°; Sāyaṇa on TĀ VI.10 has cited this sūtra with slight variation.
7. HC प्राश्नीयात्
8. HA यवौदनं च; T यवोदनं च
9. Sāyaṇa on ABr VII 8 : भारद्वाजोऽप्याह निर्मन्थ्येन पत्नीमिति ।
10. HA हविर्याजिनः
11. H,T °मामिक्षाम्
12. HA omitted
13. Āp पुंलिङ्गपुनर्दहनवर्ज°
14. HC adds इति तृतीयः पटलः ॥ ३ ॥; HA इति सत्यापाढ...चतुर्थः पटलः ॥
15. HC इति हिरण्यकेशिसूत्रे अष्टाविंशः प्रश्नः समाप्तः ॥ २८ ॥; HA समाप्तोऽष्टाविंशः प्रश्नः ॥

## अथ द्वितीयः प्रश्नः

अथात[1] उत्तरं पैतृमेधं व्याख्यास्यामो यं ब्रह्ममेध इत्याचक्षते[1] ॥ १ ॥
अथाप्युदाहरन्ति

द्विजातीनामपवर्गो ह्यर्थतस्तत्त्वदर्शिभिः[2] ।
ऋषिभिस्तपसो योगाद्धेदितुं[3] पुरुषोत्तमम्[4] ॥
होतृंश्च पितृमेधं च संसृज्य विधिरुत्तरः ।
विहितस्तु समासेन क्रतूनामुत्तमः क्रतुः ॥

इति ॥ २ ॥ प्रकृतिविकृतिर्यथा[5] पुरस्तात् ॥ ३ ॥ तस्य सग्रहैर्होतृभिर्होमः ॥ ४ ॥ भर्तृसूक्तेन मरणम् ॥ ५ ॥ पत्नीभिरुपसंवेशनम् ॥ ६ ॥ दक्षिणाप्रतिग्रहैर्निमार्गः ॥ ७ ॥ हृदयैर्हिरण्यशकलाः[6] ॥ ८ ॥ संभारयजुर्भिः पात्रचयनम् ॥ ९ ॥ ज्योतिष्मतीभिरुपोषणम् ॥ १० ॥ नारायणाभ्यामुपस्थानम्[7] ॥ ११ ॥ ब्राह्मण एकहोता इति चानुमन्त्रणम्[8] ॥ १२ ॥ चित्तँ संतानेन इति हविराहुतिः ॥ १३ ॥ प्रयासाय स्वाहा इति स्रुवाहुतीः[9] ॥ १४ ॥ मृत्युसूक्तेनानुशँसनम्[10] ॥ १५ ॥ सौम्या संगाहनम् ॥ १६ ॥ सौर्येणादित्योपस्थानम् ॥ १७ ॥ ईशुषे इत्यवगाहनम् ॥ १८ ॥ समानमत[11] ऊर्ध्वं पैतृमेधिकं कर्मा[12] यवोदनप्राशनात्[12] ॥ १९ ॥ तान् परं ब्रह्मेत्याचक्षते ॥ २० ॥

---

1–1. Āp अथातो ब्रह्ममेधविधिं व्याख्यास्यामः। In HC this section forms the 7th Kaṇḍikā of the 29th Praśna. In HA it forms the third Paṭala of the 29th Praśna.
2. Thus $T_2$; H अर्थत°; $T_1$ व्यर्थत°; the comm. on BhārPitṛS has अर्थतः.
3. HA °द्वेदितुं
4. Thus TH; Āp omits this verse.
5. Thus T; HA प्रकृतिविकृती यथा; HC omits this sūtra.
6. HT °शकलान्
7. Cited by Sāyaṇa on TĀ III.12.
8. Sāyaṇa on TĀ III.7 has cited : ब्राह्मण एकहोतेति च।
9. HC स्रुवाहुतिः
10. BaudhPitṛS gives some of these sūtras in a slightly different order. Sūtras 10–18 in BhārPitṛS occur in BaudhPitṛS in the following order : 10–12, 14, 13, 15, 16, 18, 17. Sāyaṇa on TĀ III.15 has cited seven of these sūtras in the following order : 15, 17, 16, 18, 10, 13, 14. The order in BhārPitṛS is, however, the correct one. See the translation. See also the foot-note to sūtra 23.
11. HA अत
12–12. Āp कर्म

तान्[1] साधारणे[1] श्मशाने प्रयुञ्जीत ॥ २१ ॥ नानाचार्याय नाश्रोत्रियाय ॥ २२ ॥ द्विजातीनामेव[2] ॥ २३ ॥ संतिष्ठते ब्रह्ममेधः[3] ॥ २४ ॥ ॥१॥[4]

दिष्टगमनादयुक्त्वहःस्वहोरात्रार्धमासर्तुषु संवत्सरे वा निदधाति ॥ १ ॥ अप्रज्ञाते याथाकामी ॥ २ ॥ या माघ्याः पौर्णमास्याः फाल्गुन्याश्चैत्र्या वैशाख्या नैदाघ्या चोपरिष्टादमावास्या तस्याम् ॥ ३ ॥ अशुभो शुभो वाग्नीरादायोत्तरतो लोष्टानवहृत्य दक्षिणतो[5] हरन्ति[5] स्थलार्थानिष्टकार्थान् वा ॥ ४ ॥ पुरस्तादेव श्मशानायतनादोषधीरुद्धारयन्ति ॥ ५ ॥ पाठापृश्निपर्णीकर्णिकारराजवृक्षकण्टूक-तिल्वकविभीतकार्कशरश्वदंष्ट्राध्यण्डा[6] अन्याश्च क्षीरिणीरनुत्क्षेयाः[7] ॥ ६ ॥ अपराह्णे श्मशानायतनं संमिमीते[8] पञ्चपञ्च प्रक्रमान्त्सर्वतः । पट् पुरस्तादित्येके ॥ ७ ॥ माने परीतान इष्टकोपधान इति दिक्संयोगः ॥ ८ ॥ सर्वत्र पुरस्तादुपक्रमः । प्रसव्यं दक्षिणतोऽपवर्गः ॥ ९ ॥ त्रिवृता मौञ्ज्या वाल्वज्या वा रज्ज्वा प्रसव्या-वृत्तया त्रिः प्रसव्यं परितत्याशुग्भिरुदकुम्भैः स्ववोक्षितमवोक्षेद्यथा प्राणदुत्सर्पेत् ॥ १० ॥ न प्राणदधि निवपेत् । यदि प्राणदधि निवपेज्जीवतां ह तत्[9] प्राणानधि निवपेत् ॥ ११ ॥ स्वार्यो तल्पे वा संभारानोप्य ॥ १२ ॥ ॥२॥

श्वो भूते पशुना[10] तदर्थमन्नं[10] संस्कृत्य तदमावास्यायां[11] निदधाति ॥ १ ॥ अथ[12] यदि पुनर्वेक्ष्यन्तः[13] स्युस्तदगारं तल्पं वा मिन्वन्ति ॥ २ ॥ तस्य पूर्वार्धे

---

1-1. H तानसाधारणे
2. Thus T,HC; HA °मेवं
3. Sāyaṇa on TĀ III.21 has cited this entire section. The variants found therein are recorded below :—sūtra 1 : यं omitted; sūtra 2 : तथाप्युदा°; °मपवर्गोऽस्तत्त्व°; sūtra 3 omitted; sūtra 6 : °रुपवादनम्; sūtra 8 : °धकलान्; sūtra 13 : हविराहुतीः; sūtra 19 : आ for कर्मा; sūtra 20 : तान् omitted; sūtra 21 : तानसाधारणे; sūtra 22 : नाश्रोत्रियाय omitted; sūtra 23 : द्विजातीनामेव.
4. HC ॥ ७ ॥ इति सप्तमः पटलः ॥ ७ ॥; HA इति सत्याषाढ...तृतीयः पटलः ॥ ३ ॥
5-5. Āp दक्षिणातिहरन्ति; HA दक्षिणा निर्हरन्ति
6. Āp राजवृक्षात्क for राजवृक्षकण्टूक. T omits कण्टूक and reads तिलक for तिल्वक.
7. Āp अनुत्क्षेयाः is omitted.
8. Āp विमिमीते; T मिमीते
9. Āp omitted
10-10. Āp परिवेश्यन् पशुनान्नं
11. Āp तदहरमा°
12. In H this section forms the 2nd Kaṇḍikā of the Praśna 29th.
13. Āp °धविष्यन्तः

मध्ये पश्चार्धे वा पालाशीं मेथीं त्रिविषूकां[1] निघ्नन्ति[1] ॥ ३ ॥ पुरस्तादेव शूद्रो[2] ब्रह्मबन्धुर्वा संवादित[3] उपविशति ॥ ४ ॥ या स्त्री मुख्यतमा तामाह वसतिं[4] मया सह[5] पृच्छे[5] इति ॥ ५ ॥ न ददामि इतीतरा प्रत्याह ॥ ६ ॥ एवं द्वितीये करोति ॥ ७ ॥ एकरात्राय ददामि इति तृतीये ॥ ८ ॥ यावद्रात्रं वा भविष्यन्तः स्युः ॥ ९ ॥ एतस्यां याचि मेथ्या मूले शरीराणि निदधाति ॥ १० ॥ शततृण्णं च कुम्भं त्रिविषूके ॥ ११ ॥ तस्य बिलं चर्मणा कुशैः परिणद्धं भवति ॥ १२ ॥ तस्मिन् दधि वाजिनमिश्रमानयति वैश्वानरे हविरिदं जुहोमि इति ॥ १३ ॥ विक्षरन्तमभिमन्त्रयते द्रप्सश्चस्कन्द ॥ इमं समुद्रम् इति द्वाभ्याम्[6] ॥ १४ ॥ चत्वारो ब्रह्मचारिणोऽन्ये वा ब्राह्मणायना[7] दक्षिणान् केशपक्षानुद्ग्रथ्य सव्यान् प्रस्रस्य दक्षिणानूरूनाघ्नानाश्चर्माघ्नन्तः[8] सिग्भिरभिधून्वन्तस्त्रिः प्रसव्यं परियन्ति अजिनमोय्यजिनमोय्यजिनमोयि इति ॥ १५ ॥ एवममात्याः स्त्रियश्चोत्तराभिः[9] सिग्भिर्मन्त्रवर्जम्[9] ॥ १६ ॥ पूर्ववत् प्रतिपरिक्रमणम्[10] ॥ १७ ॥ संप्रवदन्ति वीणाशङ्खनाळीतूणवाः[11] ॥ १८ ॥ नृत्तगीतवादित्राणीति ॥ १९ ॥ प्रातर्माध्यंदिनेऽपराह्ण[12] इति ॥ २० ॥ एवं रात्रेस्त्रिः ॥ २१ ॥ अपरपक्षस्य[13] तिस्रो रात्रीर्भवन्ति पञ्च सप्त नवैकादशार्धमासं[14] मासम् ॥ २२ ॥ संवत्सरम्[15] हैके ब्रुवन्ति ॥ २३ ॥ अन्नं च यथाशक्ति देयम् ॥ २४ ॥ तथा द्रव्याणि ॥ २५ ॥ उत्तम एवाहनि द्रव्यत्याग इत्येके ॥ २६ ॥ एतस्मिन्नेवाग्नौ तूष्णीमुपचरितान् पञ्च चरूञ्छ्रपयन्ति[16] ॥ २७ ॥

---

1-1. HA निघ्नन्ति त्रिविषूकाम्
2. Āp शूद्रोऽपक्षी
3. T सहसंवादित
4. The portion beginning with this word and ending with कुम्भं in sūtra 11 is missing in T.
5-5. HC सा विच्छतीति; HA सह पृच्छति
6. Cited verbatim by Sāyaṇa on TĀ VI.6.
7. HA ब्राह्मणाः प्रयता
8. HC दक्षिणानूरूनाघ्नन्तः
9-9. Āp स्त्रियश्च सिक्चर्मवर्जं
10. H परि°
11. HA वीणाः शङ्खानालीकान् तूणापणवान्
12. Āp मध्याह्ने for माध्यंदिने
13. Āp अपि वा
14. H adds वा before अर्धमासं.
15. HA वत्सरम्
16. HC °यति

तेषामभिघारणानि घृतँ शृतं क्षीरं दधि मध्विति ॥ २८ ॥ अपूपापिधाना[1] भवन्ति ॥ २९ ॥ अपररात्रे गच्छन्त्यग्निः प्रथमोऽथोदकुम्भोऽनड्वाञ्छरीराणि[2] संभारा इति। येन चान्येनार्थो भवति ॥ ३० ॥ न हीनमन्वाहरेयुः[3] ॥ ३१ ॥ अन्तरा ग्रामँ श्मशानं चैतमग्निमिन्धान आस्ते ॥ ३२ ॥ ॥३[4]॥

व्युष्टायाँ हरिण्या पलाशशाखया शमीशाखया वा श्मशानायतनँ संमार्ष्टि अपेत वीत इति[5] ॥ १ ॥ दक्षिणतः शाखामुदसित्वाप[6] उपस्पृश्योद्धत्यावोक्ष्य[6] सवितैतानि शरीराणि इति सीरं युनक्ति षड्गवं द्वादशगवं चतुर्विँशतिगवं वा[7] ॥ २ ॥ यावद्यूवँ सीरं तावन्ति शतानीष्टकानाम् ॥ ३ ॥ आमा[8] भवन्तीति विज्ञायते ॥ ४ ॥ तस्याश्चतुर्विँशेन[9] भागेनेष्टकाः करोति पादेष्टकाश्च ॥ ५ ॥ वारणं काष्ठमयम् ॥ ६ ॥ मौञ्जँ रज्जुमयम् ॥ ७ ॥ वचनादन्यत् ॥ ८ ॥ शुनं वाहाः इति द्वाभ्यां प्रसव्यावृत्ताः षट् पराचीः सीताः कृषति[10] ॥ ९ ॥ उद्यम्य लाङ्गलँ सीते वन्दामहे इति सीताः प्रत्यवेक्षते[11] ॥ १० ॥ सवितैतानि शरीराणि इति मध्ये कुटस्यास्थिकुम्भं निदधाति[12] ॥ ११ ॥ विमुच्यध्वमघ्निया देवयानाः इति दक्षिणेंऽसे बलीवर्दान् विमुच्य[13] तान् दक्षिणोत्सृज्याध्वर्यवे ददाति ॥ १२ ॥ उदपात्रेणोदुम्बरशाखयावोक्षति प्र वाता वान्ति इति[14] ॥ १३ ॥ पात्र्याँ सर्वौषधीः संयुत्य वपति यथा यमाय इति[15] ॥ १४ ॥ चितः स्थ परिचितः इत्यपरिमिताभिः शर्कराभिः परिश्रित्य आ प्यायस्व समेतु ते इति सिकता व्यूहति ॥ १५ ॥ उत्तरया त्रिष्टुभा राजन्यस्य[16] ॥ १६ ॥ जगत्या वैश्यस्य ॥ १७ ॥ विधृतिलोष्टान् प्रवि-

1. HA अपूपाभिर्धाना; $T_2$ अपूपाभिधाना
2. Āp °नड्वाहः शरीराणि
3. This sūtra is omitted in Āp.
4. HC ॥ २ ॥
5. Cited verbatim by Sāyaṇa on TĀ VI.6.
6–6. अप उपस्पृश्य omitted in Āp
7. Cited verbatim by Sāyaṇa on TĀ VI.6 beginning with सवितैतानि.
8. HA मानानि; T नामानि
9. HC,$T_2$ °विंशति°
10. Cited verbatim by Sāyaṇa on TĀ VI.6.
11. Cited verbatim by Sāyaṇa on TĀ VI.6.
12. Cited verbatim by Sāyaṇa on TĀ VI.6.
13. Cited verbatim up to this word by Sāyaṇa on TĀ VI.6.
14. Cited verbatim by Sāyaṇa on TĀ VI.6.
15. Sāyaṇa reads आवपति for वपति while citing this sūtra on TĀ VI.6.
16. Sūtras 15 and 16 cited verbatim by Sāyaṇa on TĀ VI.6.

दिशमनन्वीक्षमाण उपदधाति उत्ते स्तभ्नोमि इत्येतैः प्रतिमन्त्रम्[1] ॥ १८ ॥ तिलमिश्राभिर्धानाभिः त्रिः प्रसव्यं[2] परिकिरति एणीर्धानाः[3] इति ॥ १९ ॥ अभिवान्यायै दुग्धस्यार्धशरावे मन्थस्त्रिः[4] प्रसव्योपमथित आमपात्रस्थस्तं[5] दक्षिणत उपदधाति एषा ते यमसादने इति ॥ २० ॥ समूलं बर्हिर्दक्षिणा[6] स्तृणाति इदं पितृभ्यः प्रभरेम[7] बर्हिः[8] इति ॥ २१ ॥ पालाशान् परिधीन् परिदधाति ॥ २२ ॥ मा त्वा वृक्षौ इति पूर्वापरौ ॥ २३ ॥ उत्तरया दक्षिणोत्तरौ[9] ॥ २४ ॥ मध्ये नळेषीकां[10] निदधाति नळं प्लवम् इति ॥ २५ ॥ पुराणेन सर्पिषा शरीराणि सुसंतृप्तानि संतर्प्योत्तरत[11] आसीनोऽनन्वीक्षमाणो दर्भेष्वस्थीनि[12] निवपति सवितैतानि शरीराणि इति ॥ २६ ॥ यथाङ्गमङ्गानि[13] संनिधायाथैनमुपतिष्ठते पड्होता सूर्यं ते चक्षुः इति ॥ २७ ॥ भुक्तभोगेन वाससास्थिकुम्भं निमृज्योपर्युपरिशिरो दक्षिणा व्युदस्यति परं मृत्यो अनु परेहि पन्थाम् इति ॥ २८ ॥ अथास्य कपालानि सुसंभिन्नानि संभिनत्ति यथैषूदकं न तिष्ठेत्[14] ॥ २९ ॥ भुक्तभोगेन वाससा शरीराणि प्रच्छाद्योदपात्रेणोदुम्बरशाखयावोक्षति शं वातः इति[15] ॥ ३० ॥ ॥४[16]॥

इष्टकाः प्रतिदिशमनन्वीक्षमाण उपदधाति पृथिव्यास्त्वा लोके सादयामि इत्येतैः प्रतिमन्त्रं मध्ये पञ्चमीं तां दक्षिणेन षष्ठीम्[17] ॥ १ ॥ एवं चरून् अपूपवान्

---

1. Sāyaṇa while quoting this sūtra on TĀ VI.7 reads simply लोष्टान् for विधृतिलोष्टान्.
2. HA प्रदक्षिणं. Sāyaṇa while quoting this sūtra on TĀ VI.7 reads त्रिरपसव्यं.
3. T adds हरिणीः.
4. HA सक्तून् त्रिः प्रसव्यमनाभ्योपमथितम्. Cited verbatim by Sāyaṇa on TĀ VI.6.
5. T आमः पात्रेस्थस्तं
6. HA °र्दक्षिणाग्रं; Sāyaṇa on TĀ VI.7 cites this sūtra verbatim.
7. Āp प्रहरेम
8. HA omitted
9. Sūtras 22–24 cited verbatim by Sāyaṇa on TĀ VI.7.
10. H °नळेषीकां. *This sūtra is cited verbatim by Sāyaṇa on TĀ VI.7.*
11. H संतृप्यो°
12. HC दर्भेषु. Thus also Sāyaṇa on TĀ VI.7; from निवपति to अस्थिकुम्भं omitted in T.
13. HC यथालिङ्ग°
14. Sūtras 28 and 29 cited verbatim by Sāyaṇa on TĀ VI.7.
15. This sūtra is cited verbatim by Sāyaṇa on TĀ VI.7.
16. HC ॥ ३ ॥ इति चतुर्थः पटलः ॥ ४ ॥; HA ख° ३
17. Sūtra 1 cited verbatim by Sāyaṇa on TĀ VI.7.

इति प्रतिमन्त्रम्[1] ॥ २ ॥ अतिलाभिर्धानाभिस्त्रिः प्रसव्यं[2] परिकिरति एतास्ते स्वधा अमृताः करोमि इति[3] ॥ ३ ॥ ओषधिस्तम्बान् प्रतिदिशमनन्वीक्षमाण उपदधाति[4] त्वामर्जुन इति प्रतिमन्त्रम्[5] ॥ ४ ॥ तेषां[6] मन्त्रलिङ्गैर्नियमः[6] ॥ ५ ॥ लोकं पृण इति लोकंपृणा[4] उपदधाति ॥ ६ ॥ उत्तरया पुरीषेणानुविकिरति[7] ॥ ७ ॥ श्मशानस्य मात्रा द्व्यङ्गुलं त्र्यङ्गुलं चतुरङ्गुलं प्रादेशो वितस्तिर्जान्वदघ्नमूरुदघ्नं स्फिग्दघ्नं वा[8] ॥ ८ ॥ उत्तमां मात्रां नात्याप्नुयात्[9] ॥ ९ ॥ यावतीं पुरस्तात्ततोऽनन्तरां[10] पश्चात् ॥ १० ॥ अपि वा द्व्यङ्गुलं पुरस्तात् समंभूमि[11] पश्चात्[12] ॥ ११ ॥ उदपात्रेणोदुम्बरशाखयावोक्षति शं वातः इति[13] ॥ १२ ॥ आरोहणं जपत्यवरोहणं जपति ॥ १३ ॥ उपस्थानेनोपतिष्ठते इदमेव मेतोऽपराम्[14] इति ॥ १४ ॥ वारणशाखां[15] पुरस्तान्निदधाति वरणो वारयात् इति ॥ १५ ॥ विधृतिलोष्टमुत्तरतः विधृतिरसि इति[16] ॥ १६ ॥ शमीशाखां पश्चात् शमि शमय इति[17] ॥ १७ ॥ यवं दक्षिणतः यव यवय इति[18] ॥ १८ ॥ अथैनमुपतिष्ठते पृथिवीं गच्छान्तरिक्षं गच्छ इति[19] ॥ १९ ॥ जघनेन[20] चितिं कर्ष्वादि समानमा स्नानात् ॥ २० ॥ मृदा स्नातीत्येके ॥ २१ ॥ ॥५[21]॥

---

1. Sūtra 2 cited verbatim by Sāyaṇa on TĀ VI.8.
2. T अपसव्यं
3. Sāyaṇa, while citing this sūtra on TĀ VI.9, reads तिलमिश्राभिः instead of अतिलाभिः. The reading तिलमिश्राभिः is found in BaudhPitṛS.
4–4. T omitted
5. HC omitted. This sūtra is cited verbatim by Sāyaṇa on TĀ VI.9.
6–6. HC प्रतिमन्त्रलिङ्गैर्व्यनियमः
7. Sūtra 6 and 7 cited verbatim by Sāyaṇa on TĀ VI.9.
8. HT adds एषोत्तमा मात्रा श्मशानस्य.
9. H नाप्त्या°
10. HC,T °नन्तरं
11. HA समं
12. HT पश्चादित्येके
13. This sūtra is cited verbatim by Sāyaṇa on TĀ VI.9.
14. H °परामातिमाराम कांचन. Sāyaṇa on TĀ VI.9 cites : उपतिष्ठत इदमेव.
15. Ap वरण°. Sāyaṇa on TĀ VI.9 has cited this sūtra verbatim.
16. This sūtra is cited verbatim by Sāyaṇa on TĀ VI.9.
17. This sūtra is cited verbatim by Sāyaṇa on TĀ VI.9.
18. This sūtra is cited verbatim by Sāyaṇa on TĀ VI.9.
19. Sāyaṇa on TĀ VI.9 has cited अथैनमुपतिष्ठते पृथिवीम् इति ।
20. This sūtra is cited verbatim by Sāyaṇa on TĀ VI.9 up to समानम्.
21. HC ॥ ४ ॥ इति पञ्चमः पटलः ॥ ५ ॥; HA ख° ४ इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे (पितृमेधप्रश्ने) एकोनत्रिंशप्रश्ने प्रथमः पटलः ॥ १ ॥

यमयज्ञं स्वयं प्रोक्तं प्रवक्ष्ये बलिमुत्तमम्[1] ।
मासि मासि तु कर्तव्यो ह्यन्तकाय[2] बलिस्तथा ॥
मेधाकामोऽर्थकामो वा पुत्रकामस्तु वै द्विजः ।
याम्येऽहनि सुनक्षत्रे सर्वान् कामान् समश्नुते ॥
संवत्सरस्य कार्तिक्यां बलिं कुर्वीत[3] यत्नतः ।
अकुर्वन् यस्तु कार्तिक्यां नरके स[4] निमज्जति[5] ॥
तस्मात् कुर्वीत कार्तिक्यां स्वर्गकामस्तु[6] वै द्विजः ।
तिलप्रस्थस्य कर्तव्यं गुडमिश्रं तथा हविः ॥
एकेन तु[7] न[7] कर्तव्यः कर्तव्यो बहुभिः सह ॥ १ ॥

हविरुद्धृत्याभिमन्त्र्य[8] हविरादाय नमो ब्रह्मणे प्रजापतये देवेभ्य ऋषिभ्यः पितृभ्यो यमाय इत्युक्त्वा ग्रामात् प्राचीमुदीचीं[9] वा दिशमुपनिष्क्रम्यानिरिणप्रदेशे नदीतीरे समे वान्यस्मिन् शुचौ देशे[10] दिक्स्रक्तिं वेदिं करोति ॥ २ ॥ तस्यां वेद्यां[11] पञ्चोत्तरवेद्यो दिक्स्रक्तयो भवन्ति ॥ ३ ॥ दक्षिणेन करकूपं खात्वोत्तरेणाग्निं प्रतिष्ठाप्य दर्भैः सोत्तरवेदिं संप्रच्छादयति[12] ॥ ४ ॥ प्रागग्रैर्दर्भैर्विष्टरं[13] निधाय प्रस्तरं च

आयातु देवः सुमनाभिरूतिभिर्यमो ह वेह प्रयताभिरक्ता ।
आसीदतां सुप्रयते ह बर्हिष्यूर्जाय जात्यै मम शत्रुहत्योम् ॥

इति यममावाह्य यमे इव यतमाने यदैतम्[14] इति[15] च ॥ ५ ॥ इमं यम प्रस्तरमा हि

1. HA विधिमु°
2. HC °न्तकाय. Sāyaṇa on TĀ VI.5 has cited the first verse, reading कर्तव्योऽन्तकाय तु बलिस्तथा ।
3. T कुर्वंति
4. HA तु
5. T, निमज्जते
6. HA सर्व°
7-7. HA न तु
8. HA हविरुद्धास्याभि°
9. HC प्राचीं वोदीचीं
10. T,HA देशे तस्य
11. T उत्तरवेद्यां
12. Thus H; T संछादयति; Āp प्रच्छादयन्ति
13. T adds च after प्रागग्रैः.
14. Sāyaṇa on TĀ VI.5 has cited this sūtra beginning with आयातु देवः. He quotes यममावाहयति instead of यममावाह्य.
15. HA प्र वां भरन्निति

सीद इति तिसृभिः[1] प्रस्तरमभिमन्त्र्य सपवित्राण्यर्घ्यपाद्याचमनीयोदकानि[2] दत्त्वा सार्वसुरभिगन्धधूपदीपमाल्यं[3] च यथोपलब्धं ददाति कृष्णाः प्रतिसराः कृष्णसूत्रं च ॥ ६ ॥ मध्यमेनान्तमेन वा पलाशपर्णेन जुहोति यमाय स्वाहा ॥ अन्तकाय स्वाहा ॥ धर्माय[4] स्वाहा ॥ अन्ताय स्वाहा ॥ अनन्ताय स्वाहा ॥ वैवस्वताय स्वाहा ॥ कालाय स्वाहा ॥ मृत्यवे स्वाहा ॥ विष्णवे स्वाहा ॥ भूः स्वाहा ॥ भुवः स्वाहा ॥ सुवः स्वाहा ॥ भूर्भुवः सुवः स्वाहा इति[5] ॥ ७ ॥ ॥६॥

व्याहृतिपर्यन्तँ हविर्जुहोति[6] ॥ १ ॥ अथार्कपर्णान्यौदुम्बरपर्णानि वा निधाय मध्यमायामुत्तरवेद्यां[7] यमाय हविर्निवेदयन्ते

यमाय सोमँ सुनुत यमाय जुहुता हविः ।
यमँ ह यज्ञो गच्छत्यग्निदूतो अरंकृतोम् ॥

इति । प्रतीच्यामुत्तरवेद्याम्

यमाय घृतवद्धविर्जुहोत प्र च तिष्ठत ।
स नो देवेष्वा यमद् दीर्घमायुः प्रजीवसोम् ॥

इति । प्राच्यामुत्तरवेद्याम्

यमाय मधुमत्तमँ राज्ञे हव्यं जुहोतन ।
इदं नम ऋषिभ्यः पूर्वजेभ्यः पूर्वेभ्यः पथिकृद्भ्योम् ॥

इति । दक्षिणस्यामुत्तरवेद्याँ श्वभ्याँ हविर्निवेदयन्ते

यौ ते श्वानौ यम रक्षितारौ चतुरक्षौ पथिरक्षी नृचक्षसा ।
ताभ्यामेनं[8] परिदेहि राजन्[8] स्वस्ति चास्मा अनमीवं च धेह्योम् ॥

इति । उत्तरस्यामुत्तरवेद्यां यमदूताभ्याँ हविर्निवेदयन्ते

उरुणसावसुतृपावुदुम्बलौ यमस्य दूतौ चरतो वशाँ[9] अनु ।
तावस्मभ्यं दृशये सूर्याय पुनर्दातामसुमद्येह[10] भद्रोम् ॥

---

1. HC त्रिभिः
2. HA सपवित्राण्यर्घ्य°; Āp सपवित्राणिरर्घ्यस्नानपाद्य°
3. HA °दीपनैवेद्यं; Āp adds पुष्प after गन्ध.
4. Āp adds अधर्माय स्वाहा after धर्माय स्वाहा.
5. Here ends Kaṇḍikā 5 in HC.
6. Āp होमं जुहोति
7. HC मध्यमस्या°. Sāyaṇa on TA VI.5 cites this sūtra verbatim beginning with this word and ending with पथिकृद्भ्यः.
8-8. T ताभ्यां राजन् परि देह्येनम्
9. T वशा
10. T °दातोवसु°

इति ॥ २ ॥ योऽस्य कौष्ठ्य इति तिसृभिर्यमगाथाभिस्त्रिः प्रदक्षिणं परिगायन्ति[1] ॥ ३ ॥ दक्षिणेन करकूपं गत्वा प्राचीनावीतं[2] कृत्वा[2] सव्यं जान्वाच्य हविरादाय मिथं मिथं[3] स्वधा पितृभ्यः इति पिण्डं[4] ददाति ॥ ४ ॥ त्रीनुदकाञ्जलीनुपनिनीयायम्य प्राणान् सप्तभिर्व्याहृतिभिः[5] सप्त पदानि प्राञ्चो गच्छन्ति ॥ ५ ॥ त्रीन् हि स्वर्गाल्लोकानारूढा[6] भवन्तीति विज्ञायते ॥ ६ ॥ दधिक्राव्णो अकारिषम् इति पुनः प्राणानायम्य[7] यथेतं प्रत्येत्य नमः[8] करकूपेभ्यो नमः करकूपेभ्यो नमः करकूपेभ्यः[8] इति करकूपमुपस्थाय यस्मै कामाय यममभिवादयन्ते ॥ ७ ॥ यमो दाधार इत्यनुवाकशेषेण हविरुद्धरन्ति[9] ॥ ८ ॥ नाके सुपर्णम् इति प्रवाहयन्ति ॥ ९ ॥ उरुँ हि राजा वरुणश्चकार इत्यनुवाकेनापोऽवगाहन्ते[10] ॥ १० ॥ आपोहिष्ठीयाभिर्मार्जयन्ते[11] ॥ ११ ॥ यमेन दत्तं त्रित एनमायुनक् इति चतसृभिरादित्यमुपस्थाय प्रतिसरमावध्नीरन्[12] ॥ १२ ॥ हविषा सर्वप्रायश्चित्तानि[13] हुत्वा[14] हविःशेषान् भक्षयन्ति भक्षोऽस्यमृतभक्षः इति ॥ १३ ॥ भक्षस्य शेषं[15] नयन्ति[16] पुत्राय प्रियाय प्रियवादिने पुत्रभार्यायै। पुत्रवान् भवति पुत्रवती भवतीति वैवस्वतोऽब्रवीत्।

यमो ह यदारमितः प्रयातमङ्के समाधाय पितेव पुत्रम्।
सकृद्[17] गतिं[17] गमयति तत्र[18] लोकान्[18]

1. Cited verbatim in Sāyaṇa's commentary on TĀ VI.5.
2–2. Āp प्राचीनावीती
3. H मिथद्रूपः; Āp मिथन्
4. H,Āp त्रीन् पिण्डान्
5. HC सप्तव्याहृतिभिः
6. H स्वर्गलोका°; T has त्रिभिः स्वर्गलोकमारूढा.
7. H,Āp प्राणानायम्य
8–8. H नमस्कारः कूपेभ्यो नमस्कारः कूपेभ्यो नमस्कारः कूपेभ्यः; T नमस्कारकूपेभ्यो नमस्कारकूपेभ्यो नमस्कारकूपेभ्यः
9. This sūtra is cited verbatim in Sāyaṇa's commentary on TĀ VI.5.
10. H °गाहयन्ति; T has अनुवाकशेषेण for अनुवाकेन.
11. HA आपो हि ष्ठा इति तिसृभि°. After this sūtra HA adds: प्रवर्त्तकावधे कलिकलुषमुक्त्वारोगशरीरा भवन्तीति विज्ञायते।
12. H °बध्नीत
13. T सर्वत्रप्रायश्चित्तानि
14. H,Āp हुत्वात्र; $T_2$ कृत्वा
15. Āp शेषान्
16. Āp निनयन्ति
17–17. H सुहृद्गतिं; T सकृद्गति
18–18 Āp तत्स्थमेनं

निवर्तने[1] चास्य छिनत्ति पन्थानं निवर्तने[1] चास्य छिनत्ति पन्थानम् ॥ इति ॥ १४ ॥ ॥७[2]॥

अथाजस्राणां[3] द्व्यहं त्र्यहं षडहं द्वादशाहं वा धारयते[4] यावद्वा संशयं[5] मन्येत ॥ १ ॥ असंशयेऽजस्रैर्विरम्याग्नय[6] आयुष्मते पुरोडाशमष्टाकपालं निर्वपेत् ॥ २ ॥ शतकृष्णलां पञ्चहविष्कां[7] वा यो ज्योगामयावीत्युक्तम् ॥ ३ ॥ पुरस्तादायुष्मत्याः पाथिकृत्या वा यजेत ॥ ४ ॥ ग्रामेऽप्येके पाथिकृती[8] समामनन्ति ॥ ५ ॥ वहिष्ठो वानप्रस्थो वारण्यमवतिष्ठेत[8]। ग्रामं वा प्रविशेद् राज्ञानुमतो ब्राह्मणैश्च[9] सह[9] वनधान्येन ॥ ६ ॥ अपि वा नाजस्रान् कुर्वीत। प्राग्दिष्टगमनाद् विहारं साधयेत् ॥ ७ ॥ प्रेतेऽपि विहरणमेके समामनन्ति। तदनर्धुकं प्रजाया इति विज्ञायते ॥ ८ ॥ उदगयने प्रमीताः[10] सौर्येण पथा देवलोकं यान्ति[11] दक्षिणायने सौम्येन पितृलोकमिति विज्ञायते ॥ ९ ॥ उदगयन आपूर्यमाणपक्षे दिवा कल्वन्ते श्रेयो मरणमित्युपदिशन्ति ॥ १० ॥ यदि पूर्वपक्षे रात्रौ मरणं शङ्केत सायमाहुतिं[12] हुत्वा तदैव प्रातराहुतिं[12] जुहुयात् ॥ ११ ॥ यद्यपरपक्षे सायंप्रातराहुतिभिरेनं पूर्वपक्षं नयेत्[13] ॥ १२ ॥ दर्शं[14] च कुर्यात् ॥ १३ ॥ इष्ट्यविभवे[15] प्रधानदेवताभ्यश्चतुर्गृहीतान्याज्यान्येकैकस्यै[16] देवतायै पुरोनुवाक्यामनूच्य याज्यया जुहुयात् ॥ १४[17] ॥ अथ यदि चातुर्मास्यमध्ये पूर्ववदेव सायंप्रातराहुतिभिर्दर्शपूर्णमासाभ्यां

1. H निवर्तेते
2. HC ॥ ६ ॥ इति षष्ठः पटलः; HA इति सत्याषाढ...द्वितीयः पटलः ॥ २ ॥.
3. Here begins section 8 of Praśna II in HC, and fourth paṭala in HA.
4. HC धारयति; HA धारयेत्
5. HA मरणसंशयं
6. HA अजस्रं for अजस्रैः
7. H °हविषं; T °हविषां. HC ends sūtra 2 with पञ्चहविष्कां वा.
8. Āp °तिष्ठते
9-9. Āp ब्राह्मणैश्च संराधितः सहैव
10. Āp प्रमीताः
11. Āp याति
12. Āp आहुती for आहुतिं
13. T नयेयुः
14. HA दर्शेष्टिं
15. HA यदीष्ट्यभावे
16. HA °गृहीतेनाज्येनै°. Here ends section 8 in HC and section 3 in Āp.
17. HA adds : यद्यष्टिमध्येऽवसितोऽप्रधानदेवताभ्यश्चतुर्गृहीतेनाज्येनैकैकस्यै देवतायै पुरोनुवाक्यामनूच्य याज्यया जुहुयात्।

चेष्टावशिष्टानि पर्वाण्यानीय सँस्थापयेत्[1] ॥ १५ ॥ पक्षविभवे तद्दैवतं पुरोडाशमामिक्षां पूर्णाहुतिं वा कुर्यात् ॥ १६ ॥ म्रियमाणस्यैवं न यज्ञलोपो[2] भवतीति विज्ञायते ॥ १७ ॥ ॥८॥

उक्तं दीक्षितप्रमीतप्रायश्चित्तम् ॥ १ ॥ यायावरा ह वै पुरा[3] नाम ऋषय[3] आसँस्तेऽध्वन्यथाम्यँस्तेऽर्धमासायार्धमासायाग्निहोत्रमजुहवुः[4] । तस्माद् यायावरधर्मेणामयाव्यार्तोऽध्वन्यापत्सु[5] वार्धमासायार्धमासायाग्निहोत्रं[6] जुहुयात् ॥ २ ॥ प्रतिपदि सायं चतुर्दश चतुर्गृहीतान्युन्नयति[7] । एका समित् । सकृद्धोमः । सकृत् पाणिनिमार्जनम्[8] । सकृदुपस्थानम्[9] । एवं प्रातः । एतावान् विकारः । शेषं प्रकृतिवत् ॥ ३ ॥ पक्षत्रये[10] पुनराधेयम्[10] ॥ ४ ॥ अग्नीन् समारोपयते धारयते वौपवसथ्यात्[11] ॥ ५ ॥ औपवसथ्येऽहनि[12] निर्मथ्यौपवसथ्यादिकं[13] कर्म प्रतिपद्यते यदि समारूढो[14] भवति[15] ॥ ६ ॥ यद्याहिताग्निरुत्सृष्टाग्निर्विच्छिन्नाग्निर्विधुराग्निर्वा प्रमीयेत न तमन्येन त्रेताग्निभ्यो दहन्तीति ॥ ७ ॥ विज्ञायते[16] चाधानप्रभृति[17] यजमान एवाग्नयो भवन्ति[18] ॥ ८ ॥ अथापि[19] ब्राह्मणं[20] तमसो वा एष तमः

---

1. HC समापयेत्
2. HA यज्ञलोपो ह
3–3. HA नाम पुरा ऋषय
4. HC °मजुहवुः; HA °होत्र [न] जुहवुः
5. Ap adds वा जन्ममरणयोः; HA वा जनन°
6. °अर्धमासाय not repeated in Rudradatta.
7. Rudradatta चतुर्गृहीतानुन्न°
8. HA पात्र°
9. Rudradatta omitted
10–10. Rudradatta omitted
11. Āp, Rudradatta वौपवसथात्
12. Rudradatta औपवसथे°
13. H निर्मथ्यौप°; Āp °वसथादि; Rudradatta तु न धारयत्पूर्वं ह्यादधाद्यान्निर्मथ्यौपवसथादि
14. Rudradatta समारूढा
15. HA जपति; Rudradatta भवति; Rudradatta on ĀpSS VI.29.1 has cited sūtra 2-6, sūtra 2 beginning with तस्माद् यायावर°.
16. Āp reads विज्ञायते as the last word of the preceding sūtra.
17. T,Āp आधान°
18. HC भवन्तीति; from चाधान° to भवन्ति omitted in T
19. HA अथ वै
20. HA ब्राह्मणं भवति

प्रविशति सह तेन यमाहिताग्निमन्येन त्रेताग्निभ्यो दहन्तीति[1] विज्ञायते[1] ॥ ९ ॥ तस्य प्राचीनावीत्यग्न्यायतनान्युद्धत्यावोक्ष्य यजमानायतने प्रेतं निधाय गार्हपत्यायतनेऽरणी संनिधाय मन्थति

येऽस्याग्नयो जुह्वतो माँसकामाः संकल्पयन्ते यजमानमाँसम् ।
जानन्तु ते हविषे सादिताय स्वर्गं लोकमिमं प्रेतं नयन्तु ॥

इति ॥ १० ॥ तूष्णीं विहृत्य द्वादशगृहीतेन स्रुचं पूरयित्वा तूष्णीं[*] हुत्वा प्रेतेऽमात्या इत्येतदादि कर्म प्रतिपद्यते[2] ॥ ११ ॥ ॥९॥

यद्याहिताग्निरध्वानं गच्छेत् सहाग्नित्रयेण[3] पार्श्वतोऽग्निहोत्रेणानुव्रजेदाहिताग्निरनन्तरम्[4] ॥ १ ॥ न व्यवेयात् ॥ २ ॥ यावत्यो ग्राममर्यादा नद्यश्च तावतीरतिक्रामन्नन्वारभेत[5] । अनन्वारम्भणे लौकिका भवन्ति ॥ ३ ॥ यदि पत्नी सीमान्त आदित्योऽभिनिम्रोचेदभ्युदियाद्वा[6] पुनराधेयं तस्य प्रायश्चित्तिः ॥ ४ ॥ यद्यात्मन्यरण्योर्वा समारूढेष्वग्निषु यजमानो म्रियेत पूर्ववदग्न्यायतनानि कल्पयित्वा यजमानायतने[7] प्रेतं निधाय[7] गार्हपत्यायतने लौकिकमग्निमुपसमाधाय[8] प्रेतस्य दक्षिणं पाणिमभिनिधाय[9] तत्पुत्रो भ्राता वान्यो[10] वा प्रत्यासन्नबन्धुः उपावरोह इत्युपावरोहयति । अपि वा

उपावरोह जातवेद इमं तं स्वर्गाय लोकाय नय प्रजानन् ।
आयुः प्रजां रयिमस्मासु धेह्यजस्रो[11] दीदिहि नो दुरोणे[11] ॥

इति[12] लौकिकेऽग्नावुपावरोहयति ॥ ५ ॥ अरण्योर्वोपावरोह्य मन्थेत् ॥ ६ ॥ यदरण्योः[13] समारूढः[14] स्यान्निर्वर्तमाने[14] प्रेतमन्वारम्भयित्वैतं मन्त्रं जपेत् ॥ ७ ॥

---

1–1. इति विज्ञायते omitted in H
2. After this Āp reads four sūtras identical with 11.11.5-8.
3. Āp सहाग्निहोत्रेण
4. Āp अग्नित्रयेण for अग्निहोत्रेण
5. T अभिक्रामन् for अतिक्रामन्
6. Āp अस्तमियात् for अभिनिम्रोचेत्
7–7. T,HC omitted
8. HA,Āp लौकिकाग्नि°
9. HC °मभिसमाधाय; Āp °मभिसंगृह्य
10. HA omitted
11–11. HA धेहि प्रेताहुतीश्चास्य जुषस्व स्वाहा
12. T इति°'तादुर्ति चान्यज्जुषस्व स्वाहेति
13. Āp यद्यरण्योः
14–14. HA समारूढस्याग्नेर्निर्वर्त°

विहरणादि समानम् ॥ ८ ॥ प्रवासमरणे संग्रामे वाहने वा शरीरमादाय विधिना दाहयेत् ॥ ९ ॥ आहिताग्नि जने[1] प्रमीतमुपश्रुत्याग्नये[2] पथिकृते पुरोडाशमष्टाकपालं निर्वपेत् । पूर्णाहुतिं[3] वा कुर्यात् । प्राचीनावीती जुहोतीत्येके[4] ॥ १० ॥ एतस्मिन्नेव विहारे पैतृमेधिकं कर्म प्रतिपद्यते ॥ ११ ॥ यद्येतस्मिन्नहनि[5] शरीराण्याहरन्ति यद्यन्यस्मिंस्तस्याभिवान्यवत्सायै[6] पयसाग्निहोत्रमित्युक्तम् ॥ १२ ॥ आहिताग्नि जने प्रमीतं तैलद्रोण्यामवधाय शकटेनाहरन्ति[7] ॥ १३ ॥ निर्मन्थ्येन वा दग्ध्वा कृष्णाजिनेऽस्थीन्युपनह्याहतेन[8] वाससा संवेष्ट्य[9] दीर्घवंशे[9] प्रबध्यानधो निदधानाः प्रयता मृन्मयभोजिन[10] आहरन्ति ॥ १४ ॥ ॥१०॥[11]

तानि ग्राममर्यादायां प्रतिष्ठाप्याग्नीन्[12] पैतृमेधिकं[13] च भाण्डं[13] निर्हरन्ति ॥ १ ॥ नासति यजमाने ग्राममर्यादामग्नीनतिहरेयुः । यद्यतिहरेयुर्लौकिकाः[14] संपद्येरन्निति विज्ञायते[15] ॥ २ ॥ प्रवसन् यजमानोऽग्निभ्यः परिदाय गृहानेति[16] । तस्माद् ग्राममर्यादां नातिहरन्ति ॥ ३ ॥ शरीरैरग्नीन् समानीय दहनवदवकाशं[17] जोषयित्वा[17] प्रेतेऽमात्या इत्येतदादि कर्म प्रतिपद्यते ॥ ४ ॥ तयोर्यः[18] पूर्वो म्रियेत

1. HA जले
2. HC °मुपसंश्रु°
3. HC,T आमिक्षां पूर्णाहुतिं
4. Āp जुहोतीति ( जुहोतीत्येके ); T वा जुहोति. Rudradatta on ĀpŚS IX.11.4 : भारद्वाजस्त्वत्रानुग्रहमाह प्राचीनावीती पूर्णाहुतिं जुहुयादित्येक इति ।
5. HC,T तस्मि°
6. H °वात्सायाः; HA adds अहनि after अन्यस्मिन्.
7. [illegible] d BhārPitṛS II.10.13-11.1.
8.
9-9.
10. HA °भाजना; T °भोजन; Rudradatta °भोजना
11. HA ख० ३
12. Āp प्रतिष्ठाप्य दहनवदवकाशं जोषयित्वा तस्मिन्नग्नीन्
13-13. H पैतृमेधिकभाण्डं च; Rudradatta भाण्डं च
14. Āp °हरेयुरग्नयो लौकिकाः
15. H विज्ञायते च
16. Āp गृहानेतीति विज्ञायते; H गृहानेति यदि सीमान्तरे पत्न्यभिनिम्रोचेदभ्युदियाद्वा लौकिकाः संपद्येरन् । यद्याहिताग्निरध्वानं गच्छेत्सहाग्नित्रयेण पार्श्वतोऽग्निहोत्रेणानुव्रजेत् । आहिताग्निरन्तरं न व्यवेयात् । यावत्यो ग्राममर्यादा नद्यश्च तावतीरतिकामन्तमन्वारभेयाताम् । यदि नान्वारभेयातामग्नयो लौकिकाः संपद्येरन् । T गृहानेति यदि सीमान्तरे पत्नीमभितो निम्रोचेदभ्युदियाद्वा लौकिकाः संपद्येरन् ।
17-17. Āp omitted
18. Āp द्वयोर्यः

यजमानः[1] पत्नी वा[1] तस्याग्नित्रेतायां पितृमेधः[2] संपद्यते ॥ ५ ॥ यः पश्चात्तस्यौपासनेन ॥ ६ ॥ सहैव प्रमीते[3] सहैव पितृमेधः ॥ ७ ॥ दारकर्मणि यद्यशक्त आत्मार्थमग्न्याधेयं कुर्याद्दर्शपूर्णमासाग्रयणार्थं[4] च। शेषाणि कर्माणि न भवन्ति ॥ ८ ॥ यद्याहिताग्निः[5] पशुभ्यो म्रियेत आ गावो अग्मन् इति द्वे चतुर्गृहीते जुहुयात्[5] ॥ ९ ॥ यद्याहिताग्निरशनिहतो म्रियेत तस्य प्रायश्चित्तं मूर्धानं दिवो अरतिं पृथिव्याः इति चतुर्गृहीतं जुहुयात्। एतदेवास्य[6] प्रायश्चित्तं भवति[6] ॥ १० ॥ यद्याहिताग्निर्विषदष्टो म्रियेत तस्य[7] प्रायश्चित्तं[7] नमो अस्तु सर्पेभ्यः इति तिसृभिश्चतुर्गृहीता[8] आहुतीर्जुहुयात्[8] ॥ ११ ॥ यद्याहिताग्निरप्सु म्रियेत तस्य[7] प्रायश्चित्तं[7] इमं मे वरुण ॥ तत्त्वा यामि इति द्वे चतुर्गृहीते जुहुयात् ॥ १२[9] ॥ यद्याहिताग्निर्दंष्ट्रिभ्यो म्रियेत तस्य[7] प्रायश्चित्तं[7] दंष्ट्राभ्यां मलिम्लून् इति द्वे चतुर्गृहीते[10] जुहुयात् ॥ १३ ॥ ॥ ११ ॥

यद्याहिताग्निः प्रोषितः प्रमीतो न प्रज्ञायेत[11] यां दिशमभिप्रस्थितः स्यात् तामस्याग्निभिः कक्षं दहेयुः ॥ १ ॥ अपि वा त्रीणि षष्टिशतानि पलाशवृन्तानां तैः कृष्णाजिने पुरुषाकृतिं कुर्वन्ति[12]। पलाशवल्कैः कुशैर्वा संधिषु संवेष्ट्य चत्वारिंशता शिरः प्रकल्पयते। दशभिर्ग्रीवाम्। विंशत्योरः। त्रिंशतोदरम्। पञ्चाशतापञ्चाशतैकैकं बाहुम्। ताभ्यामेव पञ्चभिःपञ्चभिरङ्गुलीरुपकल्पयते।

---

1–1. Ap omitted. Ap reads sūtras 5–13 differently and in a different order. It reads sūtras 5–8 after BhārPitṛS II.9.11. The rest of the sūtras read as follows :—यद्याहिताग्निरप्सु म्रियेत तस्य प्रायश्चित्तम् इमं मे वरुण, तत्त्वा यामि इति द्वे चतुर्गृहीते जुहुयात्। एतदेवास्य प्रायश्चित्तं भवतीति विज्ञायते। यद्याहिताग्निः पशुभ्यो म्रियेत आ गावो अग्मन् इति द्वे चतुर्गृहीते जुहुयात्। यद्याहिताग्निर्दंष्ट्रिभ्यो म्रियेत दंष्ट्राभ्यां मलिम्लून् इति द्वे चतुर्गृहीते जुहुयात्। यद्याहिताग्निरशनिहतो म्रियेत मूर्धानं दिवो अरतिं पृथिव्याः इति चतुर्गृहीतं जुहुयात्। यद्याहिताग्निर्विषहतो म्रियेत नमो अस्तु सर्पेभ्यः इति तिसृभिश्चतुर्गृहीताभ्याहुतीर्जुहुयात्। एतदेवास्य प्रायश्चित्तं भवतीति विज्ञायते ॥ ६ ॥

2. T पैतृमेधिकः
3. T, Ap प्रेते
4. Ap कुर्यादग्निहोत्रं दर्शपूर्णमासावाग्रयणं
5–5. T omitted
6–6. H omitted
7–7. H omitted
8–8. H *चतुर्गृहीतं जुहुयात्
9. HC reads sūtra 12 before 11.
10. H चतुर्गृहीतेन
11. Ap विज्ञायेत
12. H कृत्वा तामस्याग्निभिर्दहेयुरिति विज्ञायते

सप्तत्यासप्तत्यैकैकं[1] पादम् । ताभ्यामेव पञ्चभिःपञ्चभिरङ्गुलीरुपकल्पयते[1] । अष्टाभिः शिश्नम् । द्वादशभिर्वृषणम् । तैः[2] कृष्णाजिने पुरुषाकृतिं कृत्वा[2] स्नापयित्वालंकृत्यान्तर्वेदि[3] कृष्णाजिनं दक्षिणाग्रीवमधरलोमास्तीर्य तस्मिन्नेनमुत्तानं निपात्य पत्तोदशेनाहतेन वाससा प्रच्छाद्य बान्धवाः पर्युपविशन्ति अयमस्यसौ यस्य त इमेऽग्नयः[4] इति ॥ ३ ॥ प्रेतेऽमात्याः इत्येतदादि कर्म[5] प्रतिपद्यते ॥ ४ ॥ यदि[6] तानि[6] न विन्देरन् नवानां दर्भाणां याज्ञिकानां वा[7] वृक्षाणां वृन्तैः[8] कृष्णाजिने पुरुषाकृतिं कृत्वा तामस्याग्निभिर्दहेयुरिति[9] विज्ञायते ॥ ५ ॥ यदि तानि न विन्देरन् भूम्यां पाँसूनुद्धृत्य तैः कृष्णाजिने पुरुषाकृतिं कृत्वा मधुना सर्पिषा वा सँसृज्य विधिना दहेयुः[9] ॥ ६ ॥ यद्येवं[10] कृते[11] पुनरागच्छेद्[11] घृतकुम्भादुन्मग्नस्य जातकर्मप्रभृति द्वादशरात्रं व्रतं चरित्वा[12] तयैव जाययाग्नीनाधाय[13] व्रात्येन[14] पशुना यजेत ॥ ७ ॥ गिरिं गत्वाग्नये कामायेष्टिं निर्वपेत्[15] ॥ ८ ॥ ईप्सितैः क्रतुभिर्यजेतेति[16] विज्ञायते ॥ ९ ॥ ॥१२॥[17]

॥ इति द्वितीयः प्रश्नः ॥

---

1-1. T omitted
2-2. HC omitted; HA in brackets
3. Āp adds आच्छाद्य after स्नापयित्वा.
4. H इमे अग्नयः
5. Āp omitted
6-6. Āp यद्येतानि
7. HC,Āp omitted
8. H तैः
9-9. Thus T which, however, takes back मधुना सर्पिषा वा संसृज्य after पुरुषाकृतिं कृत्वा. Āp मधुना सर्पिषा वा संसृज्य दाहविधिना दहेत्। H तामस्याग्निभिर्दहेयुरिति। विज्ञायते। यदि तानि न विन्देरन् भूम्याः पांसूनुद्धृत्य मधुना सर्पिषा वाभिसंयुत्य (HA संसृज्य) तैः कृष्णाजिने पुरुषाकृतिं कृत्वा तामस्याग्निभिर्दहेयुरिति विज्ञायते।
10. H,Āp यद्येतस्मिन्
11-11. HC कृतेग्निभिरागच्छेत्; HA कृतेग्निभिः पुनरागच्छेद्; T कृतेष्वेमिपुनरागच्छेद्
12. Āp चरित्वा शुल्कपूर्वया जायया पाणिग्रहणं विधीयते
13. HC °नादधीत
14. HA प्राजापत्येन
15. HA adds : आयुष्मतीं शतकृष्णलाम्। दिशामवेष्ट्या वा यजेत। अत ऊर्ध्वम्
16. HC क्रतुभिर्यजेत क्रतुभिर्यजेत; HA यज्ञक्रतुभिर्यजेतेति विज्ञायत इति विज्ञायते। Āp क्रतुभिर्यजेतेति यजेतेति.
17. HC ॥ ११ ॥ इत्यष्टमः पटलः ॥ ८ ॥ इति हिरण्यकेशिसूत्रे एकोनत्रिंशः प्रश्नः समाप्तः ॥ २९ ॥ इति हिरण्यकेशिसूत्रं समाप्तम् ॥ HA ख० ४ ॥ इति सत्याषाढहिरण्यकेशिश्रौतसूत्रे (पितृमेधापरपर्याये) एकोनत्रिंशप्रश्ने चतुर्थः पटलः ॥ ४ ॥

## APPENDIX A

**HA, Āp have the following additional portion :—**

अथ गर्भिण्यास्त्रिप्यक्रियाया ऊर्ध्वं मृतौ तां श्मशानं नीत्वा दहनवदवकाशं जोषयेत् ॥ १ ॥ चितां कल्पयित्वा तस्याश्रिताया अपरेण परिश्रिते करोति ॥ २ ॥ तामुत्तानां कृत्वा तस्या वामोदरमालिख्य हिरण्यगर्भः समवर्तताग्रे इत्यालोकनं च कृत्वा कुमारं दृष्ट्वा तमभिमन्त्रयते जीवतां[1] मम पुत्रः[1] इति ॥ ३ ॥ अथ बालं स्नापयेद्धिरण्य-मन्त्रर्धाय । जीवता[2] ग्राममायाति ॥ ४ ॥ यस्ते स्तनः शशयः इति स्तनं प्रदाय तस्मिन्नुदर आज्याहुतीर्जुहोति शतायुधाय शतवीर्याय इति पञ्च ॥ ५ ॥ प्राणाय स्वाहा व्यानाय स्वाहा पूष्णे स्वाहा इत्येताभ्यामनुवाकाभ्यां जुहोति ॥ ६ ॥ व्रणं[3] कुर्यात् ॥ ७ ॥ प्रेतां[4] चितिमारोप्य[5] विधिना दाहयेत्[6] ॥ ८ ॥

---

## APPENDIX B

### *HIRANYAKEŚI PITṚMEDHA XXIX.10-11*

(Caland's edition)

[BhārPitṛS II.10-12 agrees in general with Satyāṣāḍha Hiraṇyakeśi PitṛS XXIX.10-11 (HC = Caland's edition) and XXIX. Paṭala 4 Khaṇḍa 3 and 4 (HA = Anandaśrama edition). The latter, however, differs a little from the former in the order of the sūtras. The order of sūtras in HC and HA is identical. Their text, however, varies a little from each other at places. The variants are recorded in the foot-notes to the main text. The relevant text in HC is given below.]

यद्यारण्यरण्योर्वा समारूढेष्वग्निषु यजमानो म्रियेत पूर्ववदग्न्यायतनानि कल्पयित्वा गार्हपत्यायतने लौकिकमग्निमुपसमाधाय प्रेतस्य दक्षिणं पाणिमभिसमाधाय तत्पुत्रो भ्राता यान्यो वा प्रत्यासन्नबन्धुरुपावरोहेत्युपावरोहयति । अपि वोपावरोह जातवेद इमं तं स्वर्गाय

---

1-1. HA जीवतु मम पुत्रो दीर्घायुत्वाय वर्चसे

2. HA जीवतो

3. HA व्रणं च

4. HA प्रेतं

5. HA चिता॰

6. HA दहेत्

लोकाय नय प्रजानन्नायुः प्रजां रयिमस्मासु धेह्यजस्रो दीदिहि नो दुरोण इति लौकिके-ऽग्नावुपावरोहयति। अरण्योर्वोपावरोह्य मन्थेत्। यदरण्योः समारूढः स्यान्निर्वर्तमाने प्रेतमन्वारम्भयित्वैतं मन्त्रं जपेत्। विहरणादि समानम्। आहिताग्निं जने प्रमीतमुपसंश्रुत्याग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्। आमिक्षां पूर्णाहुतिं वा कुर्यात्। प्राचीनावीती जुहोतीत्येके। एतस्मिन्नेव विहारे पैतृमेधिकं कर्म प्रतिपद्यते। तस्मिन्नहनि शरीराण्याहरन्ति। यद्यन्यस्मिंस्तस्याभिवान्यवत्साया: पयसाग्निहोत्रमित्युक्तम्। आहिताग्निं जने प्रमीतं तैलद्रोण्यामवधाय शकटेनाहरन्ति। निर्मन्थ्येन वा दग्ध्वा कृष्णाजिनेऽस्थीन्युपनह्यति वाहतेन वाससा संवेष्ट्य दीर्घवंशे प्रबध्य नाधो निदधानाः प्रयता मृन्मयभोजना आहरन्ति॥ १०॥

तानि ग्राममर्यादायां प्रतिष्ठाप्याग्नीन् पैतृमेधिकभाण्डं च निर्हरन्ति। नासति यजमाने ग्राममर्यादामग्नीनतिहरेयुः। यद्यतिहरेयुर्लौकिकाः संपद्येरन्निति। विज्ञायते च प्रवसन् यजमानोऽग्निभ्यः पराद्याय गृहानेति। यदि सीमान्तरे पत्न्यभिनिम्रोचेदभ्युदियाद्वा लौकिकाः संपद्येरन्। यद्याहिताग्निरध्वानं गच्छेत्सहाग्नित्रयेण पार्श्वतोऽग्निहोत्रेणानुव्रजेत्। आहिताग्निरन्तरं न व्यवेयात्। यावत्यो ग्राममर्यादा नद्यश्च तावतीरतिक्रामन्तमन्वारभेयाताम्। यदि नान्वारभेयातामग्नयो लौकिकाः संपद्येरन्। तस्माद् ग्राममर्यादां नातिहरन्ति। शरीरैरग्नीन्त्समानीय दहनवदवकाशं जोषयित्वा प्रेतेऽमात्या इत्येतदादि कर्म प्रतिपद्यते। तयोर्यः पूर्वो म्रियेत यजमानः पत्नी वा तस्याग्निस्तेतायां पितृमेधः संपद्यते। यः पश्चात्तस्यौपासनेन। सहैव प्रमीते सहैव पितृमेधः। दारकर्मणि यद्यशक्त आत्मार्थमग्न्याधेयं कुर्याद्दर्शपूर्णमासाग्रयणार्थं च। शेषाणि कर्माणि न भवन्ति। यद्याहिताग्निः पशुभ्यो म्रियेता गावो अग्मन्निति द्वे चतुर्गृहीते जुहुयात्। यद्याहिताग्निरशनिहतो म्रियेत तस्य प्रायश्चित्तं मूर्धानं दिवो अरतिं पृथिव्या इति चतुर्गृहीतं जुहुयात्। यद्याहिताग्निरप्सु म्रियेतेमं मे वरुण तत्त्वा यामीति द्वे चतुर्गृहीते जुहुयात्। यद्याहिताग्निर्विषदष्टो म्रियेत नमो अस्तु सर्पेभ्य इति तिसृभिश्चतुर्गृहीतैर्जुहुयात्। यद्याहिताग्निर्दंष्ट्रिभ्यो म्रियेत दंष्ट्राभ्यां मलिम्लूनिति द्वे चतुर्गृहीते जुहुयात्। यद्याहिताग्निः प्रोषितः प्रमीतो न प्रज्ञायेत यां दिशमभिप्रस्थितः स्यात्तामस्याग्निभिः कक्षं दहेयुः। अपि वा त्रीणि षष्टिशतानि पलाशवृन्तानां तैः कृष्णाजिने पुरुषाकृतिं कृत्वा तामस्याग्निभिर्दहेयुरिति विज्ञायते। पलाशवल्कैः कुशैर्वा संधिषु संवेष्ट्य चत्वारिंशता शिरः प्रकल्पयते। दशभिर्ग्रीवां विंशत्योरः। त्रिंशतोदरं। पञ्चाशतापञ्चाशतैकैकं बाहुम्। ताभ्यामेव पञ्चभिःपञ्चभिरङ्गुलीरुपकल्पयते। सप्तत्यासप्तत्यैकैकं पादं। ताभ्यामेव पञ्चभिःपञ्चभिरङ्गुलीरुपकल्पयते। अष्टाभिः शिश्नम्। द्वादशभिर्वृषणम्। स्नापयित्वालंकृत्यान्तर्वेदि कृष्णाजिनं दक्षिणाग्रीवमधरलोमास्तीर्य तस्मिन्नेनमुत्तानं निपात्य पत्तोदशेनाहतेन वाससा प्रच्छाद्य बान्धवाः पर्युपविशन्त्ययमस्यसौ यस्य त इमे अग्नय इति। प्रेतेऽमात्या इत्येतदादि कर्म प्रतिपद्यते।

यदि तानि न विन्देरन्यत्राना दर्भाणा याज्ञिकाना वृक्षाणा तैः कृष्णाजिने पुरुषाकृतिं कृत्वा तामस्याग्निभिर्दहेयुरिति विज्ञायते। यदि तानि न विन्देरन् भूम्याः पांसूनुद्धृत्य मधुना सर्पिषा चाभिसंयुत्य तैः कृष्णाजिने पुरुषाकृतिं कृत्वा तामस्याग्निभिर्दहेयुरिति विज्ञायते। यद्येतस्मिन् कृतेऽग्निभिरागच्छेद् घृतकुम्भादुन्मग्नस्य जातकर्मप्रभृति द्वादशरात्रं व्रतं चरित्वा तयैव जाययाग्नीनादधीत। व्रात्येन पशुना वा यजेत। गिरिं गत्वाग्नये कामायेष्टिं निर्वपेत्। ईप्सितैः क्रतुभिर्यजेत क्रतुभिर्यजेत ॥ ११ ॥

इत्यष्टमः पटलः ॥ ८ ॥

इति हिरण्यकेशिसूत्रे एकोनत्रिंशः प्रश्नः समाप्तः ॥ २९ ॥

॥ इति हिरण्यकेशिसूत्रं समाप्तम् ॥

---

# भारद्वाजपरिशेषसूत्रम्

अथातः[1] सूत्रपरिशेषान् व्याख्यास्यामः ॥ १ ॥ बाहुमात्राः परिधयः स्फ्यः शम्या च[2] ॥ २ ॥ प्रादेशमात्राण्यरत्निमात्राणि चेध्मकाष्ठानि शुष्काण्यार्द्राणि वा सवल्कलानि ॥ ३ ॥ अङ्गुष्ठपर्वमात्रबिलः स्रुवो भवत्यर्धप्रादेशमात्रबिलाः[3] स्रुचः[4] ॥ ४ ॥ वरुणप्रघासेषु यथाप्रकृति होतानुब्रूयात् ॥ ५ ॥ द्विवद् ब्रह्मानुजानाति। यथाप्रकृत्येव वा ब्रह्मा प्रसौति ॥ ६ ॥ गृहमेधीये न देवता आवाहयति सामिधेन्यभावात्। आवाहयेद्वा ॥ ७ ॥ अग्नीन् वाग्नी वा परिस्तीर्योपवसति ॥ ८ ॥ बर्हिर्मुष्टिं[5] वा प्रहृत्य समिष्टयजुर्जुहोति ॥ ९ ॥ यत्र क चाग्नौ परिस्तीर्य होतव्यम्[6]। अनग्नौ हिरण्यमन्तर्धायाभिजुहुयात् ॥ १० ॥ स्विष्टकृद्विकारो वनस्पतिः[7] ॥ ११ ॥ हस्तेन वोपयज[8] उपयजति। नाग्नोपस्तरणाभिघारणानि भवन्ति ॥ १२ ॥ अनीकवतेन प्रचर्य गृहमेधीयाय[9] वत्सानपाकरोत्यपराह्णे वा ॥ १३ ॥ शालामुखीये उदयनीयेन चरन्ति। प्राञ्चं प्रायणीयमासादयति[10] प्रत्यञ्चमुदयनीयमिति विज्ञायते ॥ १४ ॥ द्विरात्रादूर्ध्वं तन्तुमती स्यात्। उतैकाहमुत द्व्यहं न जुह्वति हुतमेवास्य भवतीति विज्ञायते[11] ॥ १५ ॥ आधानानन्तरं सर्वैर्मन्त्रैरेकैकं[12] शमयेदाहवनीयं

1. Pā begins with श्रीगणेशाय नमः.
2. cf. Rudradatta on ĀpŚS I.15.13 : बाहुमात्राः परिधयः शम्या चेति भारद्वाजः। Dhūrtasvāmin on ĀpŚS I.15.10 : स्फ्यः शम्या च बाहुमात्राविति भरद्वाजः। Rāmāgnicit on Dhūrtasvāmin's Bhāṣya on ĀpŚS 1.5.9 : बाहुमात्राः परिधयः शम्या च भरद्वाजमतात्। Mahādeva on SatS I.2 (p. 88) : (परिधयो) बाहुमात्रा इति भारद्वाजः; again on SatS I.4 (p. 103) : स्फ्यः शम्या च बाहुमात्राविति भारद्वाजः।
3. Pā °मात्रं°
4. *This sūtra is cited verbatim by Mahādeva on SatS I.4 (p. 110).*
5. Pā बर्हिर्मुष्टिं
6. This sūtra is cited verbatim by Gopinātha on SatS VII.1 (p. 570).
7. BaudhŚS XXVII.14 : वनस्पतिः स्विष्टकृद्विकारः।
8. Pā वोपयते
9. *Pā गृहमेधीयस्य where या is added afterwards between धी and य.*
10. Pā प्रणीय°
11. Rāmāgnicit on ĀpŚS IX.8.5 seems to have referred to this sūtra when he says : केचित् यस्यैवं विदुषः इत्यर्थवादत्वात् सर्वेषामपि ब्राह्मणोक्तं लभ्यत इति वर्णयन्ति। तथा भरद्वाजमतिः। He further quotes : तस्य द्विरात्रादूर्ध्वं तन्तुमती स्यादिति भरद्वाजः।
12. Pā °रैकैकं; others °रेकं; Rudradatta on ĀpŚS V.16.4 quotes this sūtra with °रैकैकं.

वा ॥ १६ ॥ यदि त्वरेत पशुतन्त्रेऽग्नाविष्णुभ्यामिति चतुर्गृहीतं स्यादिति ॥ १७ ॥ समानतन्त्रो वा कैडिनेन स्वातवसः स्यात् ॥ १८ ॥ असोमयाजी न संनयति। तस्यैन्द्राग्नो[1] नियतः ॥ १९ ॥ नासोमयाजिनो ब्राह्मणस्याग्नीषोमीयः पुरोडाशो विद्यते। नैन्द्राग्नः संनयतः। असोमयाजिनोऽपि ब्राह्मणस्याग्नीषोमीय इत्येकेषाम् ॥ २० ॥ उपांशुयाजमन्तरा यजत्यजामित्वायेति विज्ञायते[2]। अनारभ्यवाद इत्येकेषाम् ॥ २१ ॥ समानदेवत्यौ समवदाय प्रचरति हविर्गणेषु पशुगणेषु च[3] ॥ २२ ॥ पृषदाज्यधान्युपभृद्वत् ॥ २३ ॥ वनस्पतेः पुनरतिक्रम्य वनस्पतिं यजेत्। अपुनरतिक्रम्य प्रचरन् प्रदक्षिणमावृत्याश्रयेत् ॥ २४ ॥ सांनाय्यधर्माः[4] पयस्या दधि पयः पशुश्च[5] ॥ २५ ॥ इन्द्रियावी भूयासम् इति यत्र क्व च पयस्या दधि पयो धान्यत्र वैश्वदेव्याः। तथा पशोरन्यत्र निर्दिष्टानुमन्त्रणेभ्यः ॥ २६ ॥ संसृष्टे मिश्रणं मुख्यं वा स्वधर्मः स्यात् ॥ २७ ॥ सांनाय्यप्रायश्चित्तान्यामिक्षायां[6] न विद्यन्ते ॥ २८ ॥ यद्यन्यतरद् व्यापद्येत यत एव कुतश्चोत्पाद्य प्रचरेत्। यद्युभयं व्यापद्येताज्येन पयसा[7] दध्ना वा[7] यजुरुत्पूतेन प्रचरेत् ॥ २९ ॥ आज्येन वाजिने व्यापन्ने[6] ॥ ३० ॥

अथ प्रयाजाननुमन्त्रयते ॥ ३१ ॥ यथाप्रकृत्याद्यांश्चतुरः। तत ऊर्ध्वं देवतानामाग्नीणामिति यथादेवतं षट्। यथाप्रकृत्युत्तमः प्रयाजः ॥ ३२ ॥ अथानूयाजाननुमन्त्रयते ॥ ३३ ॥ आद्यांश्चतुरः प्रजावान् भूयासम् इति। उत्तरांश्चतुरः पशुमान् भूयासम् इति। उत्तमस्यानुमन्त्रणेन नवमम्। प्रथमस्यानुमन्त्रणेन दशमम्। यथाप्रकृत्युत्तमोऽनूयाजः ॥ ३४ ॥ पितृयज्ञा नासोमाश्चानुवषट्कारा‍द्वा पूर्वाः ॥ ३५ ॥ पशुमालभ्य पुरोडाशं निर्वपतीति विज्ञायते। अनन्तरवादोऽभिप्रेतः। वपया प्रचर्य पुरोडाशेन प्रचरतीति तद्वत् ॥ ३६ ॥ ऐन्द्राग्नः काम्यानां पशूनां

1. MSS तस्यैंद्राग्नो
2. P3 ज्ञायते
3. Rudradatta on ĀpSS IX.1.23 and Mahādeva on SatS XV.1.25 cite this sūtra as समानदेवतेषु समवदाय etc.
4. P3 °धर्मा
5. cf. SatS IV.5 : पशुः प्रातर्दोहविकारः कालसामान्यात्. Rudradatta on ĀpSS VII.1.2 : तथा पयोधर्माः पशाविति भारद्वाजः।
6-6. cf. Rudradatta on ĀpSS IX.15.10 and Mahādeva on SatS XV.4.30 : तत्र चाह भारद्वाजः सांनाय्यप्रायश्चित्ता"'दध्ना पयसा वा यजुरुत्पूतेन प्रचरेत्। आज्येन वाजिने व्यापन्न इति। Rāmāgnicit on ĀpSS IX.1.34 : आमिक्षायां न सांनाय्यप्रायश्चित्तमिति भरद्वाजः।
7-7. P3 दध्ना पयसा वा

प्रकृतिः। अग्नीषोमीय इतरेषाम्[1] ॥ ३७ ॥ वैश्वदेविक एककपाल एककपालानाम् ॥ ३८ ॥ नान्यत्र[2] चातुर्मासिकेभ्यो नामनामभिरभिजुहोति[3] ॥ ३९ ॥ पृथग्भूत एककपालस्तस्य स्वदेवतेन[4] प्रचर्य सर्वं पुरोडाशमवदाय स्विष्टकृतं यजति ॥ ४० ॥ यो हविर्गणे तस्य यथाग्रयणे[5] ॥ ४१ ॥ इष्टानुमन्त्रणानि[5] नान्यस्य प्रकृतिं गमयेत्[6] ॥ ४२ ॥ निर्दिष्टप्रकृत्योः संनिपाते प्रकृतिर्बलीयसी ॥ ४३ ॥ सर्वेषां हविषां नानासँस्काराणां यथाप्रकृत्यनुमन्त्रणकल्पः। सँस्कारपृथक्त्वान्न[7] प्रकृतिं गमयेत् ॥ ४४ ॥ अथ नक्षत्रेष्टीनां याज्यानुवाक्या यथासमाम्नाता[8] उपहोमाश्च भवन्ति ॥ ४५ ॥ प्राकृतावाज्यभागौ[9]। आम्नाते संयाज्ये। यथाश्रद्धं दक्षिणा भवन्ति ॥ ४६ ॥ आग्नेयमष्टाकपालमनुमत्यै[10] चरुं सर्वत्रानुषजति नक्षत्रहविर्मध्ये ॥ ४७ ॥ अनुपूर्वमितराभिरिष्टिभिरन्वहं यजते। यथा वायः ॥ ४८ ॥ तां त्र्यवराध्यां[11] त्रिरर्ध्यामाहरेत्[12]। अन्वहमत्रशिष्टानि हवींषि निर्वपति। अर्थायार्थायोपहोमाञ्जुहोति ॥ ४९ ॥ तल्लिङ्गैर्नियम्यन्ते। त एते काम्यानामुपहोमा भवन्ति ॥ ५० ॥ क्रत्वादौ क्रतुकामं कामयेत यज्ञाङ्गादौ यज्ञाङ्गकामम्। यावति[13] तत्र सूर्यो[13] गच्छेद्यत्र जघन्यं पश्येत्तावति कुर्वीत यत्कारी स्यात् पुण्याह एव कुरुत इति विज्ञायते ॥ ५१ ॥[14] अग्रेण भ्राजहितं[15] निरूढस्य पात्रप्रयोगो भवति ॥ ५२ ॥ दक्षिणस्य हविर्धानस्य विहारस्य चाग्रेण खरं बहिर्वाभ्यन्तरं वा सोमे ॥ ५३ ॥ यत् पच्यमानानां प्रतिङ्सेत्[16] पुरीषेण तत् संपूरयेत् ॥ ५४ ॥ अग्रेणाहवनीयं पितृयज्ञस्य[17] संचरो भवति[18] ॥ ५५ ॥

---

1. Cited verbatim by Rudradatta on ĀpŚS XI 16.2
2. Emended. MSS अन्यत्र
3. Br,Bm °भिरजुहोति; Pb second hand °भिर्जुहोति
4. Pā ॥ देवतेन
5-5. Emended Bm यथाग्रयनेष्टा°; the rest यथाग्रयणे नेष्टा°
6. Pā ॥ मयेत्
7. Bm °पृथक्त्वष
8. Pā समाम्नाता
9. Pā प्रकृता°
10. Thus Pā; the rest °मनुत्यै
11. Br,Bm त्र्यवरध्यो
12. Br,Bm,Pā,Pb त्रिराध्यामा°
13-13. Pā या° सूर्यो; the rest सूर्यो
14. Br,Bm,Pā,Pb show here the figure ॥ २२ ॥
15. Br,Bm,Pb भ्राजिहितं; Pb second hand भ्राजहितं
16. Br,Bm प्रतिहसेत्
17. Pā पितृयज्ञ
18. Cited verbatim by Rudradatta on ĀpŚS VIII.15.1

अथाक्षरान्ताः ॥ ५६ ॥ याज्यान्ते स्तुविसर्जनीयास्तदेवाविकृतं[1] श्रावयित्वा वषट्कुर्यादन्यत्र सरेफाद्रेभ्यः[2] ॥ ५७ ॥ अथाग्नीन् ज्वलतो[3] नापयेत्[3] ॥ ५८ ॥ अथ चातुर्मास्यानां महेष्टिष्वग्रतो गार्हपत्यो दर्शपूर्णमासप्रकृतित्वात् ॥ ५९ ॥ यस्यां वेद्यामग्निः प्रणीयते सा पाशुक्याकृतिः[4] । पञ्चारत्निर्भवति ॥ ६० ॥ उभयार्था[5] सोमेऽन्यत्राभिचरणिकेभ्यः[5] ॥ ६१ ॥ देशेदेशे कामाः ॥ ६२ ॥ पञ्चगृहीतं पशुकामस्य ॥ ६३ ॥ न क्रतुकामा[6] भवन्ति ॥ ६४ ॥ मन्त्रव्यवाये मन्त्राभ्यासो द्रव्यपृथक्त्वेऽर्थपृथक्त्वे[7] देशपृथक्त्वे च ॥ ६५ ॥ यथा कण्डूयनस्वमनदीतरणावर्षणामेध्यप्रतिमन्त्रणानीति[8] ॥ ६६ ॥ समानजातीयेषु बहुवन्मन्त्रान्नमेत् । यथा ग्रहे प्रतिग्रहे ॥ ६७ ॥ मन्त्रविरोधे संनमयेत् । संनमनविरोधे[9] मन्त्रलोपः ॥ ६८ ॥[10] यदि दीक्षितस्याश्रु पतेत् तदनुमन्त्रयेत कृपा आपः स्थ स्वाहाकृताः पृथिवीमाविशत इति । क्षुदा[11] इति स्तुहनम् । बीभत्सा इति स्वेदम्[12] । तपस्या इति[12] स्वेदम् । क्रव्या इति लोहितम् । अंहोमुच[13] इति मूत्रपुरीषे । रेतःसिच[14] इति रेतः । आपः स्थ इति सर्वत्रानुषजति ॥ ६९ ॥ द्वादशाहं दक्षिणार्थे[15] भिक्षेत । द्रव्यासंभवे[16] भूयस्तदर्थत्वात् ॥ ७० ॥ अद्भयः पयतेऽपोऽभिवत्ते इत्यहरहः प्रस्थितो जपति ॥ ७१ ॥ अत ऊर्ध्वं याजमानं यथासमाम्नातम् ॥ ७२ ॥ वाजपेयं साग्निकमेके[17] समामनन्ति । वसन्त एके ॥ ७३ ॥ यत्र क्व चैकाहे साग्निके पड्डुपसदः । तिस्र

---

1. Thus Pā; Br,Bm स्तुवि॰ स्तदेव विकृतं; the rest ॰स्तदेव विकृतं
2. Pā ॰द्रयर्द्देभ्यः
3-3. Thus Pā; Pb ज्वलतोपर्येत्
4. Thus Pā; the rest पाशुक्या प्रकृतिः
5-5. Pā उभयार्थाः सोमा अन्यत्रा॰
6. Thus Pā; the rest क्रतुका
7. Rāmāgnicit on ĀpŚS V.17.3: द्रव्यपृथक्त्वेऽभ्यावर्तेत इति भरद्वाजः। Mahādeva on SatS I.1 (p. 45) cites the sūtra मन्त्रव्यवाये etc. verbatim. Again on SatS I.2 (p. 85) he says: तदेव भरद्वाजवचनेन द्रव्यपृथक्त्वेऽभ्यावर्तेत इत्यत्र सूत्रे व्याख्यातम्।
8. Thus Pā; the rest ॰वार्षणा॰
9. Pā संनमना॰
10. Pā shows here the *kaṇḍikā* figure ॥ २३०॥
11. Pā क्षुरा
12-12. Pā खेदं for स्वेदं: omitted in Bm
13. Pā अंहोमुचा
14. Pb रेतः सिचर
15. Thus Pā; the rest भिक्षार्थे
16. Thus Pb; Br,Bm द्रव्यालभवाद्भूय॰, Pā द्रव्याभावे ॰ऽ
17. Pb साग्निकेके

एके समामनन्ति ॥ ७४ ॥ त्र्युपसत्के[1] मध्यमायामुपसद्यग्निं[2] चिन्वीत प्रकृत्युपबन्धात् ॥ ७५ ॥ उपरिष्टाद्विधानानि न कालाकाङ्क्षीणि भवन्ति ॥ ७६ ॥ अथान्यानृत्विजो वृत्वा पृष्ठशमनीयेन यजन्ते ॥ ७७ ॥ प्रधानं पशौ पश्वाहुतिः[3] सोमे सोमाहुतयः । तदङ्गमितरे[4] होमाः ॥ ७८ ॥ व्याख्याता दर्शपूर्णमासयोरिज्या[5] कालाश्च ॥ ७९ ॥ पशावविशेषेऽजः ॥ ८० ॥ यथा वेहद्गौरिति[6] लिङ्गैर्नियम्यते ॥ ८१ ॥[7] अजा[8] अवयो[8] गाव इत्यन्योन्यस्य प्रतिनिधयो भवन्ति ॥ ८२ ॥ स्थानसमाम्नानसमाख्यानसमवाये स्थानं बलीय[9] इष्यते । यथा शुद्धवालः सर्वशुद्धवालो मणिवाल इति ॥ ८३ ॥ वाक्यशेषाश्च तद्वत् ॥ ८४ ॥ कृत्स्नप्रधानः परतन्त्रव्यवेते[10] च । ततः प्रधानान्तः ॥ ८५ ॥

मन्द्रेण पितृयज्ञोऽवभृथश्च ॥ ८६ ॥ अन्तरा सामिधेनीष्वनूच्यं निगदेषु निवित्पदेषु[11] ॥ ८७ ॥ सामिधेनीवद्देवता आवाहयति ॥ ८८ ॥ मन्द्रेण प्रागाज्यभागाभ्यां प्रातःसवने च ॥ ८९ ॥ मध्यमेन[12] प्राक् स्विष्टकृतो माध्यंदिने ॥ ९० ॥ क्रुष्टेन शेषे[13] तृतीयसवने च ॥ ९१ ॥ वाक्संद्रवश्च तद्वत् ॥ ९२ ॥ आश्रुतप्रत्याश्रुतप्रवरसंवादसंप्रैषाश्च तथैव ॥ ९३ ॥ उपांशुदेवताश्रपसद्वर्जं वषट्कारप्रणवयेयजामहाश्च[14] ॥९४॥ उपांशुदेवतानामुपांश्वावाहनम्[15] ॥९५॥ प्रदाप्यः[16] सूक्तवाकनिगदे च अजुषतावीवृधत इत्युपांशु स्वप्रधानत्वात्[17] ॥ ९६ ॥ सहस्रेण हिरण्यशल्कैः प्रोक्ष्य प्रत्यवरोहेदित्येकम् । प्रत्यवरुह्य प्रोक्षेदित्यपरम् ॥ ९७ ॥ गणेन गण-

---

1. Pb त्र्युपसद्ये
2. Pb मध्यमायां उपशाभ्यामी
3. Emended. MSS °हुतीः
4. MSS °मिरे cf. ĀpŚS XXIV.2.31.
5. Pb °मासयोर्ज्या.
6. Pb °द्गौरीति
7. Br,Bm,Pā,Pb show here the *kaṇḍikā* figure ॥ २४ ॥
8-8. Emended. MSS अजावयो. Rudradatta on ĀpŚS IX.18.5 : तज्जातीयालाभे प्रतिनिधिरुक्तः सत्याषाढभारद्वाजाभ्याम् । अजा अवयो गाव इत्यन्ये न्यप्रतिनिधयो भवन्तीति ।
9. Thus Pā; the rest बलय
10. Thus Bm,Br; Pb परतंत्रं व्यवेते
11. Pā न निवि°
12. Pb मध्येन
13. Pā शेषेण
14. Pā °प्रवसेयजा°
15. Pā °श्वाह्नं
16. By conjecture; MSS प्रदाप्य
17. Pā स्वप्र°

मनुद्रुत्यासीनो हस्तेन जुहोति ॥ ९८ ॥ उत्तमं गणमनुद्रुत्य प्रथमेन गणेन प्रथमं पुरोडाशमुत्तमं वा । स्वतवाँश्च प्रघासी च [ सांतपनश्च गृहमेधी च क्रीडी च शाकी ] चोर्जीर्ण[1] च इति सप्तमो गणः । न ऊनये इति सर्वत्रानुषजति ॥ ९९ ॥ अञ्जलिना वातनामानि जुहोत्याज्येन[2] वा[3] । वातं यजत इत्यर्थः ॥ १०० ॥ स्थाल्यामग्निहोत्रोच्छेषणम् ॥ १०१ ॥ विप्रक्रान्ते कर्मण्यग्निहोत्रकाल आगच्छेत् सँस्थाप्य जुहुयादित्याश्मरथ्यः । काल एव जुहुयादित्यालेखनः[4] ॥ १०२ ॥ वैश्वदेवं बर्हिरुत्तरेषु पर्वसु । यथाप्रकृति[5] वा संनहनधर्माः ॥ १०३ ॥ इष्टिगणेषु सहेध्माबर्हीं[6] व्याहरेन् ॥ १०४ ॥ वरुणप्रघासेषु समानाः प्रणीताः ॥ १०५ ॥ उदगयन आपूर्यमाणपक्षे[7] समस्तानि । तेषां यथादेशं निवर्तनमन्ते वपनम् ॥ १०६ ॥ अग्नीनाधाय माँसं न खादेदा पशुबन्धात् ॥ १०७ ॥ यद्यग्निष्टोमे षोडशिनं गृह्णीयात् क्रतुविभागकर्मणि यथाग्निष्टोमे न 'पशूनाद्रियेत' ॥ १०८ ॥ साग्निके च गृह्णीयात् ॥ १०९ ॥ अरुणपिशङ्गोऽश्वो दक्षिणा । न वियत इत्येकम् । वियत इत्यपरम् ॥ ११० ॥ एकाग्रेषु दीक्षाकल्पेषु पर्वणि दीक्षा-सुत्या वा ॥ १११ ॥ यो ब्रह्मचारी स्त्रियमुपेयात् स गर्दभं पशुमालभेत । आहिताग्निरित्येकमनाहिताग्निरित्यपरम्[8] ॥ ११२ ॥ यो ब्राह्मणो बहुयाजी[9] स्यात् सोमयाजिनं ब्रूते ॥ ११३ ॥

अल्पीयाँसो मन्त्रा भूयाँसि कर्माणि तत्र मन्त्राँश्च कर्माणि च समशः

प्रतिविभज्य पूर्वैः पूर्वाणि कर्माण्युत्तरैरुत्तराणि। असंभवे मन्त्रविभाग[1] उत्तममावर्तयेत्[1] ॥ ११४ ॥ अल्पीयाँसि कर्माणि भूयाँसो मन्त्रास्तत्र प्रतिमन्त्रं कुर्याद्विकल्पेरन्नवशिष्टाः। यथा यूपद्रव्याणि ॥ ११५ ॥ कुम्भीशूलवपाश्रपणीप्रभुत्वात्तन्त्रँ[2] स्यात्। जातिभेदे तु भिद्येत पङ्क्तिवैषम्यात्[3] ॥ ११६ ॥ यावतोऽश्वान् प्रतिगृह्णीयादिति। प्रतिग्रहणे पुरोडाशः स्यादित्याश्मरथ्यः। अश्वे ऽपुरोडाश इत्यालेखनः[4] ॥ ११७ ॥ आर्त्विज्ये प्रतिग्रहणे यजमानस्यैव स्यात् ॥ ११८ ॥ यद्युख्य[5] उद्वायेत् भस्मनारणी सँस्पृश्य मन्थितव्यः। तत्रोक्तं प्रवृणक्त्युख्यस्याहरणकल्पेन[6]। प्रवृञ्जनं विद्यत इत्येकम्। न विद्यत इत्यपरम्[7] ॥ ११९ ॥ समितम् इति चतसृभिः[8] सं नि वपतीति द्वितीयमग्निं गार्हपत्यचितिमग्निमधि कुरुते ॥ १२० ॥ उपधानचरोस्तूर्ष्णीं निरुप्य तूर्ष्णीं निर्मन्थ्येन श्रपयति। उपधानमन्त्र एवात्र स्यात् ॥ १२१ ॥ शतरुद्रीये[9] त्रयश्चत्वार इत्यनुवाकविभागः ॥ १२२ ॥ यदि त्वरेतोच्चैर्यजुर्भिः षड्भिः संपादयेत् ॥ १२३ ॥ उपरिष्टादग्नीषोमीयात्[10] कथं वेदिकर्माणि। यानि कृतानि न पुनः क्रियन्तेऽन्यत्र प्रोक्षणात् ॥ १२४ ॥ बर्हिरुपोष्य तूर्ष्णीं पौतुद्रवान् प्रहरति ॥ १२५ ॥ तूर्ष्णींकं[11] सवनीयं[11] बर्हिराहरेदहरहः ॥ १२६ ॥ बर्हिषः कल्पेन प्रस्तरमाहरेदिति बादरायणः ॥ १२७ ॥ स्तरणेन देशा व्याख्याताः। यथा पश्चाद्धोत्रा पशुमासादयति। स्फ्यँ स्तब्ध्वा संप्रेष्यतीति ॥ १२८ ॥ सर्वसोमेषु ये षोडशभ्यस्तेभ्यो यथाश्रद्धं[12] ददाति। यथा चमसाध्वर्यवः ॥ १२९ ॥ यथा खादिरैः स्रुवैर्नक्तं जुह्वतीति[13]। यथा

1-1. Pā मन्त्रविभाग उत्तम°; Pb मन्त्रविभागे उत्तम°; Br,Bm मन्त्रविभागमुत्तम°. All MSS °मावार्तयेत्

2. All MSS °वपाश्रपण्यौ°

3. All MSS पंक्ति°

4. Thus Pā; the rest इत्याश्मलायनः

5. Thus Pā; Pb यदि चोक्थ्य; Br,Bm यदि चोख्य

6. Thus Br; Pb प्रवृणक्युख्य°; Bm प्रवृणक्तुख्य°

7. All MSS इत्यरं

8. Br,Pb चसृभिः; Bm सृभिः

9. Pb °रुद्रिये

10. Pb °दाग्नीषोमीयात्

11-11. Thus Pā; the rest तूर्ष्णीं कंसं वसनीयं

12. Rudradatta on ĀpŚS XIII.6.7 and Yajñeśvara Dikṣita on BaudhŚS VIII: यथाश्रद्धमित्येव सत्याषाढभारद्वाजौ।

13. Pā जुहुतीति

शतं ब्राह्मणाः पिबन्तीति । त एते सर्व[1] ऋत्विजो[1] वृता[2] यज्ञवाहा[3] इत्याश्मरथ्यः । अवृता[4] इत्यालेखनः ॥ १३० ॥ दशपेयेऽन्यत्र प्राकृतेभ्यः शतमित्येकम् । सह प्राकृतैरित्यपरम् ॥ १३१ ॥ अनूचाना विद्वाँस आर्षेया ऋत्विजो[5] भवन्तीति । त एते सकृद्वृता एव यज्ञं वहन्तीत्याश्मरथ्यः । सोमेसोम इत्यालेखनः ॥ १३२ ॥ मार्गादनपेतोऽनूचानः[6] ॥ १३३ ॥ विलुप्तसावित्रीको दुर्ब्राह्मणः[7] । मार्गादपेत इत्येके ॥ १३४ ॥

यदि यजमाना न सहेयुर्भूयोऽन्वायपेत भूयो भक्षान् कुर्यात् ॥ १३५ ॥ यदन्यच्छकलेभ्यस्तत्सर्वमिडामवद्यति । न प्राशित्रं न यजमानभागम् ॥ १३६ ॥ सत्त्रनीयैरेव परप्रधानेषु व्याख्यातम् ॥ १३७ ॥ यदि प्रचरणीयो[8] महावीरो व्यापद्येत इतरयोरन्यतरेण प्रचरेत्[9] ॥ १३८ ॥ अयूपे क्रतौ वनस्पतिं नावाहयेन्न जुहुयादित्याश्मरथ्यः । आवाहयेज्जुहुयादित्यालेखनः ॥ १३९ ॥ एकाहानामविशेषेण द्वादशशतं दक्षिणाः ॥ १४० ॥ सप्तगुः सोमः । षोडशकलः पशुः । कलाभिर्वा संख्यां पूरयेत् ॥ १४१ ॥ सर्वसंस्थानामविशेषेण क्रतुपशव ऐकादशिनाश्च विकल्पन्त इत्याश्मरथ्यः । पशुलाभ ऐकादशिनानामेकमुपाकरोतीत्यालेखनः ॥ १४२ ॥ यूपैकादशिन्यामेव त्वाष्ट्र इत्याश्मरथ्यः । यत्र क्व चैकादश पशवः कुर्यादेव त्वाष्ट्रमित्यालेखनः ॥ १४३ ॥ बर्हिर्मुष्टि[10] प्रयच्छन् स्तोत्रमुपाकरोति । बर्हिषी इत्येके ॥ १४४ ॥ यज्ञस्य संततिरसि[11] [ यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा ] यज्ञस्य[11] इति पृष्ठ्यास्तरणमन्त्रः ॥ १४५ ॥ उत्तरेण हविर्धाने उत्तरेणाग्नीध्रमुत्तरेण सदः प्राग्वंशस्य संचरः सदसो हविर्धानस्य च ॥ १४६ ॥ अन्तराणि

---

1-1. Br,Bm सर्वत्विजो; Pb सर्वतिविजो
2. Pb विता
3. Pb यज्ञवाह
4. Pā आवृता
5. Pā भृत्विजो; the rest omitted
6. Rudradatta on ĀpŚS X.1.1 : मार्गादनपगतोऽनूचान इति भारद्वाजः । Similarly Gopinātha on SatS X.1 (p. 992); X.4 (p. 1083); Vāñcheśvara on SatS X (4b) : मार्गानपेतोनूचान इति भारद्वाज एवाह ।
7. Cited verbatim by Rudradatta on ĀpŚS X.1.1; Vāñcheśvara on SatS X (3a) and Yajñeśvara Dīkṣita on BaudhŚS VII.1.
8. Pā प्रचनीयो
9. Thus Pā; the rest प्ररेत्
10. Br बर्हिमुष्टि; Bm बर्हिमुष्टि; Pb बर्हिमुष्टि
11-11. Pā संततिरसि॰ यज्ञस्य; the rest संततिरसि यज्ञस्य

यज्ञाङ्गानि शाखा ऋत्विजः। पत्नीयजमानावृत्विग्भ्योऽन्तरतरौ[1]। यथाकर्म ऋत्विजः। ऋत्विग्भ्यो यज्ञाङ्गानि। यज्ञाङ्गेभ्य आज्यानि। आज्येभ्यो हवींषि। हविर्भ्यः सोमः। सोमादग्नयः ॥ १४७ ॥ न विहारादपपर्यावर्तेत। प्रत्यङ्[2] गच्छन् दक्षिणमँसमावर्तयेत् प्राङ् गच्छन् सव्यम् ॥ १४८ ॥ पञ्च हविराकारा आज्यं पय ओषधयः[3] पशुः सोम इति ॥ १४९ ॥ आज्यतन्त्राणामुपांशुयाजवत्। आज्यविकारो मधूदके ॥ १५० ॥ यद्यन्ते स्यादित्यग्निहोत्रादनन्तरत्वादोऽभिप्रेतः[4] ॥ १५१ ॥ प्राणा वा एते यच्चतुर्होतारः। तान् हुत्वा यदग्निमपनयेद्यजमानस्य प्राणान् विच्छिन्द्यादिति विज्ञायते[5] ॥ १५२ ॥ यदि सम्यावसथ्यौ न[6] शक्नुयाद्यो नित्यस्तस्मिन् मन्त्रप्रयोगः[7] ॥ १५३ ॥

एकदेवतौषधिद्रव्या[8] आग्नेयविकारा अन्यत्र सोमेन्द्राभ्याम् ॥ १५४ ॥ तयोरेकदेवताग्रहणम्[8]। गुणस्तु पूर्वम्। वृत्रहा इत्याशिषः ॥ १५५ ॥ सोमेन्द्रस्तु

1. Pā °न्तरेण
2. Thus Pā; the rest प्रत्यग्
3. Pā ओषधं
4. Cited verbatim by Rudradatta on ĀpŚS IX.8.4; see also the commentary on SatS XV.2.31.
5. Mahādeva on BaudhŚS I: भारद्वाजस्तु सर्वेषामेव चतुर्होतॄणां तत्रतत्रः होमिणोऽभिपृथक्त्वं प्रतिषेधयति। यथाह प्राणा वा एते चतुर्होतारो यच्चतुर्होतॄन् हुत्वा etc. Rudradatta on ĀpŚS V.24.7: भारद्वाजस्तु सर्वेषामेव चतुर्होतॄणां तत्रतत्र होमिणोऽग्निपृथक्त्वं प्रतिषेधति। Rāmāgnicit on ĀpŚS VIII.1.4: चतुर्होत्रादेशप्रश्ने प्राणा वा एते चतुर्होतार इति भरद्वाजोक्तश्रुतिबले- चतुर्होत्रर्थाग्नौ प्रधानकर्म etc.
6. Pb यदि
7. Rudradatta on ĀpŚS V.17.1: भारद्वाजस्त्वाह अथ सभ्यावसथ्यौ न शक्नुयाद्यो नित्यस्तस्मिन् मन्त्रप्रयोग इति।
8-8. This portion is repeated in Pā cf. sūtra 170. Sūtras 154–169 may be compared with the corresponding portion of the *Vārāha Pariśiṣṭa* ( MS No. 680, folia 239–40 Oriental Institute Baroda ): एकदेवता ओषधद्रव्या आग्नेयविकारास्तथैन्द्राग्नसोमीयमन्यत्र सोमेन्द्राभ्यां तयोरेकदेवताग्रहणं गुणस्तु पूर्वं वृत्रहेत्याशीर्वद् सोमेन्द्रे तु सोमपूर्वत्वादग्नीषोमीयविकारं न वा एतयोर्विमृका प्रथमेन्द्यमावास्या प्रकृत्या मुख्या तु पौर्णमासी प्रथमप्रयोगत्वात् तस्मादामैन्द्र[illegible] प्रथमस्तस्यानिरूढस्याग्नेयं पौर्णमासीविकरणं स्यात् पूर्वं चानेकदेवत्वमुत आग्नेन्द्रादिद्रव्य विकारत्वादुपांशुयाजवदाज्यद्रव्याणां मधूदकोऽथ द्रव्यसामान्यादग्नीषोमीय ऐन्द्राग्नो वा द्विदेवतानां प्रकृतिर्वैश्वदेवे बहुदेवता वानेकसामान्यात् प्रत्याम्नेयश्च हविस्त्याता छन्दाक्षरसामान्याद्विशेषः पूर्वपूर्वं तु गरीयो गुणविशिष्टास्ता देवतास्ता गुणविशिष्टं देवताग्रहणं गुणश्चोत्रे सोऽपि देवतान्तरमित्यनेकेन वा छन्दःप्रामाण्यादादित्यपौष्णमारुतवैश्वदेवद्यावापृथिवीनां यजमानमात्रानं तत्सर्वार्थं प्रकृत्यावत् धर्मतादेवदेव्यामिक्षाणां प्रकृतिर्यावापृथिवीना च एककपालानां निष्कासस्य सम्यं द्वयोर्विकल्प च।

सोमपूर्वत्वादग्नीषोमीयविकारः । इन्द्रासोमस्त्विन्द्रपूर्वत्वादैन्द्राग्नविकारः ॥ १५६ ॥ अग्नये पथिकृत इत्याग्नेयविकारः ॥ १५७ ॥ निरूढमप्याग्नेयं पौर्णमासविकारं स्यात्[1] ॥ १५८ ॥ हविर्देवताशब्दाक्षरसामान्याद्विशेषाः । पूर्वंपूर्वं गरीयः ॥ १५९ ॥ गुणविशिष्टायै देवतायै गुणविशिष्टं देवताग्रहणम् । गुणलोपे लोपः ॥ १६० ॥ वैश्वदेव्यामिक्षाणां प्रकृतिः[2] । द्यावापृथिव्य एककपालानाम् ॥ १६१ ॥ निष्कासः सांनाय्यविकारः पशुर्वाजिनं च ॥ १६२ ॥ यद्देवो वर्षत्यथौषधयो जायन्ते[2] । ओषधीर्जग्ध्वा पयः पीत्वा रेतः संभवतीति समानयोनितां पयसः पयोश्च दर्शयति[3] ॥ १६३ ॥ स्विष्टकृद्विकारो वनस्पतिर्वहनसामान्याद्देवतानिगमनसामान्यादेकावदानसाम्याच्च[4] ॥ १६४ ॥ सवनीयेषु हरिवते धानाः पूष्णः करम्भो भारत्यै परिवाप इन्द्राय पुरोडाशो मित्रावरुणयोः पयस्येति प्रचरणकाले देवतापनयः । ऐन्द्राः संपद्यन्ते ॥ १६५ ॥ तन्त्रं देवताग्रहणम्[5] ॥ १६६ ॥ आशिषः समुच्चीयेरन् ॥ १६७ ॥ संसृष्टेषु नानाद्रव्यत्वाद्ग्रहणप्रघासेषु मेषयोश्च ॥ १६८ ॥ शतकृष्णलायामाज्यवद् विलयनसामान्याद्देवतानिगमनसामान्यादनेकसामान्याच्च[4]

---

इदं ह्या देवो वर्षत्यथौषधयो जायंते ओषधीर्जग्ध्वा पीत्वा पयः संभवति पयसो रेतसः । पशुः संभवति तस्मात् समानयोनितां पयसः पयोश्च दर्शयतीति तत्सामान्यम् ॥ इति पटलकारणे द्वितीयम् ॥ २ ॥ अग्नीषोमीयात् पशूनां धर्मग्रहणं सामान्यविध्यंशात् पंचहत्वो बादरायणस्य स्विष्टकृद्विकारो वनस्पतिर्वहनसामान्यादेकावदानसामान्यात् देवतानियमेनसामान्याच्च । यथा च सवनीयेष्विंद्राय हरिवते धाना इंद्राय पूषण्वते पिष्टीकरम्भमिंद्राय सरस्वतीवते भारतीवते घृतोद्धुता परिवापः इंद्राय पुरोडाशोऽष्टाकपालो मित्रावरुणाभ्यां पयस्येति तेषां प्रचरणकाले देवतापनय ऐंद्राः संपद्यंते तत्र देवताग्रहणमाशिषः समुच्चीयेरन् । संसृष्टे च नानाद्रव्यत्वाद्ग्रहणप्रघासेषु मेषयोश्च शतकृष्णलाया आज्यवद्विलयनसामान्यात् ।

1. Rudradatta on ĀpŚS V.19.1 : तथा तमेव हेतुमुक्त्वाह भारद्वाजः । तस्मान्निरूढमप्याग्नेयं पौर्णमासविकारं स्यादिति ।

2-2. Pb ग्रंते

3. Rudradatta on ĀpŚS VII.1.2 : एतदेव श्रुत्योक्तं भारद्वाजेन समानयोनित्वं पयसः पयोश्च दर्शयतीति । cf. ŚBr (K) IV.7.4.3. Yajñeśvara in his Baudh. Karmāntaparibhāṣādisaṃgraha has cited this Śruti, and further says पयोधर्माः पशाव इति भरद्वाजः ।

4-4. Thus Pā; the rest omit the portion beginning with एकावदानसाम्याच्च in sūtra 164 and ending with देवतानिगमनसामान्यात् in sūtra 169. Pā reads एकावमानसाम्याच्च in sūtra 164. The reading एकावदान° is given above by conjecture.

5. Rudradatta on ĀpŚS VIII.6.20 : तत्र सांनाय्यवदनुप्रस्तरणमाशिषामा मेषा-र्थंसंग्रहात् भारद्वाजमतात् । यथाशिषां समुच्चयं प्रत्याह संसृष्टे च नानाद्रव्यत्वाद्ग्रहणप्रघासेषु मेषयोश्चेति । Again on ĀpŚS XII.20.15 : तथा च सवनीयान् प्रकृत्य भारद्वाजः । तन्त्रं देवताग्रहणम् । आशिषस्तु समुच्चीयेरन् । संसृष्टे च नानाद्रव्यत्वादिति ।

॥ १६९ ॥ एकदेवतौपधिद्रव्या आग्नेयविकारा अन्यत्र सौम्यादैन्द्राच्च[1] ॥ १७० ॥ सौम्योऽग्नीषोमीयविकारः प्रकृतिदेवतत्वात् ॥ १७१ ॥ गुणविकृतेऽपि यथा[2] सोमाय पितृमते[2] इति ॥ १७२ ॥ गुणविकृतेऽप्यैन्द्र ऐन्द्राग्नविकारः प्रकृतिदेवतत्वात् । गुणविकृतेऽपि[3] यथेन्द्राय मरुत्वत इति ॥ १७३ ॥ तेषां द्विदेवता बहुदेवताश्च ॥ १७४ ॥ द्व्यक्षरत्र्यक्षरा ऐन्द्राग्नविकारा यथाश्विनौ मरुत[4] इति ॥ १७५ ॥ चतुरक्षरप्रभृतयोऽग्नीषोमीयविकारा यथा वैश्वदेवो द्यावापृथिवीय इति[4] ॥ १७६ ॥ सोमेन्द्रा[5] इन्द्रासोमीया[5] उभयविकारा उभयलिङ्गत्वात्[6] ॥ १७७ ॥ अपि सोमेन्द्र ऐन्द्राग्नस्य । इन्द्रासोमीयोऽग्नीषोमीयस्य[7] ॥ १७८ ॥ अक्षरसंख्यायां सगुणो[8] देवताशब्द[8] एव समाश्रीयेत[9] यथा पितरो बर्हिषदो मरुतः सांतपना मारुतसांतपनं पैतृबर्हिषदमिति ॥ १७९ ॥ हविर्दोषान् व्याख्यास्यामः ॥ १८० ॥ अथातोऽग्नीनामुद्वातानां खण्डद्वयं बौधायनवदेकाध्वर्यवप्रायश्चित्तं च ॥ १८१ ॥

स्त्रियार्थैव[10] संस्कारार्थमौपासनम् । अग्निहोत्रं यजमानस्येति[11] विज्ञायते ।

---

1-1. cf. note on sūtra 154.

2-2. Thus Pā; the rest omitted.

3. Thus Pā; the rest मरुत्वत.

4. Rudradatta on ĀpŚS VIII.2.12: यथोक्तं भारद्वाजेन द्व्यक्षरत्र्यक्षरा ऐन्द्राग्नविकारा इति. *Again on ĀpŚS VIII.9.5*: यथाह भारद्वाजः द्व्यक्षरत्र्यक्षरा ऐन्द्राग्नविकारा चतुरक्षरप्रभृतयोऽग्नीषोमीयविकारा इति ।

5-5. Pā सोमेन्द्रासोमीया

6. Bm उभयविकारत्वात्

7. Thus Pā; others omitted

8-8. Pā सगुणे देवता

9. Thus Pā; others समाश्रियेते. Rudradatta on ĀpŚS VIII.9.5: तथा च भारद्वाजः अक्षरसंख्यायां सगुणो देवताशब्दः संख्यायेतेति ।

10. [illegible]

तत्र भरद्वाजेन भगवता कृतं कल्पसूत्रमुक्त्वा तत्र पुनः स्वाया अनुक्ता अथाथ पश्चाथ तान् सर्वान् द्रढयितुम् अगतिकान् प्रयोक्तुं संदिग्धान् व्यवस्थापयितुं च परिशेषसूत्रमुपचक्रमे । तत्रत्य-सूत्रेषु स्पष्टमन्यैव व्यवस्था प्रतिपद्यते । तानि सूत्राण्युच्यन्ते । स्त्रियार्थैव संस्कारार्थमौपासनमग्निहोत्रं यजमानस्य तयोर्यः प्रथमं म्रियेत तस्याग्निहोत्रं [illegible] वा सह धर्मं तयोरुभयोः प्रतिषेधः । अथ यद्यपत्नीक स्या उभाभ्यां तस्य संस्कार औपासनाग्निहोत्राभ्यां अथ यदग्निहोत्रेण पत्नीं दहति यद्येकस्मिन् [illegible] द्वे रशने परिव्ययति तस्य द्वे जाये विन्दते यदेकया रशनया द्वयोर्यूपयोः परिव्ययति तस्मादेका द्वौ पती विन्दत इति विज्ञायते सा पुंवद्भवति स स्त्री भवतीति विज्ञायते ।

11. Thus C; others यजमास्येति

अन्यतरं पत्न्या अन्यतरं यजमानस्य। तयोर्यः[1] प्रथमं म्रियेत[2] तस्याग्निहोत्रं पत्युर्जायाया वा। सह प्रमीतयोरुभयोः प्रतिषेधः ॥ १८२ ॥ अथ यद्यपत्नीकः स्यादुभाभ्यां[3] तस्य[4] संस्कार औपासनाग्निहोत्राभ्याम्[5] ॥ १८३ ॥ अथ यद्यग्निहोत्रेण पत्नीं दहति। यदेकस्मिन्[6] यूपे द्वे रशने[7] परिव्ययति तस्मादेको द्वे जाये विन्दते यन्नैकां रशनां द्वयोर्यूपयोः परिव्ययति तस्मान्नैका द्वौ पती[7] विन्दत इति विज्ञायते। सा पुंवद्भवति स स्त्रीवद् भवतीति[8] विज्ञायते ॥ १८४ ॥ यथाहिताग्निः पुनर्दारान् कुर्यादग्नींश्चोत्सृजेयुर्लौकिकाः[9] संपद्येरन्। तस्य पुनरग्न्याधेयं विद्यत इत्याश्मरथ्यः। पुनराधेयमित्यालेखनः। पुनरग्न्याधेयमित्यौडुलोमिः[10] ॥ १८५ ॥ यजमानः प्रधान औपासनं च। द्रव्यं[11] पत्नी ॥ १८६ ॥ यथा शरीरिणि[12] शरीरे च पञ्च[13] वायवो[13] निविष्टाः[14] प्राणापानव्यानोदानसमाना[15] इति। तस्य प्राणो गार्हपत्योऽपानोऽन्वाहार्यपचनो व्यान आहवनीय उदानसमानौ सभ्यावसथ्यावित्येत[16] एवास्य इति। एत एव पञ्च प्राणा अस्य आधीयन्ते। पाङ्क्तं वा इदं सर्वं पाङ्क्तेनैव[17] पाङ्क्तं स्पृणोतीति[17] विज्ञायते ॥ १८७ ॥ यथैश्वर्यबलादीश्वरः[18] स्वान्[19] देहान् परित्यज्यान्येषां देहान् प्रविश्य पुनरात्मदेहान्[20]

---

1. Pb omitted
2. Thus C; others म्रीयेत
3. Thus C; others स्यादुभ्या
4. Bm से
5. Rudradatta on ĀpŚS 1.20.13: भारद्वाजस्तावत्—अथ यद्यपत्नीकः स्यादुभाभ्यां तस्य संस्कार औपासनाग्निहोत्राभ्यामिति. Similarly cited by Vāñcheśvara on SatS VI (37b).
6. C तदेकस्मिन्
7-7. Thus Pā; Bm रशने °पति; C रशने जाया; others रशने °पती
8. Thus Pā,C; others स्त्री भवतीति
9. Thus Pā,C; others कुर्वीताग्नि°; कुर्वीत यद्यग्नि° Upendra in *Pitṛmedha-prayogadīpikā* where the entire sūtra is cited.
10. C °त्यौडुलोमिः
11. Thus C; others द्रव्य
12. Thus Pā,C; others शरीरिणि
13-13. Thus C; Pā वायवो; others पंचवायवो
14. Pā निविष्टा
15. Pā प्राणोदान° समान
16. अवस्था repeated in Pā
17-17. Thus Pb; Br,Bm पाङ्क्तेनैव पाङ्क्तं स्पृणोतीति; C इति; Pā सर्वं स्पृणोतीति
18. C दीश्वरात्
19. C स्वां
20. Pā °त्मदेहम्

प्रत्यागच्छति[1] न च तेन दुर्ज्ञायते। औपासनेऽग्नयो निविष्टा औपासनो[2] यजमाने[2]। तस्मादौपासनान्न प्रमदितव्यम्। यथर्षभ ऋषभायां[3] वत्सं जनयत्येवमौपासनोऽग्निहोत्रं[4] व्यापन्नं भूयो जनयति। औपासनस्यैवैषा[5] संततिर्यदग्निहोत्रम्। तदु तथा न कुर्यात्। न विद्यत औपासनाग्निहोत्रयोर्विवेचनम्। उभयं जुहुयादौपासनमग्निहोत्रं च[6]। अथापि विज्ञायते सप्त पाकयज्ञसँस्था औपासने चतुर्दशाग्निहोत्रे ॥ १८८ ॥

पवित्रेष्टिं व्याख्यास्यामः ॥ १८९ ॥ अमावास्यायां पौर्णमास्यां वाग्नीनन्वाधाय वैश्वदेववद्दिध्माबर्हिराहरति ॥ १९० ॥ प्रणीताः प्रणीय चतुर्गृहीतं जुहोति येन देवाः पवित्रेण इति ॥ १९१ ॥ अपरं चतुर्गृहीतं[7] प्राजापत्यं पवित्रम् इति ॥ १९२ ॥ अपरं चतुर्गृहीतम् इन्द्रः सुनीती इति ॥ १९३ ॥ अभ्यातानान् हुत्वाग्नेयमष्टाकपालं निरुप्य पवमानहवीँषि[8] वैश्वानरं[9] द्वादशकपालं पञ्चमम् ॥ १९४ ॥ आग्नेयं[10] परिहाप्याग्नये व्रतपतय इत्येके समामनन्ति ॥ १९५ ॥ पवमानः सुवर्जनः इति द्वे धाय्ये। यत्ते पवित्रम् ॥ जातवेदः पवित्रवत् ॥ १९६ ॥ त्वं च सोम नो वशः ॥ भद्रा देवानाम् इत्याज्यभागयोः ॥ १९७ ॥ अथ हविषाम्। आग्नेयेन प्रचर्योपाँशु व्यत्यासं पञ्चभिराज्यहविर्भिर्यजति। उत नः प्रिया ॥ इमा जुह्वाना इति सरस्वत्याः प्रियायाः। त्रीणि पदा ॥ तदस्य[11] प्रियम्. इति विष्णोरुरुक्रमस्य। अद्या नो देव सवितः ॥ विश्वानि देव सवितः इति देवस्य सवितुः। प्र वायुमच्छा ॥ आ नो नियुद्भिः इति वायोर्नियुत्वतः। दधिक्राव्णो अकारिषम् ॥[12] आ दधिक्राः इति दधिक्राव्णः[12] ॥ १९८ ॥ उभाभ्यां देव सवितः ॥ वैश्वदेवी पुनती ॥ येन देवा

1. Pā,C प्रत्यागच्छंति
2-2. Thus Pā,C; यजमाने repeated in Pā; others औपासन यजमानः; Mātṛdatta on SatS XIX.7.35 : भारद्वाजोऽपि औपासने वा अग्नयो निविष्टा इति।
3. C ऋषभाभ्यां
4. C जनयेवमौ°
5. Thus C; others औपासनस्ये°
6. Rudradatta on ĀpŚS V.7.8 : उभयत्र जुहुयादौपासनमग्निहोत्रं चेति भारद्वाजवचनात्।
7. Thus Pā,C; others चतुर°
8. Thus Pā,C; others °हविंषि
9. Thus Pā,C; others वैश्वदेवं, cf. sūtra 204.
10. Thus Pā,C; others आग्नेय
11. Thus Pā,C; others तस्य
12-12. Pb omitted

अपुनत ॥ यः पावमानीरध्येति ॥ पावमानीर्यो अध्येति ॥ पावमानीः स्वस्त्ययनीः ॥ पावमानीर्दिशन्तु नः ॥ पावमानीः स्वस्त्ययनीः इत्युपहोमाः । वैश्वानरो रश्मिभिः ॥ बृहद्भिः सवितस्तृभिः इति संयाज्ये । यद्देवा देवहेडनम् इति गार्हपत्ये जुहोति पुरस्ताद् गृहपतेरुपरिष्टाद्वा[1] ॥ १९९ ॥ सिद्धमिष्टिः संतिष्ठते ॥ २०० ॥ पवित्रेष्ट्येष्ट्वा[2] शुद्धः पूतः पङ्क्तिपावनो भवतीति विज्ञायते। दश पूर्वान् दशापरानात्मानं चैकविंशति पुनात्युभयतः । सर्वेषां पापानां भूयिष्ठदोषनिर्णुदां पवित्रेष्टिं प्रशंसन्ति तद्धि पावनमुत्तममिति ॥ २०१ ॥

अतिपवित्रेष्टिं व्याख्यास्यामः ॥ २०२ ॥ तस्याः पवित्रेष्ट्या कल्पो व्याख्यातः ॥ २०३ ॥ वैश्वानरं द्वादशकपालं पञ्चमं निरुप्याग्नये पथिकृतेऽग्नये वैश्वानरायाग्नये व्रतपतयेऽग्नयेऽनीकवतेऽग्नीषोमीयमिति[3] निर्वपति ॥ २०४ ॥ अग्नीषोमीयं परिहाप्याग्नये व्रतभृत एके समामनन्ति ॥ २०५ ॥ दधिक्राव्णः प्रचर्योपांशु व्यत्यासं पञ्चभिराज्यहविर्भिर्यजते विष्णुः सरस्वती सरस्वान् प्रजापतिः सवितेति ॥ २०६ ॥ हिरण्यं वासो दक्षिणा ॥ २०७ ॥ सिद्धमिष्टिः संतिष्ठते ॥ २०८ ॥ अतिपवित्रेष्ट्या वसन्ते ब्रह्मवर्चसकामः शरद्यायुष्कामः श्रावण्यां पुत्रकामस्तैष्यां वीर्यकामो यजेतेति विज्ञायते। सैषा संवत्सरमतिप्रवसतः[4] । शुद्धिकाम एतया यजेतेति[5] विज्ञायते ॥ २०९ ॥

अथातोऽनुग्रहान् व्याख्यास्यामः ॥ २१० ॥ समस्तहोमो बौधायनवत्[6] ॥ २११ ॥ यद्युत्तरारणी समारूढा[7] जीर्यद्विद्येद् दुष्येन्नश्येद्वा[8] अधरारणी आहृत्येति

विज्ञायते[1] ॥ २१२ ॥ यद्यधरारण्यसमारूढा[2] जीर्येद्विद्येद् दुष्येन्नश्येद्वा[3] शकलीकृत्य गार्हपत्ये प्रक्षिप्य प्रज्वाल्यादत्ते दक्षिणेनोत्तरारणिँ सव्येनाधरारणिम्

उत्तिष्ठाग्ने प्रविश योनिमेनां देवयज्यायै त्वा वोढवे जातवेदः ।
अरण्योररणी अनुसंक्रमस्व जीर्णां तनुमजीर्णया निर्णुदस्व[4] ॥

इति ॥ २१३ ॥ अथैनँ स्वेन मन्त्रेण स्वे योनौ समारोप्य मथित्वाग्नीन् विहृत्य जुहुयात् ॥ २१४ ॥ पूर्ववद्विहृत्य पूर्ववज्जुहोतीत्यालेखनः ॥ २१५ ॥ अतिक्रान्तेषु होमेषु बौधायनवत् ॥ २१६ ॥ चातुर्मास्यैः पञ्चदशाहानि यक्ष्यमाणः प्रतिपदि वैश्वानरपार्जन्यौ । द्वितीये[5] वैश्वदेवम् । तृतीये चतुर्थे पञ्चमे चोपरम्य षष्ठे[6] वरुणप्रघासाः । सप्तमेऽष्टमे नवमे चोपरम्य दशम एकादशे च[7] साकमेधाः । द्वादशे त्रयोदशे चोपरम्य[8] चतुर्दशे[9] शुनासीरीयं[10] पञ्चदशे[11] पशुरिति ॥ २१७ ॥ द्वादशाहानि[12] यक्ष्यमाणः प्रतिपदि वैश्वानरपार्जन्यौ । द्वितीये वैश्वदेवम् । तृतीये चतुर्थे चोपरम्य पञ्चमे वरुणप्रघासाः । षष्ठे सप्तमे चोपरम्याष्टमे[13] नवमे च[14] साकमेधाः । दशम एकादशे चोपरम्य द्वादशे शुनासीरीयम्[15] । त्रयोदशे पशुरिति । संवत्सरप्रतिमा

---

1. cf. Rudradatta on ĀpŚS V.29.12 : तथोत्तरारणेरप्यविधिनाशेऽप्याह भारद्वाजः— अथ यद्युत्तरारणिः समारूढा जीर्वेन्नश्येद्वा अधरारण्या आहरेयेति विज्ञायते इति ।
2. cf. Rudradatta on ĀpŚS V.29.12 : तथाप्यनुग्रमाह भारद्वाजः। यद्यरणी समारूढा जीर्येद्विद्येद्दुष्येद्वा शकलीकृत्य गार्हपत्यं प्रदीप्य प्रक्षिप्य प्रज्वाल्य आदत्ते दक्षिणेनोत्तरारणिं सव्येनाधरारणिमुपर्यग्नौ धारयन्नपत्युत्तिष्ठाग्ने प्रविश योनिमेतां देवयज्यायै त्वा वोढवे जातवेदः । अरण्योररणी अनुसंक्रमस्व जीर्णां तनुमजीर्णया संनुदस्वेति। अथैनं स्वेन मन्त्रेण स्वयोनौ समारोप्य मथित्वाग्नी विहृत्य जुहुयात् ।
3. Pb °नश्येद्वाद; Pā,C दुष्येद्वा.
4. Pā,C निर्नुदस्व. BaudhŚS XXVII.7 reads this verse as follows : उद्बुध्यस्वाग्ने प्रविशस्व योनिमन्या देवयज्यां वोढवे जातवेदः। अरण्या अरणिमनुसंक्रमस्व जीर्णां तनुमजीर्णया निर्णुदस्व।
5. Thus Pā,C; others द्विये
6. Pb omitted
7. Thus Pā,C; others omitted
8. Pb omitted
9. Thus C; others चतुर्दशे
10. C शुनासीर्यया; Pā शुनासीरीयया
11. Thus Pā,Pb,C; Br,Bm पंचदशो
12. See foot-note to sūtra 106.
13. C चोपरम्य
14. Thus Pā,Pb; others omitted
15. C शुनासीर्यया; Pā शुनासीरीयया

वै द्वादश रात्रयः संवत्सरमेव यजत इति विज्ञायते ॥ २१८ ॥ सर्पिर्वा मध्वलाभ इत्यादि ॥ २१९ ॥ कुशा बर्हिरर्थ इत्यादि ॥ २२० ॥ खादिरबिल्वपालाशाना-मिध्मदारूणीत्यादि ॥ २२१ ॥ आज्यालाभ आजमाविकं माहिषं वा घृतमाज्यार्थ इत्यादि ॥ २२२ ॥

॥ इति भारद्वाजपरिशेषसूत्रम् ॥

---

## APPENDIX A

Citations which are attributed to Bharadvaja but which could not be traced to the Bhāradvāja texts

*Darśapurṇamāsau*

१ गोवर्णाकृतिश्चमसाकृतीति भरद्वाज ।[1]

—Mahādeva Dīksita on SatS I 4 (p 110)

२. षट्त्रिंशदङ्गुलो बौधायनभारद्वाजयोर्मते ।[2]

—Mahādeva Dīksita on SatS I 4 (p 109)

३ (अ) सद्यस्काला पौर्णमासीमिति भारद्वाजादिभिर्व्यक्तवचनाच्च ।

—Rudradatta on ĀpŚS I 14 18

(आ) भारद्वाजेनोक्त सद्यस्काला पौर्णमासीमिति ।

—Mahadeva on SatS I 4 (p 106)

४ न गार्हपत्याभिधानम् । निरूढदेवतानामेव । यथा भरद्वाजस्य तथास्माकम् ।

—Dhūrtasvamin on ĀpŚS I 18 5

५ तथा च भारद्वाज पर्यग्निकरणकाले दध्युपदधातीति ।

—Rudradatta on ĀpŚS I 25 8

—Vancheśvara on SatS I (folio 51 A)

६ स्वरयो त्रिमात्रत्वम् । श्रा च वहे श्रा च वये पूर्वथेति भरद्वाजवचनात् ।

—Ramagnicit on ĀpŚS II 15 3

—Vancheśvara on SatS II (folio 6A)

७ तत्र चतुर्धाकरण चरोर्न विद्यत इति भारद्वाज ।

—Rudradatta on ĀpŚS III 3 2

८ भरद्वाजमतात्तु पात्रान्तरे यजुषोत्पूय स्थाल्या मन्त्रेणानीय श्रपणम् ।

—Rāmāgnicit on ĀpŚS III 15 6

९ भारद्वाजेन नृक्तमात्मसंस्कारा वापनवर्जं पत्न्या इति ।

—Rudradatta on ĀpŚS IV 1 2

१० यदि क्रियेत येयजामहमुक्त्वा देवतोपलक्षणम् । ततो व्याहृतयो भरद्वाजमतात् ।

—Dhurtasvamin on ĀpŚS XXIV 13 6

११ वरुणा सुद्‌सुनाणा च शुद्धिरुष्णेन वारिणेति मनुवचनाद्भरद्वाजवचनाच्च ।

—Dhūrtasvamin on ĀpŚS XXIV 1 29

---

1 The *prastrahatana* utensil should be like this

2 *Bāhu* is equal to the length of thirty-six *angulas*

*Agnyādheya and Punarādheya*

१२. अस्माकं तु यदैवैनं यज्ञ उपनमेदिति सर्वकालानादर उक्त इति भरद्वाजेनोक्तत्वात् तस्याधानस्यापि नक्षत्राद्यनादर उक्त इति ।

—Rāmāgnicit on ĀpŚS V.3.23

१३. अरण्योरपि यावज्जीवं धारणम् । ज्योग्जीवन्त उत्तरामुत्तरां समामिति मन्त्रवर्णाद्भरद्वाजवचनाच्च ।

—Dhūrtasvāmin on ĀpŚS XXIV.1.28

१४. (अ) भारद्वाजस्त्वाह सोमाधानेनाजस्रान् कुर्यादिति ।

—Rurdadatta on ĀpSS V.23.1

(आ) सोमाधानेनाजस्रा इति भारद्वाजः ।

—Mahādeva Dīkṣita on SatS VI.5 (p. 533)

१५. अग्न्योरहं देवयज्यया चक्षुष्मान् भूयासमिति समस्तस्य । भरद्वाजाश्वलायनमतिश्च ।

—Dhūrtasvāmin on ĀpŚS V 28.11

*Agnihotra*

१६. उक्तं च भरद्वाजेन । यदन्यदधिश्रयणात् प्रतिषेधाच्च तद् सर्वं भवति ।

—Dhūrtasvāmin on ĀpSS VI.15.7

१७. (अ) स्वाहाकारप्रदानेषु भक्षोऽपि विवार इत्यपरमिति भरद्वाजः ।

—Rāmāgnicit on ĀpSS VI.12 2

(आ) भरद्वाजस्तु स्वाहाकारस्तु प्रदानेन भक्षे विचार इत्यपरमित्याह ।

—Mahādeva Dīkṣita on SatS III.7 (p. 353)

१८. तथा च भारद्वाजः आ सायमाहुतिकालात् प्रातराहुतिकालो नातीयादा प्रातराहुतिकालात् सायमाहुतिकाल इति ।[1]

—Rudradatta on ĀpSS VI 4.10
—Subodhinī on BaudhSS III (folio 16A)

*Āgrayaṇa*

१९. एका तु पात्री गृहत्रययुक्ता यत्र चैककपालः । भरद्वाजमतिश्च ।

—Dhūrtasvāmin on ĀpSS VI.29.13

२०. तत्र त्वाह भारद्वाजः न यवानामाग्रयणं विद्यत इत्यौडुलोमिरिति ।

—Rudradatta on ĀpSS VI.30.18

1. cf. BaudhSS XXVIII.12

*Animal-sacrifice*

२१ सद्यस्कालपक्षे प्रयोगमध्ये भोजनं निषिद्धं भरद्वाजेन।

—Rāmāgnicit on ĀpŚS VII 1 8

२२. पूर्वाह्णे सविपक्षेऽपि प्रकृतिं कृत्वा विकृतिं सद्यो द्व्यहो वा इति भरद्वाजमतात्।

—Rāmāgnicit on ĀpŚS VII 6 3

२३. भरद्वाजस्त्वाह अप्राकृता आहुतय आप्यनिर्वापणादूर्ध्वमध्वरमाल्या इ या-
श्मरथ्यो लौकिकाग्न्यादित्याले खनो प्रौवादित्यालेखनिरिति।

—Rudradatta on ĀpŚS VII 10 2
—*Subodhini* on BaudhŚS IV (folio 34b)

२४ ऊर्णाम्रदं प्रथम सदि योनिमित्यप्र पक्ष्यमाणत्वात्न परिधानीयायां प्रथमाया-
मित्येराह भरद्वाज।

—Mahādeva Dīkṣita on SatS IV 2 (p 406)

२५ वषट्कारहोमेष्वपि मन्त्रेषु स्वाहाकारः प्रस्तरे स्वाहाकारप्रतिषेधात्
भरद्वाजमताच्च।[1]

—Dhūrtasvāmin on ĀpŚS VII 31 2

२६ भरद्वाजस्तथाह न पत्न्यवेक्षेताधिश्रयणप्रतिषेधादिति।

—Rudradatta on ĀpŚS VII 8 8
—Vāñcheśvara on SatS IV (folio 14a)

२७, भरद्वाजेनात्र विकल्प उक्त सस्थिते पशुबन्ध काले वेति।[1]

—Mahādeva Dīkṣita on SatS IV 2 (p 408)

*Caturmasyas*

२८. अत्र बौधायनभारद्वाजयोर्मते उदगयनमात्रे प्रयोगः।

—Vāñcheśvara on SatS V (folio 2b)

२९. आमिक्षामेषयो समन्वयेषु भरद्वाजोक्तत्वात्।

—Rāmāgnicit on ĀpŚS VIII 7 3

३० यथोक्तं भारद्वाजेन चोद्यमाने कर्मणि द्रव्यमुपादद्यात् गृहमेधीयऽग्नि
समार्जनान्तीति।

—Rudradatta on ĀpŚS VIII 11 4
—Gopīnātha on SatS IX ? (p 942)

३१. तथानुमहान्तम्यत्र भारद्वाजेनोक्त आ म्नप्रधानां सर्वाह्विषदस्य च आ

1 The Agnihotra should be offered

नातीयादा साकमेधानां कालाद्वरुणप्रघासानां कालो नातीयादा शुनासीरीयस्य कालाद् साकमेधानां कालो नातीयादिति । कालातिक्रमेप्यापदि यजेतेति ।

—Rudradatta on ĀpSS VIII.21.2

*Prāyaścittas*

३२. भारद्वाजोऽप्याह सायंहोमं चोपोदयं जुहुयात् प्रातर्होमं चोपास्तमयम्। कालेन कालमनतिक्रम्य न स्कन्दन्ते न व्यथन्त इति विज्ञायते ।

—Rudradatta on ĀpSS II.7.3

३३. यथा दक्षिणाग्न्यनुगतिप्रायश्चित्तं प्रकृत्याह, भारद्वाजः । अन्वाहार्यपचने जुहुयादित्याश्मरथ्यः । आहवनीय इत्यालेखन इति ।

—Rudradatta on ĀpSS IX.1.14
—Mahādeva Dīkṣita on SatS IV.1.14 (p. 266)

३४. समारूढाग्न्यारण्योरशक्तिमात्रविषये आपद्यनुग्रहमाह भरद्वाजः ।

—Śrīnivāsamakhin in *Prāyaścittasubodhinī*,
B. I. S. M. MS NO. 36, 123

३५. तत्र शक्तिनाशेऽनुग्रहमाह भारद्वाजः तत्र च लौकिकाग्नावुपावरोहणं स्यादिति ।

—Rudradatta on ĀpSS V.29.12

३६. भारद्वाजस्तत्र समारूढाग्नेश्चिरं काले होमादिविच्छेदे विशेषमाह । होमेष्वहूयमानेषु चारमन्यरण्योर्वा ध्रियमाणानां कथं तन्त्रं न लुप्यते । द्वौ मासावहुतेऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वाऽग्नये पथिकृतेऽग्नये वैश्वानरायाग्नये व्रतपतयेऽग्नये व्रतभृत इत्येषा महापथिकृदिष्टिः । पवित्रेष्ट्या यजेताग्निहोत्रदर्शपूर्णमासाविति सर्वमाप्नोतीति । तथा षण्मासानहुतेऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वा वेति प्रकृत्य पूर्ववदेव पवित्रेष्टिपर्यन्तमुक्त्वा तिपवित्रेष्ट्या यजेतेत्युक्तवान् ।[1]

—Rudradatta on ĀpSS IX.8.5

३७. तत्र त्वाह भारद्वाजः कथं जातेष्टिरित्यूर्ध्वं दशाम्या इत्याश्मरथ्यो जात एवर्त्विजः कुर्युरित्यालेखन इति ।

—Rudradatta on ĀpSS IX.2.1

३८. तत्र त्वाह भारद्वाजः न बर्हिषि स्कन्ने प्रायश्चित्तमित्याश्मरथ्यः । यदि भूमिं प्राप्नुयात् कुर्यादेव तत्र प्रायश्चित्तमित्यालेखन इति ।

—Rudradatta on ĀpSS IX.13.7

३९. भारद्वाजश्चाह अथ यदि सर्वतो भूर्भुवः सुवरित्याहवनीये जुहुयादिति ।

—Rudradatta on ĀpSS IX.16.5

1. cf. *Pariśeṣasūtra* 202; BaudhSS XXVIII.2

४०. भारद्वाजस्तावत् आ दर्शात् पौर्णमासस्य कालो नातीयात् आ पौर्णमासात् दर्शस्येति । कालातिक्रमेऽप्यापदि यनेतेति ।[1]

—Rudradatta on ĀpŚS IX 4 2

४१ केचित् पक्षहोमादौ कृते मध्ये समारोपणे कृते मथ्यमानो न जायेत तदा मथनविधिप्रतिषेधे लौकिकेऽग्नावुपावरोहण इ वेति भरद्वाजवचनात् ।

—Ramagnicit on ĀpŚS IX 3 5

*Agniṣṭoma*

४२ यथाह भारद्वाज सोमप्रवाको यजास्म सोम प्राहेति ।

—Rudradatta on ĀpŚS X 1 2
—Vancheśvara on SatS X (folio 5a)

४३ अथानयिष्यतोऽपि मह्मे मोच इत्यादि जप (?) भारद्वाज ।

—Vanchesvara on SatS X (folio 6b)

४४ (अ) भारद्वाजश्च ब्रह्मचारिण ऋत्विज प्रचरन्ति तेषां सस्थिते कर्मण्यशन प्रसिद्धिरित्याह ।

—Rudradatta on ĀpŚS X 1 14

(आ) ब्रह्मचारिण ऋत्विज प्रचरन्तीति भारद्वाज ।

—Vancheśvara on SatS X (folio 10b)

४५ तथा च सत्याषाढभारद्वाजाभ्यामपि तमेव कल्पमुक्त्वानुक्त मारुती ।

— Rudradatta on ĀpŚS X 21 12

४६ भारद्वाजश्चाह आज्यभागाविष्ट्वा यनेते वाङ्मरथ्य । तास्वेता भवत इ यालेखन इति ।

—Rudradatta on ĀpŚS XI 21 11
—Comm on BaudhŚS VII 4
—Gopinatha on SatS VII 2
—Vanchesvara on SatS VII 2

४७ ऊग पुनर सृप इति भारद्वाज ।

—Rudradatta on ĀpŚS X 1 1
—Vanchesvara on SatS X 1
—Gopinatha on SatS VII 1 (p 559)

४८ तथा तत्र न राजानमुपतिष्ठत इत्येव भारद्वाज ।

—Rudradatta on ĀpŚS XII 18 8

४९ भरद्वाज नापरया द्वारा निष्कामेद्यदि निष्कामेत् तेनव प्रविशेद विष्णुरिति जपेदिति ।

—Gopinatha on SatS X 2 (p 1045)

1 cf BaudhŚS XXVIII 12

५०. हुतानुमन्त्रणे तन्त्रेण देवतानिर्देशः। आग्नेयसांनाय्यफलयोः समुच्चयः सन्नीयस्य हुतानुमन्त्रणे भरद्वाजोक्तत्वात्।

—Rudradatta on ĀpŚS III.16.10

५१. भारद्वाजस्तावदाह तं दिवोपाकृत्य नक्तं संस्थापयतीति।

—Rudradatta on ĀpŚS XI.20.2

५२. अयं च विधिर्यजमानो मन्त्रान् जपति तूष्णीमितर उपास्यन्तीति पूर्वोक्त-भारद्वाजमतानुसारेण।

—Vāñcheśvara on SatS X (folio 35a)

५३. तथा च भरद्वाजः सर्वेषामन्ततस्तूपानन्नुवपतीति।

—Gopinātha on SatS VIII.1 (p. 785)

५४. सत्याषाढभारद्वाजौ त्ववभृथोत्तरकालासूदवसानीयादिषु व्रतोपायनं प्रतिप्रसुवाते।

—Rudradatta on ĀpŚS X.4.13

५५. आमन्त्रयेतेत्येव भारद्वाजः।

—Rudradatta on ĀpŚS X.12.8

*Paribhāṣā*

५६. (अ) भगवता भरद्वाजेनैवमुक्तम्—छिन्ने छेदनमन्त्रा लूने लवनमन्त्राः दुग्धे दोहनमन्त्राः पिष्टे पेषणमन्त्राः प्रयोक्तव्या इति।

—Rāmāgnicit on ĀpŚS I.4.7

(आ) दुग्धे दोहनमन्त्रा इति भरद्वाजवचनात्।

—Rāmāgnicit on ĀpŚS I.14.17

(इ) छिन्ने लूने इति भरद्वाजवचनात्।

—Rāmāgnicit on ĀpŚS X.5.10

(ई) अत्र भारद्वाजः छिन्ने छेदनमन्त्रा दुग्धे दोहनमन्त्राः पिष्टे पेषणमन्त्राः प्रयोक्तव्या इति।

—Vāñcheśvara on SatS I (folio 15b)

५७. द्विप्रादेशो वेदकेरिध्म (!) इति भारद्वाजः।

—Vāñcheśvara on SatS I (folio 17b)

५८. (अ) तदुक्तं भारद्वाजेन सर्वसंस्थासु वा प्रणीता इति।

—Rudradatta on ĀpŚS I.16.11

(आ) तथा च भरद्वाजः सर्वसंस्थासु प्रणीता इति।

—*Subodhinī* on BaudhŚS I (folio 75a)

(इ) आह च भरद्वाजः सर्वसंस्थासु प्रणीता इति।

—Mahādeva Dīkṣita on SatS I.4 (p. 114)

५९. (अ) यथोक्तं भारद्वाजेन असति द्रव्ये कर्मलोपो यथा चरौ समाहननमाप्येभ्यो निनयनमिति ।

—Rudradatta on ĀpŚS I.20.3

(आ) तथा च भारद्वाजः असति द्रव्ये कर्मलोपो यथा चरौ समाहननमाप्यलेपनिनयनमिति ।

—Vāñcheśvara on SatS I (folio 41a)

(इ) तदुक्तं भरद्वाजेन द्रव्याभावे कर्मनिवृत्तिर्यथा चरौ समाहननमाप्यलेपनिनयनं चेति ।

—Mahādeva Dikṣita on SatS I.5 (p. 151)

(ई) स्पष्टं सर्वमेतदाह भरद्वाजः—असति द्रव्ये कर्मलोपो यथा चरौ समाहननमाप्येभ्यो निनयनमिति ।

—Gopinātha on SatS VII.2 (p. 616)

६०. (अ) भारद्वाजश्चाह चोद्यमाने कर्मणि द्रव्यमुत्पादयेत् यथा पौर्णमास्यामुपवेष इति ।

—Rudradatta on ĀpŚS I.6.7

(आ) उक्तं हि भारद्वाजेन चोद्यमाने कर्मणि द्रव्यमुत्पादयेद्यथा पौर्णमास्यामुपवेष इति ।

—*Subodhinī* on BaudhŚS I (folio 10a)

(इ) तदाह भारद्वाजः चोद्यमाने कर्मणि द्रव्यमुत्पादयेद्यथा पौर्णमास्यामुपवेष इति ।

—Mahādeva Dikṣita on SatS I.3 (p. 92)

६१. यदा भरद्वाजोपदिष्टावहननपरिलेखनयोरुदकस्पर्शनस्य ।

—Dhūrtasvāmin on ĀpŚS XXIV.2.9

६२. पदं पञ्चदशाङ्गुलमिति दश क्षुद्रपदमिति च । द्वादशाङ्गुलमिति भारद्वाजः ।

—Vāñcheśvara on SatS III (folio 28b)

६३. तथा च भारद्वाजेनाप्युक्तं त्रयो वा अग्नयो न पञ्चेति विज्ञायते । सोऽयं कर्मप्रतिषेध इत्यारभ्यश्योऽन्योरप्रतिषेध इत्यालेखन इति ।

—Rudradatta on ĀpŚS V.17.1

६४. यथोक्तं भारद्वाजेन द्रव्यपृथक्त्वेऽभ्यावर्तते यथाज्यग्रहणे लवने स्तरणे चेति ।

—Rudradatta on ĀpŚS VII.9.2

६५. यथाह भारद्वाजः आम्नातप्रतिषेधे प्रतिनिधेरङ्गं बलीयः यथाल्पगावो यथापन्नदन् पशुरिति ।

—Rudradatta on ĀpŚS VII.12.4

६६. तथा धर्मा इत्यधिकृत्य भारद्वाजः ये सांनाय्योखायां पशुश्रपण्यां वपाश्रपण्यो-र्हृदयशूलं प्लक्षशाखामिति क्रियेरन्निति ।

—Rudradatta on ĀpŚS VII.17.4

६७. (अ) उक्तं भरद्वाजेन प्रचरण्या सोम इति ।

—Dhūrtasvāmin on ĀpŚS XXIV.1.26

(आ) तदुक्तं भारद्वाजेन व्यापृतायां स्रुवेण प्रचरण्या सोम इति ।

—Rudradatta on ĀpŚS XI.16.7

(इ) तथा च भरद्वाजः प्रचरण्या सोम इति । व्यापृतायां जुह्वामियं होमकार्येषु भवतीति ।

—Gopīnātha on SatS VIII.1 (p. 767)

६८. (अ) मेध्यास्तु ऐन्द्राग्नवत् भारद्वाजमतात् यथा आशिषां समुच्चयं प्रकृत्याह संसृष्टे च नानात्वत्वात्वाद्धरणप्रैषासेषु मेधयोश्चेति ।

—Rudradatta on ĀpŚS VIII.6.30

(आ) तथा च सवनीयान् प्रकृत्य भारद्वाजः तन्त्रं देवताग्रहणं आशिषस्तु समुच्चीयेरन् संसृष्टे च नानात्वत्वादिति ।

—Rudradatta on ĀpŚS XII.20.15
—Gopīnātha on SatS VIII.6 (p. 863)

---

## APPENDIX B

Citations which were discovered afterwards and are traced

१. अजसपक्षे दक्षिणाग्नेरपि मन्थनं प्रणयनं वा भरद्वाजमतात् ।

—Rāmāgnicit on ĀpŚS IX.9.14
cf. BhārŚS V.7.16

२. पयोधर्माः पशव इति भरद्वाजः ।

—Yajñeśvara, *BaudhŚS Karmāntaparibhāṣādisaṃgraha* (folio 91a)
cf. BhārŚS VII.6.9

३. तस्मिंस्तस्मिन्नग्नौ चरणं भरद्वाजमतात् ।

—Rāmāgnicit on ĀpŚS IX.1.14
cf. BhārŚS IX.1.14

४. (अ) समारूढोऽनुगतो वा यदि मध्यमानो विहरणकालसमीपे न जायेत यत्राग्निमन्यं लौकिकं पश्येत्तत आहृत्य विहृत्य होमः भरद्वाजमतात् ।

—Dhūrtasvāmin on ĀpŚS IX.3.5

(आ) यदि कालसंनिकर्ष इति प्रणयनकाल उक्तो भरद्वाजेन गार्हपत्ये निधाय प्रणयनविधानात् प्रणयनकालात् पूर्वमिति गम्यते ।

—Rāmāgnicit on ĀpŚS IX.3.5

cf. BhārŚS IX.4.5

५. तदपि प्राणि धनं वा भरद्वाजमतात् । तदुत्पूते दीयते ।

—Rāmāgnicit on ĀpŚS IX.13.2

cf. BhārŚS IX.15.8,9

६. (अ) आम्नातमन्त्रास्तु यौगपद्येन आपो मे होत्राशंसिनः देवदत्तयज्ञदत्तविष्णुमित्रा मानुषाः इति भरद्वाजमतात् उपदेशाच्च ।

—Dhūrtasvāmin on ĀpŚS X.1.9

(आ) नात्रोहः नामधेयग्रहस्यामन्त्रत्वात् । होतृकान् युगपद् वृणीत इति भरद्वाजमताच्च ।

—Rāmāgnicit ibid.

(इ) ततोऽध्वर्य्वादिमन्त्रैरर्धिनस्तृतीयिनः पादिनश्च ये न गृहीता होतृकेषु । न चायमूहो भरद्वाजपाठात् ।

—Dhūrtasvāmin on ĀpŚS X.1.14

cf. BhārŚS X.1.12

७. न दर्शपूर्णमासाभ्यामनिष्ट्वा सोमेन यजेतेति भारद्वाजः ।

—Yajñeśvara, ibid. (folio 211,216)

cf. BhārŚS X.2.11

८. भरद्वाजस्तु निष्कासे स्थालीगते निर्वापः । तेनाप्यविच्छित्तिर्यज्ञस्य ।

—Dhūrtasvāmin on ĀpŚS X.21.7

cf. BhārŚS XIV.24.3

९. भारद्वाजस्त्वाह विलुप्तसावित्रीको दुर्ब्राह्मण इति ।

—Yajñeśvara, ibid. (folio 218)

cf. Bhār Pariśeṣa 134

---

# INDEX A

## Index of Authorities quoted in the Śrautasūtra, Pariśeṣasūtra and Paitṛmedhikasūtra of Bharadvāja

पै = Paitṛmedhikasūtra      प = Pariśeṣasūtra

# INDEX C

## INDEX OF WORDS

The following is an alphabetical Index of the basic forms of words which occur in the Śrauta, the Paitṛmedhika and the Par'śeṣa Sūtras of Bharadvāja. Words occurring in the Mantras and Praiṣas have not been registered. Words denoting names of divinities and their derivatives, numerals, particles, pronouns, and words occurring very frequently have been ignored.